॥ श्रीः ॥

# ॥ शृङ्गारप्रकाशः ॥

## महाराजाधिराज श्रीभोजदेवविरचितः



## प्रथमः प्रकाशः

अच्छिन्नमेखलमलब्धदृढोपगूढ मप्राप्तचुम्बनमवीक्षितवक्त्रकान्ति ।
कान्ताविमिश्रवपुषः कृतविप्रलम्भसंभोगसख्यमिव पातु वपुः पुरारेः ॥ १ ॥

यत्पादपङ्कजरजःपरिमार्जितेषु चेतस्सु दर्पणतलामलतां गतेषु ।
शब्दार्थसंपद उदारतराः स्फुरन्ति विघ्नच्छिदेऽस्तु भगवान्स गणाधिनाथः ॥ २ ॥

आत्मस्थितं गुणविशेषमहंकृतस्य शृङ्गारमाहुरिह जीवितमात्मयोनेः ।
तस्यात्मशक्तिरसनीयतया रसत्वं युक्तस्य येन रसिकोऽयमिति प्रवादः ॥ ३ ॥

सत्त्वात्मनाममलधर्मविशेषजन्मा जन्मान्तरानुभवनिर्मितवासनोत्थः ।
सर्वात्मसंपदुदयातिशयैकहेतु र्जागर्ति कोऽपि हृदि मानमयो विकारः ॥ ४ ॥

तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसंपदि वल्लभस्य ।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य ॥ ५ ॥

शृङ्गारवीरकरुणाद्भुतरौद्रहास्य बीभत्सवत्सलभयानकशान्तनाम्नः ।
आम्नासिषुर्दश रसान्सुधियो वयं तु शृङ्गारमेव रसनाद्रसमामनामः ॥ ६ ॥

वीराद्भुतादिषु च येह रसप्रसिद्धिः सिद्धा कुतोऽपि वटयक्षवदाविभाति ।
लोके गतानुगतिकत्ववशादुपेतामेतां निवर्तयितुमेष परिश्रमो नः ॥ ७ ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अप्रातिकूलिकतया मनसो मुदादेर्यः संविदोऽनुभवहेतुरिहाभिमानः ।
ज्ञेयो रसः स रसनीयतयाऽऽत्मशक्तेः रत्यादिभूमनि पुनर्वितथा रसोक्तिः ॥ ८ ॥

रत्यादयोऽर्धशतमेकविवर्जितानि भावाः पृथग्विविधभावभुवो भवन्ति ।
शृङ्गारतत्त्वमभितः परिवारयन्तः सप्तार्चिषं द्युतिचया इव वर्धयन्ति ॥ ९ ॥

आभावनोदयमनन्यधिया जनेन यो भाव्यते मनसि भावनया स भावः ।
यो भावनापथमतीत्य विवर्तमानः साहंकृतौ हृदि परं स्वदते रसोऽसौ ॥ १० ॥

रत्यादयो यदि रसाः स्युरतिप्रकर्षे हर्षादिभिः किमपराद्धमतद्भिभिन्नैः ।
अस्थायिनस्त इति चेद्भयहासशोकक्रोधादयो वद कियच्चिरमुल्लसन्ति ॥ ११ ॥

स्थायित्वमत्र विषयातिशयान्मतं चेच्चिन्तादयः कुत उत प्रकृतेर्वशेन ।
तुल्यैव साऽऽत्मनि भवेदथ वासनायाः संदीपनात्तदुभयत्र समानमेव ॥ १२ ॥

अतः सिद्धमेतत्—रत्यादयः शृङ्गारप्रभवा एव एकोनपञ्चाशद्भावाः ; वीरादयो मिथ्यारसप्रवादाः ; शृङ्गार एवैकश्चतुर्वर्गैककारणं रस इति । स चानुभवैकगम्यत्वादसर्वविषयत्वाच्च दुरवसेयः, सम्यगभिनयेषु वा विदग्धशैलूषैः प्रदर्श्यमानः सामाजिकैरवधार्यते, प्रबन्धेषु वा महाकविभिर्यथावदाख्यायमानो विदुषां मनीषाविषयमवतरति । तत्र न तथा पदार्थाः प्रत्यक्षेण प्रतीयमानाः स्वदन्ते, यथा वाग्मिनां वचोभिरावेद्यमानाः । तदाह—

'अत्थविसेसा ण हि तह चित्तविआसं कुणान्ति सच्चविआ ।
जह उण ते उम्मिळळन्ति सुकइवआहिं सुसोसन्ता ॥'

अतोऽभिनेतृभ्यः कवीनेव बहुमन्यामहे, अभिनयेभ्यश्च काव्यमेवेति । तत्पुनः शब्दार्थयोः साहित्यमामनन्ति ; तद्यथा 'शब्दार्थौ सहितौ काव्यम्' इति । कः पुनः शब्दः ? येनोच्चारितेनार्थः प्रतीयते । स च द्वादशधा—प्रकृतिः, प्रत्ययः, उपस्कारः, उपपदम्, प्रातिपदिकम्, विभक्तिः, उपसर्जनम्, समासः, पदम्, वाक्यम्, प्रकरणम्, प्रबन्धः, इति । कोऽर्थः ? यः शब्देन प्रत्याय्यते । स च द्वादशधा—क्रिया, कालः, कारकम्, पुरुषः, उपाधिः, प्रधानम्, उपस्कारार्थः, प्रातिपदिकार्थः, विभक्त्यर्थः, वृत्त्यर्थः, पदार्थः, वाक्यार्थः, इति । किं साहित्यम् ? यः शब्दार्थयोः संबन्धः । स च

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्वादशधा—अभिधा, विवक्षा, तात्पर्यम्, प्रविभागः, व्यपेक्षा, सामर्थ्यम्, अन्वयः, एकार्थीभावः, दोषहानम्, गुणोपादानम्, अलङ्कारयोगः, रसावियोगः, इति ।

तत्र यद्यपि 'न केवला प्रकृतिः प्रयोक्तव्या न च केवलः प्रत्ययः' इति प्रयोगनियमः, तथाऽपि धर्मनियमाय शास्त्रप्रक्रियाव्यवहारे प्रकृतिप्रत्ययविभागकल्पनया शब्दार्थभावनायां प्रत्ययात्प्रथममुपादानकारणमिव योपादीयते तां प्रकृतिरिति व्यपदिशन्ति । सा त्रिधा—धातुरूपा, प्रत्ययरूपा, प्रातिपदिकरूपा च । तत्र धातवः षोढा—परिपठिताः, अपरिपठिताः, परिपठितापरिपठिताः, प्रत्ययधातवः, नामधातवः, प्रत्ययनामधातवश्चेति । तेषु परिपठिता भूवादयः ; यथा—

भूयात्तेषां कुले जन्म जायन्तां तेषु सम्पदः ।
येषां स्वमिति मन्वानाः स्वीकुर्वन्ति स्वमर्थिनः ॥

कविः सृजति काव्यानि हृद्यादधति सज्जनाः ।
सूते मुक्ताः पयोराशिर्विहन्ति तरुणीस्तनाः ॥

न रुणत्सीन्द्रियग्रामं न शृणोषि गुरोर्वचः ।
नोपार्जयसि मित्राणि कथं गृह्णास्यरिश्रियः ॥

अपरिपठिता आन्दोलयत्यादयः ; यथा—

नोपानान्दोलयन्नेव प्रेङ्खोलयति मे मनः ।
पवनो वीजयन्नाशा मानाशामुच्चुलुम्पति ॥

तडित्खचयतीवाशा नसन्ते शर्म बर्हिणः ।
पान्थस्त्रीश्वासवेधौष्ण्यं विधमन्त्यब्दवायवः ॥

मिलन्त्याशासु जीमूता विक्लबन्ते दिवि ग्रहाः ।
तापं क्षपयति प्रावृट् क्षीयन्ते कामिविग्रहाः ॥

ये सूत्रेष्वेव पठ्यन्ते न भूवादिषु ते परिपठितापरिपठिताः स्कु इत्यादयः ; यथा—

अनुस्कुनुहि मा मन्तून् वसन्तो मानघस्मरः ।
दूति द्रुतमृतीयस्व जिजावयिषति स्मरः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मुसलक्षेपहुंकारस्तोमैः कलमखण्डिनि ।
कुचविष्कम्भमुत्तभ्नन्निष्टभ्नातीव ते स्मरः ॥

पतयालूनि चेष्टासु मनांसि गृहयालवः ।
यूनामेकेन रूपेण योषितो दाह्यसातयः ॥

सनाद्यन्ताः प्रत्ययधातवः ; यथा--

मीमांससे न शास्त्राणि कृतार्थयसि नार्थिनः ।
गोपायसि न संत्रस्तान् किमुद्धतमटाट्यसे ॥

सूर्यीयति सुधारश्मिं नरकीयति नन्दने ।
कामं कामयमाना त्वां सा जीवन्ती मृतायते ॥

कपोलौ लोहितायेते बाष्पायेते विलोचने ।
प्रियप्रणामकाम्यन्ती कृशाङ्गि कलहायसे ॥

कण्ड्वादयो नामधातवः ; यथा--

कण्डूयति न यो मर्म नर्मणा यो हृणीयते ।
उरुष्यति रुषं यः स राजा राज्यं भिषज्यति ॥

वल्गूयति न योऽसाधुमसूयति न साधवे ।
मन्तूयति न मान्याय महत्सु स महीयते ॥

कमिषुध्यन्तु यज्वानः कं मगध्यन्तु मागधाः ।
कमर्थिनः कुषुभ्यन्तु रामेऽरण्यं भुरण्यति ॥

कथं पुनः कण्ड्वादिर्नामधातुश्च भवति--

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि ।
आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ॥'

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

येभ्यः परिपठितधातुभ्यो नामत्वसिद्धये नामभ्यो वा धातुत्वसिद्धये क्विवादिप्रत्यया लुप्यन्ते, ते प्रत्ययेन नामानि च धातवश्चेति प्रत्ययनामधातवः--होडगल्भक्लीबप्रभृतयः ; यथा--

गिरो गीर्ब्रह्म वामाशीः श्रियः प्रतिभुवौ भ्रुवौ ।
शत्रुशोर्मित्रपूर्बाहुर्युधि ते बन्धना सजूः ॥

होडसे नाभिजातेषु क्लीबसे नाभिमानिषु ।
विदग्धसि न मुग्धेषु नाप्रगल्भेषु गल्भसे ॥

सविता विधवति विधुरपि सवितरति तथा दिनन्ति यामिन्यः ।
यामिनयन्ति दिनान्यपि सुखदुःखवशीकृते मनसि ॥

एवं कंसवधमाचष्टे कंसंघातयति, आरात्रि विवासमाचष्टे रात्रिं विवासयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयति, उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयतीति । अत्र 'आख्यानात्कृतस्तदाचष्टे' इति णिच्, 'कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' 'आङ्लोपश्च कालात्यन्तसंयोगे मर्यादायाम्' 'नक्षत्रयोगे ज्ञि' 'चित्रीकरणे प्रापि' इति स्मर्यते ॥

प्रकृतिः षट्प्रकारैषा धातुरूपा निरूपिता ।
अथ प्रत्ययरूपाऽपि षट्प्रकारैव कथ्यते ॥

प्रत्यया हि सुतिङ्कृत्तद्धितधातुप्रत्ययस्त्रीप्रत्ययभेदात् षट्प्रकाराः ; तदन्ता प्रकृतिरपि प्रत्ययरूपा षट्प्रकारैव भवति । सा सुप्प्रत्ययान्ता यथा—अहंयुः, शुभंयुः, सायन्तनम्, चिरन्तनम्, त्वयका, मयका, आमुष्यायणः, अप्सव्यः, प्राह्णेतराम्, प्रगेतराम्, पूर्वाह्णेतनम्, समांसमीना, इति । तिङ्प्रत्ययान्ता यथा--पचतितराम्, गच्छतितमाम्, स्पृशतिरूपम्, जल्पतिकल्पम्, जिघ्रतिदेश्यम्, पश्यतिदेशीयम्, आस्तिकः, नास्तिकः, पचतकि, भिन्धकि, पचतभृज्जता, खादतमोदता, इति । कृत्प्रत्ययान्ता यथा—कृत्रिमम्, भृत्रिमम्, सेकिमम्, साङ्कूटिनम्, सांराविणम्, व्यावक्रोशी, व्यावहासी, श्येनंपाता, तैलंपाता, जित्वरी, आढ्यंकरणी, इति । तद्धितप्रत्ययान्ता यथा—गार्ग्यायणः, दाक्षायणः, वार्ष्यायणिकः, वार्ष्यायणीयः, फाण्टाहृतः, फाण्टाहृतायनिः, आभिजित्यः, कौञ्जायन्यः, कुतस्त्यः, तत्रत्यः, पचतितराम्, पचतितमाम्, इति । धातुसंज्ञाप्रत्ययान्ता यथा—चिकीर्षा, कण्डूया, पुत्रीया, कारणा, मिश्रणा, मृगया, अटाट्या, सासहिः, यायावरः, यायजूकः, चिकीर्षुः, चङ्क्रमणः, इति । स्त्रीप्रत्ययान्ता यथा—गाङ्गेयः, सौदामेयः, कारीषगन्धेयः, द्रौपदेयः, गौरेयः, शार्ङ्गरवेयः, काद्रवेयः,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कामण्डलेयः, यौवतेयः, सौरभेयः, बहुस्त्रीकः, सुवधूकः, इति । अथ कथं यौवतेयः इति प्रत्ययप्रकृतावुदाहृतम् ? यावता 'यूनस्तिः' (पा. ४. १. ७७.) इत्येतस्य तद्धितसंज्ञया प्रातिपदिकत्वमेव । सत्यमेतत्; किं तु स्त्रीसामान्यपर्यायो युवतिशब्दः प्रकृत्यन्तरमस्ति; यथाऽऽह-- 'धर्मार्थाङ्गविद्याकालाननुपरोधयन् कामसूत्रं तदङ्गविद्याश्च पुरुषोऽधीयीत, प्राग्यौवनाद्युवतिः' (कामसू. ३.) इति । तस्य, 'यूनस्तिः' इत्येतस्यैव वा 'एरक्तिनः' इति विभाषितङीषो ढगुत्पत्तिः; यथा आदितेयः, सौरभेयः, इति; अथ काद्रवेयः, कामण्डलेयः, इति कथम्? ङ्यापोरप्रातिपदिकत्वेऽपि हि 'ङ्याप्प्रातिपदिकात्' (पा. ४. १. १.) इति विशेषविधानात्, 'यूनस्तिः' इत्येतस्य तु तद्धितत्वात् अस्तु सुबुत्पत्तिः; ऊङस्तु प्रत्ययत्वेन सा न सिध्यति; समर्थाच्च तद्धितेन भवितव्यम् । अन्तवद्भावाद्भविष्यति; तथा हि—ब्रह्मबन्धूरित्यादौ 'अकः सवर्णे दीर्घः' (पा. ६. १. १०१.) इति द्वयोरेकत्वं भवति । यद्येवं 'स्त्रीभ्यो ढक्' (पा. ४. १. १२०.) इति ढक् न सिध्यति, सोऽप्यादिवद्भावाद्भविष्यति । 'साऽस्य देवता' (पा. ४. २. २४.) इति ज्ञापकादूङुत्पत्तेः प्रागेव वा सुबुत्पत्तिः इति ॥

उक्ता षोढैवमेषाऽपि प्रकृतिः प्रत्ययात्मिका ।
अथातः प्रातिपदिकरूपा षोढैव कथ्यते ॥

## ॥ प्रातिपदिकप्रकृतिः ॥

तत्र नामाव्ययानुकरणकृत्तद्धितसमासाः प्रातिपदिकानि; यदाह--'अर्थवदधातुरप्रत्ययः प्रातिपदिकम्' (पा. १. २. ४५.) 'कृत्तद्धितसमासाश्च' (पा. १. २. ४६.) 'निपातस्य चानर्थकस्य प्रातिपदिकसंज्ञा वक्तव्या' (म. भा. वा. १. २. ४५.) इति; तत्रार्थवद्ग्रहणेन नामाव्ययानुकरणानि गृह्यन्ते, कृत्तद्धितसमासास्तु कण्ठोक्त्या इति । नन्वेतेऽप्यर्थवन्त एव । सत्यमेतत्; किं तु कृतस्तद्धिताश्च प्रत्ययाः; तेषामप्रत्ययग्रहणात्प्रातिपदिकत्वं न प्राप्नोतीति कृत्तद्धितग्रहणेन तदुपसंगृह्णाति । समासग्रहणेन त्वर्थवत्समुदायस्य समासस्यैव प्रातिपदिकसंज्ञेति ज्ञापयन् तथाविधस्य वाक्यस्यैतां निवर्तयति ॥

तत्रानपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि । तानि द्विधा--आविष्टलिङ्गानि, अनाविष्टलिङ्गानि चेति । तेषु जातिद्रव्यपरिमाणाभिधायीन्याविष्टलिङ्गानि । तत्र जातिर्द्विधा--आकृतिव्यङ्ग्या, उपदेशव्यङ्ग्या च; तयोराद्या यथा--गौः, मृगः, पक्षी, सर्पः, सिंहः, वृक्षः, कुमारी, कुण्डम्, स्त्री, पुमान्, नपुंसकम्, इति । द्वितीया यथा--ब्राह्मणः, गार्ग्यः, कठः, क्षत्रियः, वैश्यः, शूद्रः, मूर्धाभिषिक्तः, अम्बष्ठः, पारशवः, सूतः, वैदेहकः, चण्डालः, इति । द्रव्यं द्विधा--सापेक्षम्, अनपेक्षं च; तयोराद्यं यथा—गुरुः, पिता, पुत्रः, भ्राता, जामाता,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मित्रम्, माता, स्वसा, दुहिता, याता, ननान्दा, भार्या, इति । द्वितीयं यथा—चैत्रः, मैत्रः, इन्द्रः, उपेन्द्रः, चन्द्रः, सूर्यः, कालः, आकाशः, प्राची, प्रतीची, शची, लक्ष्मीः, इति । परिमाणं द्विधा—नियतम्, अनियतं च; तयोराद्यं यथा—द्रोणः, खारी, पलम्, भारः, क्रोशः, योजनम्, निवर्तनम्, नल्वः, पणः, पुराणः, गणः, अक्षौहिणी, इति । द्वितीयं यथा—संघः, पूगः, सार्थः, समाजः, वर्गः, श्रेणिः, कुटुम्बम्, परिषत्, पङ्क्तिः, यूथम्, वनम्, सेना, इति । गुणसंख्यावचनसर्वनामान्यनाविष्टलिङ्गानि; तेषु गुणो द्विधा—अनुरञ्जकः, अननुरञ्जकश्च । तत्रानुरञ्जकयोगात्तदनुरक्तानि यथा—श्वेतः, स्वादुः, शीघ्रः, मन्दः, दीर्घः, ह्रस्वः, ऋजुः, वक्रः, मृदुः, कठिनः, युवा, वृद्धः, इति । अननुरञ्जकयोगात्तद्विपरीतानि यथा—दक्षः, जिह्मः, जडः, प्राज्ञः, खलः, साधुः, स्निग्धः, क्रूरः, शूरः, भीरुः, लघुः, गुरुः, इति । संख्या द्विधा—लिङ्गवती, अलिङ्गा चेति; तयोराद्या यथा—एकः, एका, एकम्; द्वौ, द्वे, द्वे; उभौ, उभे, उभे; त्रयः, तिस्रः, त्रीणि; चत्वारः; चतस्रः, चत्वारि, इति । द्वितीया यथा—पञ्च प्रातिपदिकार्थाः, पञ्च वृत्तयः, पञ्च पदजातानि, षड्विषयाः, षड्बुद्धयः, षडिन्द्रियाणि, अष्टौ वसवः, अष्टौ मूर्तयः, अष्टौ वर्णस्थानानि, दश दिशः, षोडश पदार्थाः, अष्टादश पुराणानि, इति । सर्वनामानि द्विधा—सर्वादीनि असर्वादीनि च; तेषु आद्यानि यथा—सर्वः, विश्वः, अन्यः, इतरः, कतमः, यः, सः, एषः, अयम्, त्वम्, अहम्, इति । द्वितीयानि यथा—प्रथमः, चरमः, अल्पः, कतिपयः, पूर्वः, परः, अपरः, दक्षिणः, उत्तरः, स्वः, अन्तरः, सकलः, कृत्स्नः इति ॥

प्रायेणालिङ्गसंख्याशक्तीन्यव्ययानि । तानि षोढा—अव्ययनिपातगत्युपसर्गकर्मप्रवचनीयविभक्तिप्रतिरूपभेदात् । तेषु प्रायेण शक्तिसंख्यायोगात्स्वरादीन्यव्ययानि; यदाह—

'सदृशं त्रिषु लिङ्गेषु सर्वासु च विभक्तिषु ।
वचनेषु च सर्वेषु यन्न व्येति तदव्ययम् ॥' (गोपथब्रा. १. १. २६. a.) इति ।

तानि द्विधा—सत्त्वगन्धीनि असत्त्वगन्धीनि चेति । तेषु सत्त्वगन्धीनि षोढा—द्रव्यरूपाणि, गुणरूपाणि, क्रियारूपाणि, जातिरूपाणि, संज्ञारूपाणि, संबन्धिरूपाणि चेति । असत्त्वगन्धीन्यपि षोढैव—क्रियापेक्षीणि, क्रियाद्रव्यापेक्षीणि, क्रियाविशेषणानि, क्रियाद्रव्यविशेषणानि, क्रियाविष्टरूपाणि, क्रियाद्रव्याविष्टरूपाणि चेति । तत्र सत्त्वगान्धिभेदेषु द्रव्यरूपाणि यथा—स्वः, दिवः, भुवः, विहायसा, रोदसी, आपः, भूः, ऋचः, शम्, महः, तपः, हाहा, हूहू इति; गुणरूपाणि यथा—शश्वत्, आवत्, नृवत्, कूपत्, कुवत्, सामि, साचि, द्राक्, स्राक्, ज्योक्, मनाक्, ईषत् इति; क्रियारूपाणि यथा—नमः, स्वस्ति, स्वाहा, स्वधा, वषट्, वौषट्, श्रौषट्, हन्त, अच्छ, ववं, ववे, भाव इति; जातिरूपाणि यथा—कम्, शम्, योः, मयः, सायम्, प्रातः, अस्तम्, नक्तम्, दिवा, दोषा, ह्यः, श्वः, इति; संज्ञारूपाणि यथा—क्विप्, सः, ओम्, स्वाहा, ह्रां, ह्रीं, क्लीं, ब्रूं, दिङ्,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

हेङ्, ऋङ्, जुङ्, दुङ्, इति; संबन्धिरूपाणि यथा—अन्तः, अन्तरा, ऊर्ध्वम्, बहिः, पारे, मध्ये, समया, निकषा, आरात्, विष्वक्, पुरः, पश्चात्, इति। असत्त्वगन्धिभेदेषु क्रियापेक्षीणि यथा—द्वन्द्वम्, यथायथम्, मिथः, अन्योऽन्यम्, परस्परम्, इतरेतराम्, परोपराम्, उत्तराधरम्, अधरोत्तरम्, इति; क्रियाद्रव्यापेक्षीणि यथा—साकम्, सार्धम्, सह, समम्, अमा, विना, ऋते, पृथक्, नाना, इति; क्रियाविशेषणानि यथा—अभीक्ष्णम्, मुहुः, पुनः, भूयः, युगपत्, अजस्रम्, अनिशम्, शनैः, उपांशु, मङ्क्षु, झटिति, प्रायः, इति; क्रियाद्रव्यविशेषणानि यथा—अलम्, बलवत्, सुष्ठु, मृषा, वृथा, मिथ्या, मुधा, अद्धा, ऋधक्, उच्चैः, नीचैः, इति; क्रियाविग्रहरूपाणि यथा—शश्वत्, सपदि, संप्रति, पुरा, असंप्रति, सना, सांप्रतम्, जातु, बाढम्, फाण्टम्, स्वयम्, कामम्, इति; क्रियाद्रव्याविग्रहरूपाणि यथा—आविः, प्रादुः, तिरः, साक्षात्, अलम्, प्राध्वम्, सत्, असत्, धिक्, हिरुक्, तूष्णीम्, जोषम्, इति॥

जात्यादिप्रवृत्तिनिमित्तानुपग्राहित्वेनासत्त्वभूतार्थाभिधायिनोऽलिङ्गसंख्याशक्तय उच्चावचेष्वर्थेषु निपतन्तीत्यव्ययविशेषा एव चादयो निपाताः; यदाह—'चादयोऽसत्त्वे' (पा- १. ४. ५७.) इति। ते खलु विध्यर्थाः, अर्थवादार्थाः, अनुवादार्थाः, निषेधार्थाः, विधिनिषेधार्थाः, अविधिनिषेधार्थाश्च इति षोढा संभवन्ति। तेषु मङ्गलम्, अधिकारः, संभ्रमः, नियोगः, समुच्चयः, विकल्पः, इति विधिः; कुत्सा, प्रशंसा, विषादः, हर्षः, ईर्ष्या, विस्मयः, इत्यर्थवादः; स्मरणम्, उपमा, अभ्युपगमः, अनुप्रश्नः, परकृतिः, पुराकल्पः, इत्यनुवादः; प्रतिषेधः, निवारणम्, अपाकरणम्, असूया, गर्हणा, विनिग्रहः, इति निषेधः; संबोधनम्, अनुकम्पा, वितर्कः, प्रश्नः, पक्षान्तरम्, हेत्वपदेशः इति विधिनिषेधः; पदपूरणम्, पादपूरणम्, वाक्यपूरणम्, अलङ्कारपूरणम्, वाक्यालङ्कारः, पदसंस्कारः, इत्यविधिनिषेधः॥

तेषु ओम्, अथ, स्वस्ति, दिष्ट्या, नह, स्म, शश्वत्, कच्चित्, इति मङ्गलार्थाः। यथा—ओम्, अग्निमीळे पुरोहितम्, अथातो ब्रह्मजिज्ञासा, स्वस्ति नो मिमीतामश्विना भगः, दिष्ट्या वर्धसे, नह भोक्ष्यसे भोगान्, ऊर्ध्वं मुहूर्तात् कटं करोतु स्म भवान्, शश्वदध्येष्यामहे, कच्चिदध्येष्यामहे, इति। अथ, अथो, यावत्, तावत्, अनु, पुनः, पश्चात्, भूयः, इत्यधिकारार्थाः; यथा—अथ शब्दानुशासनम्, अथो त्वमेष्यसि, यावत्संभवस्तावद्विधिः, मुनिं कणादमन्वतः, पुनः प्रभातं पुनरेव शर्वरी, पश्चादावां विरहगुणितम्, भूयश्चाह त्वमसि शयने, इति। यावत्, तावत्, ननु, पुरा, अङ्ग, हि, हन्त, सीम्, इति संभ्रमार्थाः; यथा—यावत्स एव समयः सममेव तावत्, ननु गच्छामि भोः, अधीष्व माणवक पुरा विद्योतते विद्युत्, अङ्ग पच, न हि पच, हन्त प्रशाधि, प्र सीमादित्योऽसृजत (ऋग्वे. २. २८. ४.); प्रासृजत् सर्वत आदित्यः इत्यर्थः। परम्, वै, वाव, एव, ह, अह, तु, उ, इति नियोगार्थाः; यथा—धर्मः सखा परमहो परलोकयाने, वेदो वै

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

धर्ममूलम्, द्वे वाव ब्रह्मणो रूपे, आत्मैवेदमग्र आसीत्, स होवाच, त्वमह ग्रामं गच्छ, आख्यास्यामि तु ते, सत्यमु ते वदन्ति (नि. १. ५.), इति। च, वा, आ, अपि, उत, अथ, अथो, तथा, इति समुच्चयार्थाः; यथा—अहं च त्वं च वृत्रहन् (ऋग्वे. ६. ४. ४१. ५.), वायुर्वा त्वा मनुर्वा त्वा (तै. १७. ७. २.), देवेभ्यश्च पितृभ्य आ, (ऋग्वे. ७. ६. २२. १.), दन्तैरपि नखैरपि, दैव्याः शमितार उत मनुष्याः (तै. ब्रा. ३. ६. ६.), देवानथ पितॄन्स्तुहि, अथो खल्वाहुः, हारीतोऽत्रिरहं तथा, इति। वा, अथ, अथो, यदि, चण्, चेत्, नेत्, मा, इति विकल्पार्थाः; यथा—राज्यं वा कर्तव्यं भाष्यं वा श्रोतव्यम्, ऋतौ व्यवेयादथानृतौ पर्ववर्जनम्, नदीषु स्नायादथो देवखाते, यदि शमः किं तपसा, त्वं च गन्ता किमत्र मे, उपाध्यायश्चेदागच्छेदाशंसे युक्तोऽधीयीय, नेज्जिह्मायन्तो (न्त्यो) नरकं पताम, (नि. १·११.), माकदाचिदिदमपि स्यात्, इति। एवमन्येऽपि प्रयोगानुसारतो द्रष्टव्याः। एते च विधेरन्यत्रापि वेदितव्या इति॥

अर्थवादे—हा, धिक्, चित्, नाम, किम्, ह, अपि, जातु, इति कुत्सार्थाः; यथा—हा किमेवं प्रवर्तसे, धिक्प्रमादः, कुल्माषांश्चिदाहर (नि. १·४·१४), को नामायं सवितुरुदयो यत्र न स्वे स्फुरन्ति, किमधीते देवदत्तः, त्वं ह ब्राह्मणोऽसि, अपि सिञ्चेत्पलाण्डुम्, तत्र जातु गमिष्यसि इति। तु, पश्य, पश्यत, अह, अहो, यथा, यावत्, चित्, इति प्रशंसार्थाः; यथा—यस्तु माणवको भुङ्क्ते, पश्य माणवको भुङ्क्ते, पश्यत माणवको भुङ्क्ते, अह माणवको भुङ्क्ते, अहो देवदत्तः पचति शोभनम्, यथा पचति शोभनम्, यावत् करोति चारु, आचार्यश्चिदिदं ब्रूयात् (नि. १·४·१२), इति। ही, ई, हा, हन्त, बत, नाम, भोः, कष्टम्, इति विषादार्थाः; यथा—ही महीशो दृश्यते, ई ईदृशः संसारः, हा प्रिये जानकि, निराश्रया हन्त हता मनस्विता, अहो बत महत्कष्टम्, क्व नाम गमिष्यसि, भोः श्रान्तोऽस्मि, कष्टं भोः कष्टम्, इति। दिष्ट्या, हन्त, बत, वट्, बाट्, कत्, कथम्, कच्चित् इति हर्षार्थाः; यथा—दिष्ट्या न मृतोऽसि सखे, हन्त जीविताः स्मः, सैवेयं बत मे प्रिया, बण्महाँ असि सूर्य (ऋग्वे. ८·१०९·११.), बाट् ताभ्यः स्वाहा (तै. ब्रा, १·४·५·३), कद्रुद्राय प्रचेतसे (ऋग्वे १ ४३·१), कथं वत्सो मे रामभद्रः, कच्चिज्जीवति पार्वती, इति। ह, अह, प्रत्युत, परम्, किं तु, अपि, नाम, यदि नाम, इति ईर्ष्यार्थाः; यथा—स्वयं हौदनं भुङ्क्ते उपाध्यायं सक्तून् पाययति, स्वयमह रथेन याति उपाध्यायं पदातिं गमयति, प्रत्युत मामुपालभसे, देवो भवान् परं भृङ्गिरिटिः, विद्वानसि किं तु कितवः, मातर्यपि मृतायां दीव्यसि, भवतु नाम कामचारी तथाऽप्यसौ पतिरेव, असि तपस्वी यदि नाम मूर्खः, इति। ही, अहो, अहह, चन, नाम, पश्य, पश्यत, बत इति विस्मयार्थाः; यथा—हतविधिलसितानां ही विचित्रो विपाकः, अहो रूपमस्याः, अहह माहात्म्यं महीपतेः, याचिता ये न कुप्यन्ति पुरुषाः केचनैव ते, अन्धो नाम पर्वतमारोक्ष्यति, पश्य माणवको ब्रूते, पश्याकाशेन याति, कोऽयं बत दृश्यते, इति। एवमन्येऽपि यथाप्रयोगमनुसर्तव्याः। एते चार्थवादादन्यत्रापि वेदितव्या इति॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अनुवादे—आम्, आः, आ, अये, नाम, नूनम्, हुम्, ओम्, इति स्मरणार्थाः; यथा—आं सैषा पञ्चवटी, आः स तस्याः संलापः, आ ज्ञातं स जटायुरेषः, अये देवो दाशरथिः, स नामायं भविष्यति, नूनमेषा जानकी, हुं मअरन्दो, ओमेवमेतत्, इति। इव, वा, यथा, चित्, न, नकिर्, नु, प्रति, इत्युपमार्थाः; यथा—राजेव ब्रूयात्, मगी वोष्ट्रस्य लम्बेते, ज्येष्ठो भ्राता यथा पिता, अग्निश्चित् भायात्, मृगो न भीमः कुचरो गिरिष्ठाः (ऋग्वे. २·२·२४-२.), पावको नकिर्माणवकः, वक्षस्य नु ते पुरुहूतवयाः शाखाः (ऋग्वे. ४·६·१७·३), अभिमन्युरर्जुनतः प्रति, इति। ओम्, तथा, आम, नाम, अथ किम्, श्रत्, सत्यम्, बाढम्, इत्यभ्युपगमार्थाः; यथा—ओमिति होवाच, स तथेति प्रतिज्ञाय, आम यथा ब्रवीषि, एवं नाम भवतु, गमिष्यति भवान् अथ किम्, श्रद्दधे यथाऽऽत्थ, सत्यमसारः संसारः बाढमेषोऽस्मि कामन्दकी संवृत्तः, इति। ननु, ही, नु, हुम्, नकिल, ननुकिल, एवम्, शश्वत्, इत्यनुप्रश्नार्थाः; यथा—अकार्षीः कटं देवदत्त? ननु करोमि भोः? आकर्षं ही ह्यः? कथं नु करिष्यामि? (नि. १·४·१७.) अपि भवान् मकरन्दः? हुं स एवास्मि। न किलैवम्? ननु किलैवम्? (नि. १-५·७) एवमेतत्? शश्वदेवम्? (नि. १-५·११.) इति। इति, एवं किल, खलु, ननु, स्म, अपि, नाम, इति परकृत्यर्थाः; यथा—नित्यः शब्द इति मीमांसकाः अनित्य एवेति तार्किकाः, एवं किलोपाध्यायः पठति, धन्याः खलु धर्ममाचरन्ति, नन्वेतदकार्षीत् सर्वोऽपि, इति स्मोपाध्यायः कथयति, सोऽपि मां जानात्येव, को नाम न मन्यते, इति। पुरा, शश्वत्, इतिह, इतिकिल, इतिस्म, इतिहस्म, यत्किल, शश्वत्किल, इति पुराकल्पार्थाः; यथा—नलेन स्म पुराधीयते, एवं शश्वदिति, इति ह चकार, इति किल श्रूयते पुराणेषु, इति स्म ब्रह्मवादिनः पूर्वे वदन्ति, इतिहस्म तत्रभवान् भागुरायणः, एवमिह गुरुभ्यः श्रूयते यत्किलेह तरुषण्डे पाण्डवा ऊषुः, शश्वत्किलेदमित्थं बभूव, इति। एवमन्येऽपि यथाप्रयोगमनुसर्तव्याः। एते चानुवादतोऽन्यत्रापि द्रष्टव्या इति॥

निषेधे—न, नञ्, अ, अन, नो, नकिर्, किम्, नहि, इति प्रतिषेधार्थाः; यथा—युगपन्नैकधर्माणाम्, नेन्द्रं देवममंसत (ऋग्वे. ८·३·४.); शश्वत्त्वमब्राह्मण इव भाषसे, अनोपमा ते बुद्धिः, तस्य तुल्योऽपि नो भवान्, नकिर्ग्रामं गमिष्यसि, किं गतेन करिष्यसि, न हि नहि प्रेमानिमित्ते सति, इति। मा, माङ्, मास्म, माकिर्, अलम्, खलु, कृतम्, पर्याप्तम्, इति निवारणार्थाः; यथा—मा करिष्यसि, मा कार्षीः (नि. १·५·८), मास्म करोः, माकिर्नेशन्माकीं रिषत् (ऋग्वे. ६-५४·७), अलं कृत्वा, कृतं साहसेन, पर्याप्तं भयेन, इति। आः, ई, ओम्, हुम् फट्, धिक्, खट्, अरे, इत्यपाकरणार्थाः, यथा—आः, पाप प्रतिहतोऽसि, ई इतो निष्पत, ओं किमेवं वदसि, हुं णिल्लज्जापसर, फट् अपथ्याकरोऽसि, धिक् त्वा जाल्म खट् दुष्टे पिशाचि, अरे दुरात्मन्, इति। अङ्ग, हि, अहो, हंहो, ए, हये, अरे, अररे, इत्यसूयार्थाः; यथा—अङ्ग कूजन्य इदानीं ज्ञास्यसि जाल्म, स हि व्याहरतु कथं हि व्याकरिष्यति (नि. ५. ५.), वृषलग्राममहो गमिष्यसि, हंहो गमिष्यसि ग्रामम्, ए देव

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

दत्त, हये जाये मनसा तिष्ठ घोरे (ऋग्वे. १०·९५·१), अरे नाहमुन्मत्तः, अररे महाराजं प्रति कुतः क्षत्रियाः, इति। कथम्, यत्, यदि, यदा, जातु, अपि, यच्च, यत्र, इति गर्हणार्थाः; यथा—कथं नाम तत्रभवान् वृषलं याजयेत्, यत्तत्रभवान् वृषलं याजयेत्, यदि तत्रभवान् वृषलं याजयेत्, यदा तत्रभवान् वृषलं याजयेत्, जातु तत्रभवान् वृषलं याजयेत्, अपि तत्रभवान् वृषलं याजयते, यच्च तत्रभवान् वृषलमयाजयिष्यत्, यत्र तत्रभवान् वृषलमयाजयिष्यत्, इति। ह, अह, त्वै, न्वै, वै, वाव, वरम्, ननु, इति विनिग्रहार्थाः; यथा—अयमिदं ह करिष्यति (नि. १·५·२.), अयमहेदं करोतु, अयं त्वै तत्र गन्ता, अयं न्वै ते नियोगः, बृहस्पतिर्वै देवानां पुरोहित आसीत्, अयं वाव हस्त आसीत्, वरमद्य कपोतः श्वो मयूरात्, ननु वक्तृविशेषनिःस्पृहा गुणगृह्या वचने विपश्चितः (किराता० २·५.)। एवमन्येऽपि यथाप्रयोगमनुसर्तव्याः। एते च निषेधतोऽन्यत्रापि द्रष्टव्याः इति॥

विधिनिषेधे—हे, है, अयि, अङ्ग, हो, अहो, हंहो, भोः, इति संबोधनार्थाः; यथा—हे देवदत्त, है यज्ञदत्त, अयि विष्णुमित्र, अङ्ग माणवक, हो अग्निहोत्रिन्, अहो महाराज, हंहो महाब्राह्मण, भोः पान्थ प्रवर्तस्व निवर्तस्व वा, इति। अ, इ, उ, ए, ओ, आ, ई, ऊ, इत्यनुकम्पार्थाः; यथा—अ अत्रेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, ए इत एहि, ओ ओषति त्वां तरणिः, आ आगतस्ते तातः, ई ईक्षितोऽसि गच्छ, ऊ ऊषरे बीजं वपसि, इति। किम्, नु, नूनम्, आहो, उत, स्वित्, वा, इव, इति वितर्कार्थाः; यथा—किमयं स्थाणुः किं पुरुषः, अहिर्नु रज्जुर्नु, न नूनमस्ति नो श्वः (ऋग्वे. २·४·१०·१.), स्थाणुरयमाहो पुरुषः, धूमोऽयमुत कपोतः, पद्ममेतन्मुखं स्विज्ज्ञाति, हन्ताहं पृथिवीमिमां निदधानीह वेह वा (ऋग्वे. ८·६·२७·३), ताम्यतीव वत्सो मे मकरन्दः, इति। सत्यम्, किम्, हि, कच्चित्, एवम्, अपि, अथ, उत, इति प्रश्नार्थाः; यथा—सत्यं भोक्ष्यसे? किं देवदत्तः पचति? कटं करिष्यसि हि? कच्चिज्जीवति ते माता? एवमेतद्देवदत्त? अपि क्रियार्थं सुलभं समित्कुशम् (कुमारसंभवम्)? देवोऽयमथ मानुषः? उत दण्डः पतिष्यति? इति। ननु, पुनः, तु, तर्हि, यावत्, यावता, अथो, चित्, इति पक्षान्तरार्थाः; यथा—नन्वरण्यमेतन्न गृहम्, स पठत्ययं पुनः शेते, स रोदित्ययं तु हसति, यद्येवं तर्हि गम्यते, जानेऽन्योऽयं यावत् स एव, जाने गतो भवान् यावताऽद्यापि न याति, अथो शरस्तेन मदर्थमुज्झितः, कश्चिद्भुङ्क्ते कश्चिद्भोजयति, इति। हि, नु, अतः, इति, यत् तत्, येन तेन, इति हेत्वपदेशार्थाः; यथा—इदं हि करिष्यति, वत्सक एहि किमिह नु ते धानकाः, अतस्त्वामर्थयामि, हस्तीति पलायते, यद्यं ददाति तत्सुभगः, येन लभते तेन स्तौति, इति। एवमन्येऽपि यथाप्रयोगमनुसर्तव्याः। एते च विधिनिषेधादन्यत्रापि वेदितव्याः॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अविधिनिषेधे—उ, उत, आहो, वै, हि, वा, खलु, स्वित्, इति पदपूरणार्थाः ; यथा—किमु, किमुत, उताहो, न वै, न हि, अथवा, न खलु, आहो स्वित्, इति। कम्, ईम्, सीम्, इत्, उ, तु, हि, च, इति पादपूरणार्थाः ; यथा—शिशिरं जीवनाय कम्, [नि. १-१०-१] एमेनं सृजाता सुते [ऋग्वे. १-१-१७-२], प्र सीमादित्यो असृजद्विधर्त्ता [नि. १-७], तमिद्वर्धन्तु नो गिरः [ऋग्वे. ८-९२-२१], अयमु ते समतसि, [ऋग्वे. १-३०-४], देवः स तु न मानुषः, इन्दवो वामुशन्ति हि [ऋग्वे. १-२४], विलोलदृष्टं हरिणाङ्गनासु च, इति। एते चान्ये च, नूनम्, इव, एव, इति, खलु, इत्यादयो वाक्यपूरणार्थाः ; यथा—विसीमतः सुरुचो वेन आवः [तै. सं. ४-२-८-२], नरं च नारायणमेव चेति, नूनं सा ते प्रति वरं जरित्रे [ऋग्वे. २-११-२१], कथमिवैतद्भविष्यति, एवाह्येव [तै. आ. १-२०-१], एवाहीन्द्र, अथो खल्वाहुः, अभीषु णः सखीनाम् [ऋग्वे. ४-३१-३], आ एवं नु मन्यसे, इति। भङ्गश्लेषभाषाश्लेषयमकवक्रोक्तिचित्रानुप्रासपदावृत्तिप्रश्नोत्तरप्रभृतयोऽलङ्काराः ; तदर्था यथा—न वार्यन्ते, न चार्यन्ते, न स्मार्यन्ते, न हसन्ति, न हीयन्ते, न वैरायते, इति भङ्गश्लेषे ; स हि अहो रणे कत्थतेपि योनराया इति भाषाश्लेषे ; योषितां गात्रं न खलूनं न खलूनम् इति यमकश्लोके ; शास्त्रं न खलु वोढव्यम् इति वक्रोक्तौ ; ननु होमथनाराद्यो द्योरा नाथ महो नु न इति चित्रे ; स हि महीशो वर्तते इत्यनुप्रासे ; प्रासेप्रासेऽमुना रणे इति पदावृत्तौ, का ननाद तिमिरादपि कालीति प्रश्नोत्तरे इति। आर्षिक आर्षिपुत्रक आर्षिक इत्येतानि वैदिकवाक्यानामलङ्कारहेतवो वाक्यालङ्कारार्थाः ; यथा—अथो खलु, त्वयि, तर्हि, अथ खल्वेतर्हि, अहो नु खलु भोः, हा धिक्कष्टं भोः, इति ह स्म भगवान् पुनर्वसुरात्रेयः, न ह वै सशरीरस्य सतः प्रियाप्रिययोरपहतिरस्ति, [छान्दो. ८-१२-१] न वा अरे जायायै कामाय जाया प्रिया भवति [बृहदा. ४-५] न वा उवेतन्म्रियसे न रिष्यसि, इति। पदसंस्कारस्तु द्विधा विधिनिषेधरूपाभ्याम् ; तयोः प्लुतविधिः, लडादिविधिः, पररूपादिविधिः, इति विधिरूपः ; पररूपादिप्रतिषेधः, संहिताप्रतिषेधः, पदादेशादिप्रतिषेधः, निघातप्रतिषेधः, इति निषेधरूपः। तत्र, 'हैहेप्रयोगे हैहयोः' 'ओमभ्यादाने' 'ब्रूहि प्रेष्यश्रौषड्वौषडावहानामादेः [पा. ८-२-८५-८७-९१], इति प्लुतविधिः ; यथा—देवदत्त है३, हे३ देवदत्त, ओम्३ अग्निमीडे पुरोहितम्, अग्निमा३ वह, अस्तु श्रौ३षट्, ब्रू३हि, वौ३षट्, इति। 'परेर्वर्जने' 'प्रसमुपोदः पादपूरणे' 'उपर्यध्यधसः सामीप्ये' इति द्विर्वचनविधिः ; यथा—परिपरि त्रिगर्तेभ्यो वृष्टो देवः, प्रप्रायमग्निर्भरतस्य शृण्वे, संसमिद्युवसे वृषन्, उपोप मे परामृश, किं नो दुदु हर्षसे दातवा, उपर्युपरिग्रामम्। 'यावत्पुरानिपातयोर्लट्,' 'जातुयदोर्लिङ्,' 'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' इति लडादिविधिः ; यथा—यावद्भुङ्क्ते, पुरा व्रजति, जातु तत्रभवान् वृषलं याजयेत्, यत् तत्रभवान् वृषलं याजयेत् ; अलं कृत्वा, खलु कृत्वा इति। 'ओमाङोश्च,' 'अव्यक्तानुकरणस्यात इतौ' 'आङ्माङोश्च' इति पररूपादिविधिः यथा—अद्योम्, अद्योढा, अद्येव झटिति,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

आच्छादयति, माच्छिदत् इति । 'एवे चानियोगे' 'नाम्रेडितस्य' 'न माङ्योगे' इति पररूपादिप्रतिषेधः; यथा--अद्यैव गच्छ, इहैव तिष्ठ, पटत् पटदिति करोति, मा कार्षीत्, मा स्म कार्षीत्, मा स्म करोत् इति । 'निपात एकाजनाङ्' 'ओत्' 'संबुद्धौ शाकल्यस्येतावनार्षे' [पा. १. १. १४. १५. १६.] इति संहिताप्रतिषेधः; यथा--अ अवेहि, इ इन्द्रं पश्य, उ उत्तिष्ठ, आ एवं नु मन्यसे, अहो, आश्चर्यम्, भानो इति, इति । 'न चवाहाहैवयुक्ते' [पा. ८. १. २४] 'नानोर्ज्ञः' [पा. १. ३. ५८] 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' [पा. ७. १. ३७] इति पदादेशादिप्रतिषेधः; यथा—ग्रामो युष्माकं च ग्रामोऽस्माकं च, ग्रामो युष्माकमेव ग्रामोऽस्माकमेव, पुत्रमनुजिज्ञासति, अस्नात्वा भुङ्क्ते इति । 'निपातैर्यद्यदिहन्तकुविन्नेच्चेच्चण्कच्चिद्यत्रयुक्तम्' (पा. ८. १. ३०.) 'चादिषु च' 'चवायोगे प्रथमा' [पा. ८. १. ५८. ५९.] इति निघातप्रतिषेधः; यथा—यद् देवदत्तः पचति, यदि देवदत्तः पचति, देवदत्तः पचति च खादति च, देवदत्तः पचति वा खादति वा, गर्दभांश्च कालयति वीणां च परिवादयति, गर्दभान् वा कालयति वीणां वा परिवादयति इति ॥

समासार्हा निपाता एव कतिपयेऽपि गतयः; तद्यथा—'प्रादयः क्रियायोगे [पा. १. ४. ५९] 'ऊर्यादिच्विडाचश्च' 'अनुकरणं चानितिपरम्' (पा. १. ४. ६१. ६२.) 'आदरानादरयोः सदसती' 'भूषणेऽलम्' 'अन्तरपरिग्रहे' पा. १. ४. ६३. ६४. ६५.) 'कणेमनसी श्रद्धाप्रतीघाते' 'पुरोऽव्ययम्' 'अस्तं च' (मा. १. ४. ६६. ६७. ६८.) 'अच्छ गत्यर्थवदेषु' 'अदोऽनुपदेशे' 'तिरोऽन्तर्धौ' (पा. १. ४. ६९. ७०. ७१.) 'विभाषा कृञि' उपाजेऽन्वाजे' साक्षात्प्रभृतीनि च' (पा. १. ४. ७२. ७३. ७४.) 'अनत्याधान उरसिमनसी' 'मध्येपदेनिवचने च' (पा. १. ४. ७५. ७६.) 'नित्यं हस्तेपाणावुपयमने' 'प्राध्वं बन्धने' 'जीविकोपनिषदावौपम्ये' (पा. १. ४. ७७. ७८. ७९.) 'ते प्राग्धातोः' 'छन्दसि परेऽपि' 'व्यवहिताश्च' (पा. १. ४. ८०. ८१. ८२.) इति । अथैतदुदाहरणानि--प्रपचति, पराकरोति, कारिकाकरोति, शुक्लीकरोति, पटपटाकरोति, पटत्करोति, खाट् करोति, सत्करोति, असत्करोति, अलंकृत्य, अन्तर्हत्य, कणेहत्य, मनोहत्य, पुरस्कृत्य, अस्तंगत्य, अच्छगत्य, अच्छोद्य, अदःकृत्य, तिरोभूय, तिरस्कृत्वा, तिरस्कृत्य, उपाजेकृत्वा, उपाजेकृत्य, अन्वाजे कृत्वा, अन्वाजेकृत्य, साक्षात् कृत्वा, साक्षात्कृत्य, मिथ्या कृत्वा, मिथ्याकृत्य, उरसि कृत्वा, उरसिकृत्य, मनसि कृत्वा, मनसिकृत्य, मध्ये कृत्वा, मध्येकृत्य, पदे कृत्वा, पदेकृत्य, निवचने कृत्वा, निवचनेकृत्य, हस्तेकृत्य, पाणौकृत्य, प्राध्वंकृत्य, जीविकाकृत्य, उपनिषत्कृत्य, उपनिषत्कृतम्, यदुपनिषत्करोति, यद्युपनिषत्करोति इति ॥

गतिविशेषा एव प्रादय उपसर्गाः ॥

प्रपरापसमन्ववनिर्दुर्व्याङ्न्यधयोऽप्यतिसूदभयश्च ।
प्रतिना सह लक्षयितव्याः पर्युपयोरपि लक्षणमत्र ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वष्टि भागुरिरल्लोपमवाप्योरुपसर्गयोः ।
हितादिषु समो म्लोपं पाठं चात्र श्रदन्तरोः ॥

एवमेते विंशतिः वपिसश्रदन्तर्भिः सहोपसर्गाः पञ्चविंशतिर्भवन्ति ॥

ते खलु--[१] वाचकाः, [२] द्योतकाः, [३] विशेषकाः, [४] सहाभिधायकाः, [५] कार्यार्थकाः, [६] निरर्थकाश्चेति षोढा विप्रथन्ते । तेषु [१] वाचका यथा—प्रगता ऋषभा अस्माद्वनात् प्रर्षभम् वनम्, परागता अलवोऽस्येति परालुः, अपगतो मन्युरस्य अपमन्युः, सङ्गतमक्ष्णेण समक्षम्, अनुप्राप्तोनासिकामनुनासिकः, अवक्रुष्टःकोकिलया अवकोकिलः, मक्षिकाणामभावो निर्मक्षिकम्, ऋद्ध्यभावो यवनानां दुर्यवनम्, विरुद्धः पक्षो विपक्षः, आदाय युध्यते तदित्यायुधम्, अत्ययो वातस्य निवातम्, अधिगतमक्ष्णेण अध्यक्षम्, अपिहितः शल इत्यपिशलः, अतीतः श्वानमतिश्वो वराहः, समृद्धिर्भद्राणां सुभद्रम्, उद्भूतोऽत्यर्थमुत्तमः, अभिलक्ष्यं मुखमस्याभिमुखः, प्रतिनिधेयः कायः प्रतिकायः, परिग्लानोऽध्ययनाय पर्यध्ययनः, उपेत्याधीयतेऽस्मादुपाध्यायः, एवम् अवगतवान् कोटं वकोटः, अपिहितः कायतीति पिकः, संपन्नं ब्रह्म बाभ्रवाणां सब्रह्म, श्रद्धीयत इति श्रद्धा, अन्तर्धीयते अन्तर्धिः, इति ॥

[२] द्योतका यथा—प्रतिष्ठते, पराक्रमते, अपकरोति, संक्रीडति, अनुकम्पते, अवधत्ते, निर्विवेश, दुर्ललितः, व्याददाति, आह्वयते, निशमयति, अधिकुरुष्व, अपिदधाति, अतिशेते सुरभिः, उल्लापयति, अभिधत्ते, प्रतीक्षते, परिणमते, उपायंस्त; एवं वधत्ते, पिधत्ते, श्रद्धत्ते, सहितः, अन्तर्दधाति इति ॥

[३] विशेषकास्तु द्विधा—प्रकृत्यर्थविशेषकाः, प्रत्ययार्थविशेषकाश्च; प्रकृत्यर्थविशेषका यथा—प्रवर्धते, पलायते, अपवदते, संसरति, अनुमन्यते, अवलोकते, निष्कर्षति, दुर्भवति, विलोकते, आलोकते, निषीदति, अधिवसति, अपिनह्यति, अतिवर्तते, सुभवति, उद्भवति, अभ्येति, प्रतिपद्यते, परिगणयति, उपदधाति, एवं वतंसः, पिनद्धवान्, सततम्, श्रद्धनः, अन्तर्भवति इति । प्रत्ययार्थविशेषका यथा—मनस्वी सुभवति सुमनायते, दुर्भवति दुर्मनायते, एवमभिमनायते; पुच्छमुदस्यति उत्पुच्छयते, व्यस्यति विपुच्छयते, पर्यस्यति परिपुच्छयते; भाण्डं समारचयति संभाण्डयते, चीवरं संचिनोति संचीवरयते; हस्तेनापक्षिपति अपहस्तयति, वर्मणा संनह्यति संवर्मयति, पाशेन संयच्छति संपाशयति, चूर्णैरवध्वंसयति अवचूर्णयति, तूलैरवकुष्णाति अवतूलयति, हस्तिनाऽतिक्रामति अतिहस्तयति, सेनयाऽभियाति अभिषेणयति, वीणयोपगायति उपवीणयति, वास्या परिच्छिनत्ति परिवासयति, श्लोकैरुपस्तौति उपश्लोकयति, लोमान्यनुमार्ष्टि अनुलोमयति, पाशान् विमोचयति विपाशयति,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तूस्तानि विहन्ति वितूस्तयति, रूपं निरीक्षते निरूपयति, वस्त्रं परिदधाति परिवस्त्रयति, पर्याणमुत्तानयति उत्पर्याणयति, इति ॥

नन्वेतेऽपि क्रियाविशेषाणां वाचकाः कस्मान्न भवन्ति? यद्धि यत्प्रयोगादवगम्यते तत् तस्य वाच्यं भवति। नैवम्; 'भृशादिभ्यो भुव्यच्वेः' (पा. ३. १. १२.) इत्यादिभिर्भवत्याद्यर्थ एव प्रत्ययोत्पत्तेः। मैवं वोचः; नाहं क्यङन्तं पृच्छामि, किं तर्हि ण्यन्तम्; तत्र 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' (पाः ३. १. १७.) इति वर्तते; ततश्च करोत्यर्थलक्षणे धात्वर्थसामान्ये णिङ्णिचोर्विधानात्, पुच्छस्योदसनं करोति उत्पुच्छयते, सेनया अभियानं करोति अभिषेणयति इति करोत्यर्थस्य प्रत्ययेन उदसनाभियानादेस्तूपसर्गेणाभिधाने वाचकत्वमेषां भविष्यतीति। उच्यते—नेह करण इत्यनेन सकलधात्वर्थानुयायि क्रियासामान्यं प्रतिनिर्दिश्यते, अपि त्वनवधारितात्मस्वरूपा उदसनाभियानादयः क्रियाविशेषा एव। कथमिदं ज्ञायते इति चेत्, आचार्यप्रवृत्तिर्ज्ञापयति—यदयं मुण्डमिश्रश्लक्ष्णलवणेभ्यः करणमात्रे प्रत्ययमुदाहरति; तद्यथा—मुण्डं करोति मुण्डयति, एवं मिश्रयति, श्लक्ष्णयति, लवणयति। हलिकलिकृतत्वचेभ्यस्तु ग्रहणलक्षणे तद्विशेषे; यथा—हलिमग्रहीत् अजहलत्, कलिमग्रहीत् अचकलत्, कृतं गृह्णाति कृतयति, त्वचं गृह्णाति त्वचयति; वर्णसत्यार्थवेदेभ्यस्तदाचष्टे इत्युपसर्गविशिष्टे धात्वर्थे; यथा—वर्णमाचष्टे वर्णयति, सत्यमाचष्टे सत्यापयति, अर्थमाचष्टे अर्थापयति, वेदमाचष्टे वेदापयति इति; व्रताद्भोजने तन्निवृत्तौ च, यथा—पयो व्रतयति, वृषलान्नं व्रतयति। अतोऽवगम्यते करण इत्यनेनानवधारितविशेषो धात्वर्थः प्रत्ययाभिधेयतयाऽधिक्रियते इति। एवं तर्हि, सविशेषणस्यैव क्रियाविशेषस्य प्रत्ययेनोक्तत्वात् अभिषेणयत्यादिषूपसर्गप्रयोगो न प्राप्नोति; यथा—श्येन इवाचरति श्येनायते, बाष्पमुद्वमति बाष्पायते, हस्तेन निरस्यति हस्तयते, एवं पादयते इति। भवेदेतत् यत्रैक एव प्रत्ययार्थः; यथा—'उपमानादाचारे' (पा. ३. १. १०.) 'बाष्पोष्मभ्यामुद्वमने' [पा. ३. १. १६.] 'अङ्गान्निरसने' इति। इह तु बहवः प्रत्ययार्थाः; यथा—'पुच्छादुदसने व्यसने च,' 'भाण्डात् समाचयने विभजने च,' 'चीवरादार्जने परिधाने च,' मुण्डादिभ्यस्तत् करोति तदाचष्टे तेनातिक्रामति इत्यादाविति; तत्रोपात्तस्यापि क्रियाविशेषस्य प्रत्ययतो रूपसामान्यादनवधारणे तदवच्छेदायोपसर्गविशेषः प्रयुज्यते, यथा प्रत्ययार्थविशेषणपक्षे मनःशब्दादुत्पन्नेन क्यङैवोपसर्गार्थविशिष्टभवत्यर्थाभिधाने सुमनायते, दुर्मनायते, अभिमनायते इति सुदुरभयः प्रयुज्यन्ते। एवं तर्हि हस्तिनाऽतिक्रामत्यतिहस्तयति इत्यादिवत् श्वेताश्वमाचष्टे श्वेतयति, अश्वतरमाचष्टे अश्वयति, गालोडितमाचष्टे गालोडयति, आह्वरकमाचष्टे आह्वरयति, इत्यादावाङ्प्रयोगः प्राप्नोति। नैवम्, अत्राङः सहाभिधायकत्वात्। न हि क्रामतीत्यादिवत् चष्टे इत्यस्यैकाकिनः स्वार्थाभिधाने सामर्थ्यमस्ति। अतो विशेषकत्वमेवैषां न वाचकत्वमिति ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अथ [४] सहाभिधायका यथा--प्रस्नुते, प्राणिति, प्रपञ्चते, प्राप्नोति, संग्रामयते, संचष्टे, संरम्भते, संधुक्षयति, अनुरुध्यते, विक्लवते, विलोकते, विश्राणयति, आचष्टे, आशास्ते, आचामति, आतङ्कयति, निद्रायति, नियमयते, अधीते, अध्येति, अभिवादयते, परिष्वजते, उज्ज्ञासयति, उत्तंसयति इति ॥

[५] कार्यार्था यथा—विजयते, पराजयते, न्यविक्षत, समगंस्त, अन्वकरोत्, पराकरोत्, विरराम, उपरराम, उदसिष्यति, उदसिष्यते, अपस्किरते, प्रतिचस्कार, उपस्कुरुते, ग्लायते, प्रार्षभीयति, निष्पतति, अभिष्टौति, विषहते, परिष्वजते, विष्वणति, प्रहिणोति, प्रणश्यति, परिणेष्यति, अन्तर्णयति इति ॥

[६] निरर्थका यथा—प्रारभते, प्रलम्बते, प्रसूयते, प्रयच्छति, अपहरति, अपह्नुते, अपत्रपते, अभिषुणोति, निमीलति, निवार्यते, निष्ठीवति, निमज्जति, निखञ्जति, विगाहते, विराजते, विजानाति, विनश्यति, विकत्थते, विदीर्यते, आश्रयति, आश्लिष्यति, संयुज्यते, अध्यागच्छति, पर्यागच्छति इति ॥

प्रादय एव क्रियाविशेषोपजनितसंबन्धावच्छेदहेतवः कर्मप्रवचनीयाः; यदाह--

क्रियाविशेषजन्यानां संबन्धानां प्रकाशने ।
कर्मप्रवचनीयाः स्युर्नैमित्तमवधारिताः ॥ इति ।

किं पुनरमीषामवधारणम्? कर्मप्रवचनीयसंज्ञाधिकारे अनुप्रभृतयः शब्दा एकादश, लक्षणादयोऽर्था द्वाविंशतिरिति; तद्यथा--'अनुर्लक्षणे' 'तृतीयार्थे' 'हीने' (पा. १.४.८४.८५.८६.) 'उपोऽधिके च' 'अपपरी वर्जने' 'आङ् मर्यादावचने' [पा. १. ४. ८७. ८८. ८९.] लक्षणेत्थंभूताख्यानभागवीप्सासु प्रतिपर्यनवः' [पा. १. ४. ९०.] 'अभिरभागे' [पा. १. ४. ९१.] 'प्रतिः प्रतिनिधिप्रतिदानयोः' [पा. १. ४. ९२.] 'अधिपरी अनर्थकौ' [पा. १. ४. ९३.] 'सुः पूजायाम्' 'अतिरतिक्रमणे च' [पा. १. ४. ९४. ९५.] 'अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेषु' 'अधिरीश्वरे' [पा. १. ४. ९६. ९७.] 'विभाषा कृञि' [पा. १. ४. ९८.]। एवम्—अनु, उप, अप, परि, आङ्, प्रति, अभि, अधि, सु, अति, अपि, इत्येकादश शब्दाः। हेतुलक्षणम्, सहार्थः, हीनता, आधिक्यम्, वर्जनम्, मर्यादावचनम्, लक्षणम्, इत्थंभूताख्यानम्, भागः, वीप्सा, प्रतिनिधिः, प्रतिदानम्, आनर्थक्यम्, पूजा, आतिक्रमणम्, पदार्थः, संभावना, अन्ववसर्गः, गर्हा, समुच्चयः, स्वाम्यम्, अधिकारः, इति द्वाविंशतिरर्थाः। तत्रानुः सप्तार्थः, प्रतिपरी षडर्थौ, अपिः पञ्चार्थः, अध्यभी द्व्यर्थौ, उपाती द्व्यर्थौ, आङपसव एकार्थाः इति। तेष्वनुः हेतुलक्षणसहार्थहीनतालक्षणेत्थंभूताख्यानभागवीप्सासु कर्मप्रवचनीयः; तद्योगे द्वितीया

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा—शाकल्यस्य संहितामनु प्रावर्षत्, पर्वतमन्ववसिता सेना, अनुशाकटायनं वैयाकरणाः, वृक्षमनु विद्योतते विद्युत्, साधुर्देवदत्तो मातरमनु, यदत्र मामनु स्यात्, वृक्षं वृक्षमनु तिष्ठति इति ॥

क्रियाया द्योतको नायं न संबन्धस्य वाचकः ।
नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः ॥ [वाक्यपदीयम् २. २०६.]

तथा हि--शाकल्यस्य संहितामनुप्रावर्षदिति संहिताप्रवर्षणयोर्हेतुफलभूतयोर्लक्ष्यलक्षणभावो निशमयतिक्रियोपजनित इत्यनुना प्रकाश्यते 'शाकल्यस्य संहितामनु निशम्य प्रावर्षत्' इति । एवमन्यत्राप्यवगन्तव्यम् । इत्यनुः सप्तार्थः । लक्षणेत्थंभूताख्यानभागवीप्साप्रतिनिधिप्रतिदानेषु प्रतिः; स चतुर्षु द्वितीयां द्वयोः पञ्चमीमुत्पादयति; यथा--वृक्षं प्रति विद्योतते, साधुर्देवदत्तो मातरं प्रति, यदत्र मां प्रति स्यात्, वृक्षं वृक्षं प्रति सेकः, अभिमन्युरर्जुनतः प्रति, माषानस्मै तिलेभ्यः प्रति प्रयच्छति । लक्षणेत्थंभूताख्यानभागवीप्सावर्जनानर्थक्येषु परिः; सोऽपि चतुर्षु द्वितीयां द्वयोः पञ्चमीमुत्पादयति; यथा—वृक्षं परि विद्योतते, साधुर्देवदत्तो मातरं परि, यदत्र मां परि स्यात्, वृक्षं वृक्षं परि सेकः, परिपरि त्रिगर्तेभ्यो वृष्टो देवः, 'विश्वप्स्निया विश्वतस्परि' [तै. सं. १. ५. ३. ३.] । इति प्रतिपरी षडर्थौ । पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्वपिः; तस्यैतेषूपसर्गसंज्ञा बाध्यते; तत्र पदान्तरस्याप्रयुज्यमानस्यार्थः पदार्थः; सर्पिषोऽपि स्यात्, मधुनोऽपि स्यात्; मात्रा बिन्दुः स्तोकमित्यस्यार्थे अपिशब्दो वर्तते । अधिकार्थवचनेन शक्तेरप्रतिघाताविष्करणं संभावना--अपि सिञ्चेन्मूलकसहस्रम्, अपि स्तुयाद्राजानम् इति । कामचारानुज्ञानमन्ववसर्गः, अपि सिञ्च, अपि स्तुहि । निन्दा गर्हा—अपि सिञ्चेत् पलाण्डुम्, अपि स्तुयाद्वृषलम् इति । अनेकक्रियोपनिपातः समुच्चयः; अपि सिञ्च, अपि स्तुहि; सिञ्च च स्तुहि चेत्यर्थः । उपसर्गसंज्ञाबाधनात् षत्वं न भवति । इत्यपिः पञ्चार्थः । अधिरानर्थक्याधिकारस्वाम्येषु कर्मप्रवचनीयः; स आद्ययोः 'गतिर्गतौ' 'तिङि चोदात्तवति' (पा. ८. १. ७०. ७१.) इति गत्युपसर्गसंज्ञाबाधनात् निघातादिकं नानुभवति इति; यथा—कुतोऽध्यागच्छति, यदत्र मामधिकरिष्यति, इति । स्वाम्ये तु द्विधा—अधियोगे सप्तमी भवति कदाचित् स्वामिनः, कदाचित् स्वात्; यथा--अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्तः । अभिर्लक्षणेत्थंभूताख्यानवीप्सासु द्वितीयामुत्पादयति; यथा—वृक्षमभि विद्योतते, साधुर्देवदत्तो मातरमभि, वृक्षं वृक्षमभि सिञ्चति । इत्यध्यभी त्र्यर्थौ । हीनाधिकार्थयोरुपः; तत्र यथासंख्यं द्वितीयासप्तम्यौ; यथा—उपार्जुनं योद्धारः, उप खार्यां द्रोणः इति । अतिः पूजायामतिक्रमणे च; तत्र पूजा स्तुतिः, निष्पन्नेऽपि फले क्रियाप्रवृत्तिरतिक्रमणम् । यथा—शोभनं स्तुतम् । अति स्तुतं भवता, अति सिक्तमेतद्भवता, इति । उपसर्गसंज्ञाबाधनात् षत्वं न भवति । इत्युपाती द्व्यर्थौ । आङ्मर्यादावचने पञ्चमीमुत्पादयति—आ पाटलिपुत्राद्वृष्टो देवः । वचनग्रहणादभिविधिरपि गृह्यते;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्रापीदमेवोदाहरणम् । अपो वर्जने पञ्चमीमुत्पादयति--अप त्रिगर्तेभ्यो वृष्टो देवः । सुः पूजायामुपसर्गसंज्ञां बाधते--सुस्तुतं भवता, सुसिक्तं भवता, इति षत्वं न भवतीति । इत्या-ऽपसव एकार्था इति ॥

अव्ययानि सुबन्ततिङन्तानुकारीणि विभक्तिप्रतिरूपाणि ; तानि प्रत्येकं षोढा—प्रकृत्यर्थानि, प्रत्ययार्थानि, उभयार्थानि, अनुभयार्थानि, प्रकृत्यन्तरार्थानि, प्रत्ययान्तरार्थानि चेति । तेषु सुब-न्तानुकारीणि प्रकृत्यर्थानि यथा—उच्चैः, नीचैः, चिराय, विहायसा इति ; प्रत्ययार्थानि यथा—आरात्, अकस्मात्, एकपदे, प्रगे, इति ; उभयार्थानि यथा—अहम्, शुभम्, पारे, मध्ये इति ; अनुभयार्थानि यथा—ऋते, दिष्ट्या, साक्षात्, अह्नाय इति ; प्रकृत्यन्तरार्थानि यथा—कृतम्, दिवा, दोषा, अन्तरेण, इति ; प्रत्ययान्तरार्थानि यथा—सायम्, स्वयम्, चिरस्य, परस्परस्य इति । तिङन्तानुकारीणि प्रकृत्यर्थानि यथा—मन्ये, शङ्के, अये, आम इति ; प्रत्ययार्थानि यथा—एहि, अपेहि, पश्य, पश्यत इति ; उभयार्थानि यथा—अस्ति, असि, अस्मि, ब्रूहि इति ; अनुभयार्थानि यथा--याति, न याति, वर्तते, न वर्तते इति ; प्रकृत्यन्तरार्थानि यथा—अस्तु, भवतु, पूर्यते, आस इति ; प्रत्ययान्तरार्थानि यथा—आह, स्यात्, सुयात्, भूयात् इति ॥

'स्वरादिनिपातमव्ययम्' (पा. १. १. ३७.) इत्यव्ययप्रकरणे 'कृन्मेजन्तः' 'क्त्वातोसुन्क-सुनः' (पा. १. १. ३९. ४०.) 'तद्धितश्चासर्वविभक्तिः' 'अव्ययीभावश्च' (पा. १. १. ३८. ४१.) इति पठ्यते । तत्र आम्, क्त्वा, ल्यप्, तुमुन्, णमुल्, खमुञ् इति कृतः षड् भाषायाम् । ते तु कृतः क्रियारूपाः, क्रियाफलरूपाः, क्रियाविशेषणरूपाः, क्रियावधिरूपाः, क्रियाकर्मरूपाः, क्रियावयवरूपाश्च भवन्ति ; तेषु क्रियारूपा यथा—चकासाञ्चकार, कारयामास, बिभरांबभूव, विदांकुर्वन्तु, अलं कृत्वा, खलु कृत्वा, अलमालप्य, खल्वालप्य, अलं भोक्तुम्, कालो भोक्तुम्, श्रोतुं श्रोत्रम्, द्रष्टुं चक्षुः इति ; क्रियाफलरूपा यथा—भोक्तुं व्रजति, पक्तुमुपतिष्ठते, भोक्तुं भुङ्क्ते, पक्तुं पचति, भोक्तुं ग्लायति, भोक्तुं घटते, भोक्तुं क्षमते, भोक्तुं सहते, भोक्तुमस्ति, भोक्तुं विद्यते, भोक्तुमीष्टे, भोक्तुं प्रभवति इति ; क्रियाविशेषण-रूपा यथा—इत्थंकारम्, अन्यथाकारम्, यथाकारम्, तथाकारम्, उच्चैःकारम्, तिर्यक्कारम्, मुखतःकारम्, नानाभावम्, द्विधाभावम्, तूष्णींभावम्, अन्वग्भावम् इति ; क्रियावधिरूपा यथा—भुक्त्वा व्रजति, अपमित्य याचते, अग्रेभोजं व्रजति, द्व्यहात्यासं गाः पाययति, द्व्यङ्गुलोत्कर्षं खण्डिकाश्छिनत्ति, शय्योत्थायं राजद्वारमेति, कन्यादर्शं वरयति, ब्राह्मणवेदं भोजयति, यावज्जीव-मधीते, चर्मपूरं स्तृणाति, गोष्पदपूरं वृष्टो देवः, चेलक्नोपं वृष्टो देवः इति ; क्रियाकर्मरूपा यथा—शक्नोति भोक्तुम्, धृष्णोति भोक्तुम्, जानाति भोक्तुम्, आरभते भोक्तुम्, पारयति भोक्तुम्, प्रक्रमते भोक्तुम्, लभते भोक्तुम्, अर्हति भोक्तुम्, इच्छति भोक्तुम्, कामयते

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भोक्तुम्, एषितुमिच्छति, कमितुं कामयते, इति; क्रियावयवरूपा यथा--मूलकोपदंशं भुङ्क्ते, दण्डोपघातं गाः कालयति, पार्श्वोपपीडं शेते, व्रजोपरोधं गाः सादयति, पाण्युपकर्षमुत्थापयति, केशग्राहं युध्यन्ते, भ्रूविक्षेपं जल्पति, गेहानुप्रवेशमास्ते, नामग्राहमाकारयति, चोरंकारमाक्रोशति, स्वादुंकारं भुङ्क्ते, स्वादूकृत्य भुङ्क्ते इति। क्रियाकर्मावयवरूपाः खल्वपि संभवन्ति; यथा—स्वपोषं पुष्यति, आत्मपोषं पुष्णाति, गोपोषं पुष्यति, रैपोषं पुष्णाति, निमूलकाषं कषति, समूलकाषं कषति, समूलघातं हन्ति, पाणिघातं वेदिमाहन्ति, शुष्कपेषं पिनष्टि, चूर्णपेषं पिनष्टि, रूक्षपेषं पिनष्टि, उदपेषं पिनष्टि, अकृतकारं करोति, जीवग्राहं गृह्णाति, हस्तग्राहं गृह्णाति, हस्तवर्तं वर्तयति, चूडकनाषं नष्टः, सुवर्णनिधायं निहितः, ओदनपाकं पक्वः, क्रौञ्चबन्धं बद्धः, जीवनाशं नश्यति, पुरुषवाहं वहति, ऊर्ध्वशोषं शुष्कः, ऊर्ध्वपूरं पूर्णः, इति। शेषाश्छन्दसि चतुर्विंशतिर्भवन्ति; तद्यथा—एश्, केन्, तवै, के, से, सेन्, असे, असेन्, क्से, कसेन्, अध्यै, अध्यैन्, कध्यै, कध्यैन्, शध्यै, शध्यैन्, तवेङ्, तवेन्, कै, इष्यै, णमुल्, कमुल्, तोसुन्, कसुन्, इति। तेषु कृत्यार्थे एश्केनौ; एश्—'अवचक्षे' (ऋग्वे- ४. ५८. ५.) केन्—नावगाहे। तवै कृत्यार्थे तुमर्थे च, कृत्यार्थे—परिधातवै, परिस्तरितवै; तुमर्थे—सोममिन्द्राय पातवै (ऋग्वे. ३. ४६. ५.) अन्वेतवै (ऋग्वे. ७. ४४. ५.)। कयादयः सप्तदश तुमर्थे; तेषु के—दृशे विश्वाय सूर्यम् (ऋग्वे. १. ५०. १.) विख्ये त्वा हरामि; से—वक्षे रायः, सेन्—ता वामेषे रथानाम् (ऋग्वे. ५. ६६. ३.); असे--क्रत्वे दक्षाय जीवसे (ऋग्वे. १०. ५७. ४.); असेन्—इह क्षयाय जीवसे (ऋग्वे. १०. ५८. १.); क्से—प्रेषे भगाय श्रियसे (ऋग्वे. ५. ५९. ३.); कसेनप्येवंरूपः, स्वरे विशेषः; अध्यै—काममुपाचरध्यै (तै. सं. १. २. ११. १.) अध्यैनप्येवंरूपः, स्वरे विशेषः; कध्यै—इन्द्राग्नी आहुवध्यै (ऋग्वे. ६. ६०. १३.); कध्यैन्—श्रियध्यै; शध्यै—पिबध्यै (ऋग्वे. ९. ९७. २०.); शध्यैन्—सह मादयध्यै; तवेङ्—दशमे मासि सूतवे; तवेन—सोममिन्द्राय पातवे [ऋग्वे. ८. ६९. १०.]? सुवर्देवेषु गन्तवे [तै.सं. ५. ७. ७. २.] कर्तवे [ऋग्वे. ९. ८६. २०.] हर्तवे; कै—प्रयै देवेभ्यः [ऋग्वे. १. १४२. ६.]; इष्यै—अपामोषधीनां रोहिष्यै [तै. सं. १. ३. १०. २.]; अव्यथिष्यै; रोहणाय चाव्यथनाय चेत्यर्थः। तुमर्थ एव 'शकि णमुल्कमुलौ' [पा. ३. ४. १२]—अग्निं देवा विभाजं नाशक्नुवन्। 'ईश्वरे तोसुन्कसुनौ' (पा. ३. ४. १३.)—ईश्वरोऽभिचरितोः, ईश्वरो विलिखः, ईश्वरोऽवितृदः। तोसुन्कसुनौ भावलक्षणे च; तत्र स्थेण्कृञ्वदिचरिहुतमिजनिभ्यस्तोसुन् (पा. ३. ४. १६.) 'सृपितृदोः कसुन्' (पा. ३. ४. १७.) यथा—आसंस्थातोर्वेद्यां सीदन्ति, पुरा सूर्यस्योदेतोराधेयः, पुरा वत्सानामपाकर्तोः, पुरा प्रवदितोरग्नौ होतव्यम्, पुरा प्रचरितोराग्नीध्रे होतव्यम्, आहोतोरप्रमत्तस्तिष्ठति, आतमितोरुपतिष्ठन्ते (तै. ब्रा. १. ६. ९. ८.) आविजनितोः संभवाम (तै. सं. २. ५. १. ५.) पुरा क्रूरस्य विसृपः (तै. सं १. १. ९. ३.), पुरा जत्रुभ्य आतृदः (ऋग्वे. ८. १. १२.)। तद्धितेष्वसर्वविभक्तिषु 'तसिलादयः प्राक् पाशपः, शस्प्रभृतयः प्राक्समासान्तेभ्यः, मान्तः,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कृत्वोऽर्थाः, तसिवती नानाञौ ' इति ; यथा—यतः, तत्र, इह, क्व, एकदा, एतर्हि, अधुना, इदानीम्, सद्यः, परुत्, परारि, ऐषमः, अद्य, परेद्यवि, पूर्वेद्युः, उभयेद्युः, सर्वथा, इत्थम्, पुरस्तात्, प्राक्, अधः, उपरि, उपरिष्टात्, पुरः, पश्चात्, दक्षिणात्, दक्षिणा, दक्षिणाहि, दक्षिणेन, दक्षिणतः, द्विधा, द्वैधम्, ऐकध्यम्, बहुशो देहि, वासुदेवतः प्रति, शुक्लीभवति, अग्निसात् संपद्यते, देवत्रागच्छति, पटपटाकरोति, पचतितराम्, बहुकृत्वो भुङ्क्ते द्विर्भुङ्क्ते, सकृद्भुङ्क्ते, बहुधा भुङ्क्ते, आदितो भवति, ब्राह्मणवद्ब्रवीति, विना देवदत्तम्, नाना देवदत्तात् इति। अव्ययीभावो द्विधा—सत्त्वभूतार्थः, असत्त्वभूतार्थश्च इति। तयोः सत्त्वभूतार्थो यथा—उपकुम्भम्, सुमद्रम्, दुर्यवनम्, निर्मक्षिकम्, निशीतम्, सब्रह्म, बहिर्ग्रामम्, सूपप्रति, मध्येसमुद्रम्, द्विमुनि, पञ्चनदम्, लोहितगङ्गम् इति। असत्त्वभूतार्थो यथा—अधिस्त्रि, प्रत्युरसम्, अनुरथम्, प्रत्यर्थम्, यथाशक्ति, सचक्रम्, यावदमत्रम्, परित्रिगर्तम्, आपाटलिपुत्रम्, अभ्यग्नि, द्विपरि, अनुगङ्गं वारणसी इति ॥

शब्दस्य ताद्रूप्येणाभिधानमनुकरणं। यदाह—व्यक्ताव्यक्तवर्णपदवाक्यसादृश्योक्तयोऽनुकरणानि॥

तत्र व्यक्तवर्णसादृश्योक्तिर्यथा—

छिन्नेन पतता वह्नौ यन्मुखेन हठात्कृते।
स्वेति हेति हरेणोक्ते स्वाहासीत् सैष रावणः॥

व्यक्तपदसादृश्योक्तिर्यथा—

गच्छेति वक्तुमिच्छामि मत्प्रिय त्वत्प्रियैषिणी।
निर्गच्छति मुखाद्वाणी मा गा इति करोमि किम्॥

व्यक्तवाक्यसादृश्योक्तिर्यथा—

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं त्वं कौमुदी नयनयोरमृतं त्वमङ्गे।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां तामेव शान्तमथ वा किमतः परेण॥

अव्यक्तवर्णसादृश्योक्तिर्यथा—

गतेऽर्धरात्रे परिमन्दमन्दं गर्जन्ति यत्प्रावृषि कालमेघाः।
अपश्यतो [1] वत्समिवेन्दुबिम्बं तं (तत्) शर्वरी गौरिव हुंकरोति॥

---

[1] अयं पाठः मूलमातृकानुरोधादादृतः, तुमुघटितस्तु वृत्तवैरस्यादुपेक्षितः आगमशास्त्रस्यानित्यतया साधुत्वमस्यास्थेयम्।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अव्यक्तपदसादृश्योक्तिर्यथा—

चटच्चटिति चर्मणि च्छिमिति चोच्चलच्छोणिते
धगद्धगिति मेदसि स्फुटरवोऽस्थिषु ष्ठागिति ।
पुनातु भवतो हरेरमरवैरिराजोरसि
क्वणत्करजपञ्जरक्रकचकाषजन्मानलः ॥

अव्यक्तवाक्यसादृश्योक्तिर्यथा—

पिपिप्रिय ससस्वयं मुमुमुखासवं देहि मे
तततत्यज दुदुद्रुतं भभभभाजनं काञ्चनम् ।
इति स्खलितजल्पितं मदवशात्कुरङ्गीदृशः
प्रगे हसितहेतवे सहचरीभिरध्यैयत ॥

एतेन यानि साधून्यर्थवन्ति पदानि, यानि च वाक्यानि, यच्चाशक्तिजमसाधु शब्दरूपम्, ये चापभ्रंशाः, ये चानर्थका वर्णाः, याश्चाव्यक्तवर्णपदवाक्योक्तयः, तदनुकरणानां साधुत्वमुपपन्नं भवति । ननु अनुकरणं शिष्टस्य वा दानाध्ययनादेः, अशिष्टाप्रतिषिद्धस्य वा हसितहिक्कितादेः साधुत्वं भवति ; न प्रतिषिद्धस्य ; यो ह्येवमसौ ब्राह्मणं हन्तीति तस्यानुकुर्वन् ब्राह्मणं हन्यात्, सोऽपि मन्ये पतितः स्यात् । नैवम् ; यश्च ब्राह्मणं हन्ति, यश्चानुहन्ति, उभौ तौ हतः ; यस्तु खल्वेवमसौ ब्राह्मणं हन्तीति तस्यानुकुर्वन् कदलीस्तम्भं छिन्द्यान्न स मन्ये पतितः स्यात् इति । न चानुकरणमपशब्दः, अन्यो ह्यसावपशब्दपदार्थकः साधुशब्दः ; न चापशब्दपदार्थकः शब्दोऽपशब्दो भवति, अपशब्द इत्येतस्याप्यपशब्दत्वप्रसङ्गात् । यः पुनरेवमसावपशब्दं प्रयुङ्क्ते, इति तस्यानुकुर्वन्नपशब्दमभिधेयेषु प्रयुङ्क्ते, सोऽपशब्दकार्येव भवति इति ॥

भावकारकाभिधायिनो धातुप्रत्ययाः कृतः ; ते षोढा—लिङ्गिनः, अन्यलिङ्गिनः, स्वलिङ्गिनः, अलिङ्गिनः, शक्त्याद्यपेक्षिणः, अनुप्रयोगाद्यपेक्षिणश्च । तेषु द्रव्यवचना अणादयो लिङ्गिनः, यथा—कुम्भकारः, पङ्कजम्, धात्री, दात्रम्, कारुः, कृकवाकुः, इति । गुणवचना ण्वुलादयोऽन्यलिङ्गिनः, यथा—कारकः, कारिका, कारकम्, दर्शनीयः, दर्शनीया, दर्शनीयम्, इति । उत्पत्तावपेक्षितनियतलिङ्गाः 'स्त्रियां क्तिन्' (पा. ३. ३. ९४.) इत्येवमादयः स्वलिङ्गिनः, यथा—पक्तिः, पचनम्, पाकः, व्रजः, शय्या, सुप्तम्, इति । असत्त्वभूतार्थत्वेना-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नुपगृहीतलिङ्गसंख्याशक्तयस्तुमुनादयोऽलिङ्गिनः, यथा—कालो भोक्तुम्, अलं कृत्वा, खलु प्रहृत्य, नावगाहे, ईश्वरोऽभिचरितोः, ईश्वरो विलिखः, इति । शक्तिहेतुमल्लक्ष्यक्रियाद्यपेक्षाः शत्रादयः शक्त्याद्यपेक्षिणः, यथा—व्रजता कृतम्, क्रियमाणं पश्य, आर्जयन् वसति, चङ्क्रम्यमाणोऽधीते, पश्यन् व्रजति, भोजको व्रजति इति । अपेक्षितानुप्रयोगतद्धिताद्यनुषङ्गा णमुलादयोऽनुप्रयोगाद्यपेक्षिणः, यथा—रैपोषं पुष्यति, चोरंकारमाक्रोशति, कारयाञ्चकार, कृत्रिमम्, व्यावक्रोशी, सांराविणम्, इति ॥

भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः ; ते षोढा—अलोपिनः, लोपिनः, सर्वलोपिनः, आदेशिनः, प्रदेशिनः, अप्रदेशिनश्चेति । तेषु निरनुबन्धा अलोपिनः, यथा—अश्वत्वम्, अश्वकः, अश्वत्थामः, सभ्यः, सख्यम्, देवदत्तरूप्यः इति । सानुबन्धा लोपिनः यथा —ब्राह्मण्यम्, मृत्तिका, दाक्षिः, वैयाकरणः, स्तेयम्, कैदार्यम्, इति ; येषां लुग्लुपादिभिः किमपि नावतिष्ठते ते सर्वलोपिनः, यथा—गर्गाः, चरकाः, पञ्चालाः, चञ्चा, गार्गी, सामग्री, इति । येषामायन्नादय आदिश्यन्ते ते आदेशिनः, यथा—ऐतिकायनः, कापेयम्, आत्मनीनम्, अश्वीयम्, क्षत्रियः, शाश्वतिकम्, इति । प्रकृतेरादिमध्यविषयाः प्रदेशिनः, यथा—बहुतृणम्, बहुराजा, सर्वकः, उच्चकैः, त्वयका, पचतकि, इति । तस्या एवान्त्यावयवभूता अप्रदेशिनः, यथा—वाक्त्वचम्, प्रत्युरसम्, केशाकेशि, युवजानिः, सरजसम्, निष्प्रवाणिः, इति ॥

पृथगर्थानामेकार्थीभावः समासः ; स षोढा—सुबन्ताभ्याम्, तिङन्ताभ्याम्, सुप्तिङन्ताभ्याम्, सुब्धातुभ्याम्, सुबन्तनामभ्याम्, नामभ्यां चेति । तेषु सुबन्ताभ्यां यथा—उपकुम्भम्, राजपुरूषः, नीलोत्पलम्, अष्टाकपालः, चित्रगुः, धवखदिरौ इति । अत्र 'समर्थः पदविधिः' (पा. २. १. १.) इति सामर्थ्ये सति समासः । सामर्थ्यं च संबन्धः । स च द्वयोरुपसर्जनप्रधानभावे भवति ; न हि प्रधानयोरुपसर्जनयोरेव वा मिथोऽनपेक्षयोः संबन्धो घटते । प्रधानोपसर्जनभावश्च द्विधा—अभिधीयमानः, प्रतीयमानश्च । अभिधीयमानो व्यतिरेकविभक्तिः, यदा वैयधिकरण्यम्—कुम्भस्य समीपम्, राज्ञः पुरुषः, इति । तत्रोपकुम्भमिति पूर्वपदप्रधानोऽव्ययीभावः ; राजपुरुषः इत्युत्तरपदप्रधानस्तत्पुरुषः । प्रधानमविचलितस्वार्थं प्रथमयैवाभिधीयते, उपसर्जनं पुनः प्रधानानुग्रहायाश्रितव्यतिरेकं षष्ठ्यादिभिः । इदं च सुबन्तत्व एव भवति । प्रतीयमानस्तुल्यविभक्तिः यदा सामानाधिकरण्यम्—नीलं च तदुत्पलं च नीलोत्पलम् ; अष्टसु कपालेषु संस्कृतोऽष्टाकपालः, इति । अयं च 'विशेषणं विशेष्येण' (पा. २. १. ५७.) इति कर्मधारयः, 'संख्यापूर्वः' 'तद्धितार्थ' (पा. २. १. ५२. ५१.) इति च द्विगुत्वं विशेषणविशेष्यभावेन प्रतीयमानोपसर्जनप्रधानभावयोः सामानाधिकरण्ये स्मर्यते ; तच्च तुल्यविभ-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्तित्वे स्यादिति सुबन्तत्व एव भवति। यदा च चित्रा गावोऽस्येत्यन्यपदार्थपरतया विशेषणविशेष्ययोः समानाधिकरणलक्षणो बहुव्रीहिः, तदाऽप्यभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संवृत्त इति वृत्त्यवस्थायां वाक्यवैपरीत्येन चित्रा गावोऽस्येत्युपसर्जनं समासार्थश्चित्राणां गवामयमिति प्रधानभावमनुभवति ; तच्च षष्ठीप्रथमान्तत्वात् सुबन्त एव स्यात्। यदा च धवश्च खदिरश्चेति प्रधानयोर्धवस्य खदिरस्य चेत्यप्रधानयोर्वा क्रियादीन् प्रतीतरेतरयोगे युगपदधिकरणवचनो द्वन्द्वः, तदाऽप्युभयत्र तुल्यविभक्तित्वमन्तरेण प्राधान्यमप्राधान्यं वा न प्रतीयते ; तुल्यविभक्तित्वं तु द्वयोः सुबन्तत्व एव भवति। अतश्च सर्वत्र सुबन्तेन सह सुबन्तं समस्यते इति स्मर्यते। तिङन्ताभ्यां यथा--अश्नीतपिबता, खादतमोदता, पचतभृज्जता, उन्मृजावमृजा, आवपनिवपा, एहिरेयाहिरे, इति। अत्र 'आख्यातमाख्यातेन क्रियासातत्ये' इति मयूरव्यंसकादिपाठात् तिङन्तानां समासः स्मर्यते। अश्नीत पिबतेत्यादि यासु क्रियासु सातत्येन विद्यते, ता एवमुच्यन्ते। तन्मध्यपतितश्च तद्ग्रहणेन गृह्यते इत्युदादीनां रे इत्येतस्य चाख्यातत्वं भवति। सुप्तिङन्ताभ्यां यथा--अपचसि, प्रावर्षत्, अनुव्यचलत्, अस्तिक्षीरा, एहिवाणिजा, जहिस्तम्ब, इति। अत्र 'सह सुपा' (पा. २. १. ४.) इत्यत्र तृतीययैव सहार्थस्याक्षेपे, सहग्रहणादतिरिक्ताद्योगविभागाश्रयणेन सुबन्ततिङन्ताभ्यां समासः क्रियते। स च 'नञो नलोपस्तिङ्यवक्षेपे' इति 'उदात्तवता तिङा गतिमता च' इति, 'सुबधिकारेऽस्तिक्षीरादिवचनम्' इति, 'एहीडादयोऽन्यपदार्थे' इति 'जहि कर्मणा बहुलमाभीक्ष्ण्ये समस्यते कर्तारं चाभिदधाति' इत्युपपन्नो भवति। तेनायमर्थः संगच्छते—अवक्षिप्तोऽसि न पचसि त्वमभिहितोऽपि वृषल इति; प्रकर्षेणावर्षत् इति; पश्चाद्विशिष्टं चलनमकरोत् इति; अस्ति क्षीरमस्या इति; एहि वाणिजेत्यामन्त्र्यमाणवाणिजविशिष्टा क्रियेति; जहि जहि स्तम्बमिति कर्ता योऽभिधीयते स एवमुच्यते इति। सुब्धातुभ्यां यथा—संग्रामयते अनुरुध्यते, श्रद्धा, अन्तर्धिः, परमनियौ, प्रतिभुवौ इति। अत्र—'संग्राम युद्धे,' 'अनुरुध कामे' इति समस्तयोरेव पाठः। 'आतश्चोपसर्गे' (पा. ३. ३. १०६.) 'उपसर्गे घोः किः' (पा. ३. ३. ९२.) इत्यङ्किविधाने प्रादिषु श्रदन्तरोरुपसङ्ख्यानम्, 'अचि श्नु धातुभ्रुवां य्वोरियङुवङौ' (पा. ६. ४. ७७.) इत्यादिकार्यसिद्धये क्विबन्तस्य प्रत्ययनामधातुत्वाद्धातुत्वमिति सुब्धातुभ्यां समासो भवति। सुबन्तनामभ्यां यथा—दधिसेक्, चर्मकारः, चर्मक्रीती, धनक्रीता, ब्राह्मणाच्छंसी, सरसिजम्, इति। अत्र 'कुगतिप्रादयः' (पा. २. २. १८.) 'उपपदमतिङ्' (पा. २. २. १९.) इत्यत्रातिङ्ग्रहणेनोभयसूत्रशेषतया व्याख्यायमानेन सुबित्येतस्य निवृत्तिः क्रियते, 'कर्तृकरणे कृता बहुलम्' (पा. २. १. ३२.) इत्यत्र च कर्तृकरणयोः समासविधानादुत्तरपदस्य कृदन्ततायां लब्धायां कृद्ग्रहणादतिरिक्तात् तदन्तावस्थायामेव समासाभ्यनुज्ञाने सुपेत्येतदपि निवर्तते। ततश्च गतिकारकोपपदानां

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कृद्भिः सह समासः सुबुत्पत्तेः प्रागेव भवतीत्याख्यातम्; बहुलग्रहणस्य चेष्टसिद्धयर्थत्वात्। स क्वचिन्नामभ्यां क्वचित् सुबन्ताभ्यां क्वचिन्नामसुबन्ताभ्यां निश्चीयते। तत्र दधिसेगित्यत्रोत्तरपदस्य 'सात्पदाद्योः' (पा. ८. ३. १११.) इति पदादिनिबन्धनषत्वप्रतिषेधसिद्धये, चर्मकार इत्यत्र तु पूर्वपदस्य पदान्तलक्षणनलोपार्थं सुबन्तता क्रियते। चर्मक्रीतीत्यत्र पूर्वपदं नलोपार्थमेव सुबन्तम्, उत्तरपदं तु प्रातिपदिकं क्रियते; तेन 'क्रीतात् करणपूर्वात्' (पा. ४. १. ५०.) अकारान्तात् इति—ईकारः सिद्धो भवति। सुबुत्पत्तौ तु प्राक् सुबुत्पत्तेरन्तरङ्गलिङ्गसंस्कारनिमित्तष्टाबुत्पद्यमानः क्रीतस्य अकारान्ततां हृत्वा ङीपं प्रतिबध्नीयात्। धनक्रीतेत्यत्र 'सा हि तस्य धनक्रीती प्राणेभ्योऽपि गरीयसी' इति शिष्टप्रयोगदर्शनादुत्तरपदस्य सुबुत्पत्तौ टाबुत्पत्तेराकारान्तत्वान्न ङीष उत्पत्तिः। ब्राह्मणाच्छंसी, सरसिजमित्यत्र पूर्वपदयोः साक्षात् सुपः श्रवणम्; उत्तरपदयोस्तु प्रयोजनाभावाद्विभक्तेरनुत्पत्तिरिति। नामभ्यां यथा—अश्वक्रीती, धनक्रीती, प्रवापिणी, माषवापिणी, असूर्यंपश्या राजदाराः, कृतपूर्वी कटम्, इति। अत्र अश्वक्रीती, धनक्रीती, इत्येतयोः प्राग्वदेव ङीबुत्पत्तौ विभक्त्युत्पत्तिमन्तरेणापि पञ्चकप्रातिपदिकार्थपक्षे करणत्वाविरोधः। प्रवापिणी, माषवापिणी इत्यत्र तु प्राक् सुबुत्पत्तेः समासे प्रातिपदिकस्यान्तो नकार इति 'प्रातिपदिकान्तनुम्विभक्तिषु च (पा. ८. ४. ११.) इति णत्वं भवति; सुबन्ताभ्यां तु समासेऽन्तरङ्गत्वान्ङीबुत्पत्तौ ङीबत्र प्रातिपदिकान्तः न नकार इति णत्वं न स्यात्, यथा—गर्गभगिनीति। असूर्यंपश्या इत्यत्र नञ्सूर्ययोर्दृशिक्रियया संबन्धात् परस्परमसंबन्धे सामर्थ्याभावाद्विभक्त्यभावः, अत्र हि सूर्यमपि न पश्यन्तीति नञ् सूर्यकर्मिकां दृशिक्रियामपेक्षते, न सूर्यसत्ताम्; 'असूर्यललाटयोर्दृशितपोः' (पा. ३. २. ३६.) इति वचनादसामर्थ्येऽपि नाम्नोरेव समासो भवति। एतेन कृतपूर्वी इत्यपि व्याख्यातम्; अत्रापि हि कृतं पूर्वं कटोऽनेनेति कृतशब्दस्य कटापेक्षायां पूर्वशब्देनासंबन्धादसामर्थ्येऽपि 'पूर्वादिनिः,' 'सपूर्वाच्च' (पा. ५. २. ८६. ८७.) इति वचनात् कृतपूर्वयोरसुबन्तयोरेव समासो भवतीति स्थितम्। उपलक्षणं चेह सुबन्ताभ्यामित्यादिषु द्विवचनम्; तेन यथा द्वाभ्यां तथा त्रिभिर्बहुभिश्च समासो भवति। तत्राव्ययीभावः कर्मधारयश्च द्वाभ्याम्। यथा—अधिस्त्रि, शाकप्रति, पक्वाम्राः, पुरुषव्याघ्रः, इति। षष्ठीलक्षणः कालपरिमाणलक्षणश्च तत्पुरुषो द्वाभ्यां त्रिभिश्च। यथा—राजगवीक्षीरम्, राजगोक्षीरम्, द्व्यहजातः, द्व्यह्नजातः, इति। अत्र यदा राज्ञो गौः राजगवी तस्याः क्षीरमिति, तदा द्वाभ्याम्, यदा तु राज्ञो गोः क्षीरं राजगोक्षीरमिति, तदा त्रिभिः। तदुक्तम्—'राजगवीक्षीरे द्विसमासप्रसङ्गः, द्विषष्ठीभावात्; सिद्धं तु राजविशिष्टाया गोः क्षीरेणाभिसंबन्धात्' राजगवीक्षीरम्, राजगोक्षीरमिति च। ननु च, गोः क्षीरं गोक्षीरम्, राज्ञो गोक्षीरं राजगोक्षीरमिति द्वितीयपक्षे भविष्यति; नैवम्, अर्थभेदात्; यथैवायं गवि यतते न महिष्यादेरपि क्षीरमात्रेण तुष्यति, एवं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

राजन्यपि यतते—राज्ञो या गौः, तस्या यत् क्षीरमिति ; तच्चैवं न सिध्यति ; एवं हि यतः कुतश्चिदागतं गोक्षीरमात्रं राज्ञः संबन्धि प्रतीयते। कथं पुनर्गोः क्षीरमप्यपेक्षमाणायाश्च राज्ञा राजानमप्यपेक्षमाणायाश्च क्षीरेण समासः? उच्यते—न गौः प्रधानत्वात् तथा राजानमपेक्षते, यथा उपसर्जनत्वेन गां राजा ; क्षीरमप्यविचलितस्वार्थत्वादनौत्सुक्येन न तथा गामपेक्षते, यथोद्भूतसंबन्धव्यातिरेकत्वादौत्सुक्येन गौः क्षीरम्। एवं चानुकूल्ये गमकत्वात् प्रधानसापेक्षत्वे सति समासो भवत्येव ; यथा—देवदत्तगुरुकुलम्, राजपुरुषभार्या, इति। तदुक्तम्—'भवति वै प्रधानस्य सापेक्षस्यापि समासः' इति। एवं द्वे अहनी समाहृते द्व्यहः, द्व्यहो जातस्येति यदा समासः तदा द्वाभ्याम् ; यदा तु द्वे अहनी जातस्य द्व्यह्नजात इति तदा त्रिभिः। 'सुप् सुपा' इति वचनाद्‌द्वयोरेव समास इति चेत्, न ; 'कालाः परिमाणिना' (पा. २. २. ५.) इति बहुवचननिर्देशात् 'सुप् सुपा' इत्येतास्मिन् गुणपदेऽपि संख्या न विवक्ष्यते ; तेन त्रिष्वपि पदेषु समासाभ्यनुज्ञाने, द्विशब्दस्यापि कालसंख्यायकत्वेन कालाभिधायित्वे द्वे अह्नी जातस्येति विगृह्य जातेन परिमाणिना द्विशब्दाहः-शब्दौ कालाभिधायिनौ समस्येते। पूर्वस्य पदस्योत्तरपदनिमित्तायास्तत्पुरुषसंज्ञायाः प्रवर्तनात् 'न संख्यादेः समाहारे' (पा. ५. ४. ८९.) इति प्रतिषेधाभावात् 'अह्नोऽह्न एतेभ्यः' (पा. ५. ४. ८८.) इति समासान्तसिद्धौ द्व्यह्नजात इति विवक्षितरूपसिद्धिः। अथ राजगोक्षीरमित्यत्रापि कथं न समासान्तः? गोशब्दस्य युगपत् पूर्वोत्तरपदापेक्षायामसामर्थ्यात्। द्व्यह्नजातः इत्यत्रापि तुल्यमिति चेत्, तन्न ; उत्तरपदयोग एव द्विगोराम्नानात्। अपि च, द्वे अहनी इति द्वे अपि प्रथमान्ते ; राज्ञो गोरिति द्वे अपि षष्ठ्यन्ते ; अस्ति च प्रथमान्तषष्ठ्यन्तयोर्विशेषः—प्रथमान्तं ह्यनुपजातव्यतिरेकत्वान्निरौत्सुक्यं नान्यदपेक्षते ; षष्ठ्यन्तं पुनरुद्भूतव्यतिरेकत्वात् परोपकारायौत्सुक्येन प्रवर्तमानं नानवाप्योपकार्यं विरमति। एवं च सापेक्षत्वादसामर्थ्ये समासः कथमिति चेत्, गमकत्वात् ; यथा—सूर्यमपि न पश्यन्त्यसूर्यंपश्या राजदाराः, न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मणः, अशूद्रान्नभोजी, एवमलवणभोजी, एकान्नविंशतिः ; यथा—अवतप्ते नकुलस्येव स्थितमवतप्तेनकुलस्थितं तवैतदिति। बहुव्रीहिद्वन्द्वौ द्वाभ्यां त्रिभिर्बहुभिश्च यथा—चित्रगुः, कण्ठेकालः, प्लक्षन्यग्रोधौ, पाणिपादम्, पञ्चगवधनः, मत्तबहुमातङ्गम्, शङ्खदुन्दुभिवीणाः, धवखदिरपलाशम्, इति। अत्र 'अनेकमन्यपदार्थे' [पा. २. २. २४.] बहुव्रीहिः, 'चार्थे द्वन्द्वः' [पा. २. २. २९.] इति च स्मृतिः ; उक्तं च—

सुसूक्ष्मजटकेशेन सुनताजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्वन्द्वो यावद्भिरारब्धः प्राधान्यं तत्र तावताम् ।
इतरेतरयोगे स्यात् समाहारे तु संहतेः ॥

ननु च, शोभनाः सूक्ष्मा जटाः केशा अस्य, शोभनम् नतमजिनं वासोऽस्य, सञ्जातान्यन्तेषु शितिरन्ध्राण्यस्येति कर्मधारयादिगर्भा एते बहुव्रीहयः ; तत्र सुसूक्ष्मजटकेशेन सुनताजिनवाससेत्येतयोर्मध्यपदस्योत्तरपदेन पूर्वपदेन वा कर्मधारयम्, अन्त्यस्य तूत्तरपदेनैव सप्तमीतत्पुरुषं विधाय द्वयोरपि वृत्तौ बहुव्रीहिः कस्मान्न क्रियते । उच्यते—पूर्वयोः पूर्वपदेन कर्मधारयानुपपत्तिः, असामानाधिकरण्यात् ; न हि द्वयोरपि विशेषणयोः सामानाधिकरण्यं भवति । उत्तरेण तु 'विशेषणं विशेष्येण' [पा. २. १. ५७.] इति सामानाधिकरण्ये भवति कर्मधारयः ; किं तु न तदुत्तरकालमन्यपदार्थे विवक्षितार्थसिद्धिः ; तथा हि सति, सूक्ष्मजटासंबन्धनिबन्धनमेव केशानां शोभनत्वमुपलभ्यते न तु स्वाभाविकम्, नतिनिमित्तमेव चाजिनवाससश्चारुत्वं गम्यते न तु नैसर्गिकम् । अन्त्ये पुनरन्तेषु इत्येतस्य सापेक्षत्वादसामर्थ्ये सति नोत्तरपदेन सप्तमीतत्पुरुषः ; अन्तेषु शितिरन्ध्राणि इति ह्युक्ते, कस्यान्तेष्वित्यपेक्ष्यं स्यात् ; तच्च शित्यर्थ उत्पद्यमाने बहुव्रीहावेवोपपन्नं भवति—सञ्जातान्यन्तेषु सूक्ष्मच्छिद्राण्यस्येति, न पुनस्तत्पुरुषे । ननु च, दृश्यते द्वयोरपि विशेषणत्वे सापेक्षत्वे च समासः ; तद्यथा—खञ्जश्चासौ कुब्जश्च खञ्जकुब्जः, भ्रातुर्भार्या भ्रातृभार्या देवदत्तस्येति । उक्तमत्राचार्यैः । किमुक्तम् ? कस्य चित् खञ्जो निर्ज्ञातः कस्य चित् कुब्ज इति प्रधानोपसर्जनभावाद्भवत्येव विशेषणविशेष्यभावः ; अपि च

संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते ।
स्वार्थवत्सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥

यथा पितुः पिता पितामहो देवदत्तस्येति । इह तु सूक्ष्मजट इत्येतदन्यपदार्थ एवाम्नायते ; नतमित्येतदपि क्रियाभिधायित्वेन गुणवचनत्वादाश्रितमेव भवति । सु इत्येतत्पुनरव्ययं शोभनार्थे वर्तमानं समस्यते ; तस्य चास्तां द्रव्यवचनत्वम् ; गुणवचनत्वेऽपि विप्रतिपत्तिः, अव्ययानामसत्त्वार्थवाचित्वात् । केचित् पुनस्तत्रापि विवदन्ते—द्योतका हि किलैते न वाचका इति ; समासश्च 'सुप् सुपा' (पा. २. १. ४.) इति द्योतकानामपि भवति । मा भूत् पूर्वयोः कर्मधारयः ; अन्त्ये पुनरन्तशब्दस्य संबन्धिशब्दत्वेन भ्रातृभार्यादिवत् कथं न तत्पुरुषः ? उच्यते—यद्यपि संबन्धिशब्दाः सापेक्षत्वेऽपि समस्यन्ते, तथाऽपि यत्र संदेहविपर्यासादयो न जायन्ते तत्रैव तदुत्पत्तिः ; अत्र त्वन्तशितिरन्ध्राणीत्युक्ते सन्देहः—किमन्तेषु शितिरन्ध्राण्यस्य, उत अन्तशितिनी[तीनि]रन्ध्राणि इति । अथ यदा सुष्ठु सूक्ष्मजटाः केशाः अस्येति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विग्रहः, तदा भवितव्यं पूर्वपदयोः कर्मधारयेण। न भवितव्यम्। किं कारणम्? स्वरे दोषः स्यात्; बहुव्रीहौ पूर्वपदप्रकृतिस्वरं बाधित्वा समासस्यान्त उदात्त इत्यन्तरङ्गत्वादवयवसमासस्वरः प्राप्नोति, तदाह—

सुसूक्ष्मजटकेशादौ समासावयवो यदि।
स्यात्स्यात्तत्रान्तरङ्गत्वाद्बाधकोऽवयवस्वरः॥

न चेष्यते। का पुनरत्र कर्मधारयबाधायामुपपत्तिः? 'विशेषणं विशेष्येण बहुलम्' [पा. २. १. ५७.] इति बहुलग्रहणमेव; उक्तं च--

या सामान्याश्रया संज्ञा विशेषविषया च या।
बहुलग्रहणान्नास्ति प्रवृत्तिरुभयोस्तयोः॥

अतश्च यत्र द्वे अपि विशेषसंज्ञे, तत्रोत्तरपदे नित्यमेव द्विगुर्द्वन्द्वश्च समासो भवति; तद्यथा—पञ्चगवप्रिय इति, छत्रोपानहप्रिय इति। यत्र किञ्चित्सामान्यं कश्चिच्च विशेषः, तत्र विकल्पेन; यथा—राजगवीक्षीरम्, राजगोक्षीरम् इति। यत्रैकतः सामान्यमन्यतो विशेषः, तत्र न भवत्येव; यथा—सुसूक्ष्मजटकेशेन सुनताजिनवाससा इति; अत्र बहुव्रीहिरिति विशेषसंज्ञायामवयवयोः 'विशेषणं विशेष्येण बहुलम्' इति या समाससंज्ञा सा 'सुप्सुपा' इति तत्पुरुषादिभेदापरामर्शेन भवन्ती सामान्यसंज्ञेत्युच्यते। ननु 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम्' इति महावार्तिककारः; अयमपि च तत्पुरुष एवेति कस्मादिहापि समासो न भवति? उत्तरपदोपादानात् उत्तरपद एवाम्नायेत सोऽत्र तत्पुरुषो ग्रहीतव्यः; यथा द्यहजातः, पञ्चगवधनः इति। द्वन्द्वः पुनरनुत्तरपद एवेति बहुव्रीहिविषयेणोत्तरपदेन सर्व एव गृह्यते। किमर्थं पुनरेवमुच्यते यावता बहुलग्रहणेनैव सिद्धम्? समुदायवृत्ताववयवानां मा कदाचिदवृत्तिर्भूदिति। तथापि न वक्तव्यम्; इह द्वौ पक्षौ—वृत्तिपक्षश्च अवृत्तिपक्षश्च; यदा वृत्तिः तदा सर्वेषां वृत्तिः, यदा तु न वृत्तिः तदा सर्वेषामवृत्तिः इति। नैवम्; अस्त्यत्र विशेषः; तथाहि--पञ्चगवप्रिय इत्यादौ नास्य पञ्चसंख्यामात्रं प्रियं नापि गोमात्रम्, किं तर्हि पञ्चसंख्योपलक्षिताः काश्चिदेव गावः, यथा पञ्चाम्राः सप्तर्षयः, इति। तच्च द्विगौ पूर्वमसति दुरुपपादमेव भवति। एतेन छत्रोपानहप्रिय इत्येतदपि व्याख्यातम्; तत्रापि युगपदधिकरणवचनद्वन्द्वमन्तरेण नाभिवाञ्छितसिद्धिः। न ह्यस्योपानन्मात्रमेव प्रियम्, अपि तु छत्रमपि; उपानच्छब्दादेव च परः प्रियशब्दो निशम्यमानः न द्वन्द्वं विना छत्रमुपग्रहीतुं शक्नोति। तस्मादनाक्षेप इति। सुसूक्ष्मजटकेशादिना च मत्तबहुमातङ्गं वनम्

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

इत्यादावप्यनेकमेव पदमित्युक्तं भवति। अत्रापि मत्तबहवो बहुमातङ्गा इत्यपि न भवति। किं कारणम्? 'बहुगणवतुडति संख्या' [पा. १. १. २३.] इति बहुशब्दस्य संख्यावाचित्वात्, संख्यापूर्वस्य च कर्मधारयस्य द्विगुत्वात्, द्विगोः पुनः तद्धितार्थोत्तरपदसमाहारेष्वेव भावात्, यथा पञ्चकपालः, त्रिलोकहर्म्यम्, पञ्चपूली इति। कथं तर्हि सप्तर्षयः, पञ्चाम्राः इति। 'दिक्संख्ये संज्ञायाम्' [पा. २. १. ५०.] इति संज्ञायामेव तद्भवति। ननु च माभूत्तद्धितार्थः उत्तरपदं वा, तथाऽपि बहुमातङ्गमिति समाहारे भविष्यति—बहवो मातङ्गाः समाहृताः बहुमातङ्गम्; ततश्च मत्तं बहुमातङ्गमस्मिन्वने तन्मत्तबहुमातङ्गं वनमिति बहुव्रीहिर्भविष्यति। उच्यते—अथ समाहार इति कः शब्दार्थः? ननु समाङ्पूर्वाद्धरतेः कर्मणि घञ्—समाह्रियत इति समाहारः। यद्येवं पञ्च कुमार्यः समाहृताः—पञ्चकुमारि, दशकुमारि—इति 'गोस्त्रियोरुपसर्जनस्य [पा. २. १. ४८.]' इति ह्रस्वत्वं न प्राप्नोति। समासार्थस्यानेकत्वात्, 'द्विगुरेकवचनम्' [पा. २. ४. ९.] इत्येतदपि वक्तव्यं भवति। एवं तर्हि भावसाधनो भविष्यति—समाहरणं समाहार इति। अथ भावसाधनेन किमभिधीयते? यत्तदौत्तराधर्यम्। कः पुनः पञ्चगवं पञ्चपूली, इत्यादौ गवादीनां समाहारः? यत्तदार्जनं, क्रयणम्, भिक्षणम्, अवहरणम् वा। यद्येवं विक्षिप्तेषु पूलेषु चरन्तीषु गोषु न सिध्यति। तर्हि समभ्याशीकरणं समाहारः। एवमपि पञ्चग्रामी, षण्णगरी, इत्यादेरनुपपत्तिः। किं कारणम्? अभ्याशीकरणार्थे समाहारशब्दे समिति समन्तादित्यभिविधौ वर्तते, आङाभिमुख्ये; हरतिर्देशान्तरप्रापणे इति। नावश्यं हरतिर्देशान्तरप्रापणे एव वर्तते। किं तर्हि? सादृश्येऽपि—मातुरनुहरति, पितुरनुहरतीति। अथ वा—पञ्चग्रामी षण्णगरीति नेदमियत्येवावतिष्ठते, अवश्यं ह्यसौ ततः किञ्चिदाकाङ्क्षति, क्रियां गुणं वा; यदाकाङ्क्षति तदेकं समाहार इति। अयं तर्हि, भावसाधने सति दोषः—पञ्चपूली आनीयतामिति द्रव्यस्यानयनं न प्राप्नोति। नैष दोषः; तद्यथा गौरनुबन्ध्योऽजोऽग्नीषोमीय इति जातौ चोदितायां तत्रासंभवादालम्भनप्रोक्षणविशसनादीनि द्रव्ये भवन्ति, इहापि भावानयनस्यासंभवाद्द्रव्यस्यानयनं भविष्यति; अव्यतिरेकाद्वा—न हि समूहिभ्यः समाहारलक्षणः समूहो व्यतिरिक्तो भवति। एवं तर्हि बहुमातङ्गमिति समाहारे, एष दोषो भवति—"अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यते" इति पञ्चपूलीवदीकारान्तत्वं प्राप्नोति; न वाऽयं पात्रादिषु पठ्यते, येन चतुष्पात्रत्रिभुवनादिवत्तन्निषेधो भविष्यति; नाप्याबन्तः, येन पञ्चखट्वी पञ्चखट्वम् इत्यादिवद्विकल्पोऽवकल्पेत। ननु च द्विगावपीकारो न दृश्यते, यथा एकपुत्रः एकभिक्षेति। नायं द्विगुः। किं तर्हि? "पूर्वकालैकसर्वजरत्पुराण" [पा. २. १. ४९.] इत्यादिना कर्मधारयः। किं च भोः संख्यापूर्वोऽपि द्विगुर्न भवति? बाढम्, तस्य तद्धितार्थोत्तरपदसमाहारेष्वेव भावात्। न चेह तद्धितार्थ उत्तरपदं वा विद्यते; न चैकस्य समाहारः संभवति। यदा तु सामर्थ्यातिशयादेकस्मिन्नपि समूहारोपणं,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तदा भवत्येव, यथा एकापूपी एकशाटीति । किं पुनर्द्विगुसंज्ञा प्रत्ययोत्तरपदयोर्भवति ? एवं तावत् । एतर्हीतरेतराश्रयत्वादप्रसिद्धिः । कथमितरेतराश्रयत्वम् ? द्विगुनिमित्ते प्रत्ययोत्तरपदे प्रत्ययोतरपदनिमित्ता च द्विगुसंज्ञेति । एवं तर्हि, अर्थ इति वक्ष्यामि । अर्थे चेत्तद्धितानुत्पत्तिः वहुव्रीहिवत् ; तत्र यथा चित्रगुः शबलगुः इति वहुव्रीहिणोक्तत्वान्मत्वर्थस्य मत्वर्थीयो न भवति, एवं द्वैमातुरः पाञ्चनापितिः इत्यादौ तद्धितार्थस्य द्विगुनोक्तत्वात्तद्धितोत्पत्तिर्न प्राप्नोति । यथेच्छसि तथाऽस्तु ; अस्तु तावत् प्रत्ययोत्तरपदयोरिति । ननूक्तमितरेतराश्रयत्वादप्रसिद्धिरिति । नैष दोषः ; नेदं तुल्यमन्यैरितरेतराश्रयैः, शब्दनित्यत्वात् । ननु च न संज्ञा नित्या ; किं तर्हि ? शब्दः । यद्येवं भाविनी संज्ञा विज्ञास्यते ; तद्यथा— कश्चित्तन्तुवायमाह, अस्य सूत्रस्य शाटकं वयेति ; स पश्यति—यदि शाटको न वातव्यः, अथ वातव्यो न शाटकः, शाटको वातव्यश्चेति विप्रतिषिद्धम् , भाविनी तु खल्वस्य संज्ञाभिप्रेता, स मन्यते—वातव्यं यस्मिन्नुते शाटक इत्येतद्भवतीति । एवमिहापि तस्मिन् द्विगुर्भवति यस्याभिनिर्वृत्तस्य प्रत्ययः उत्तरपदमित्येते संज्ञे भविष्यत इति । अथवा पुनरस्त्वर्थ इति । ननु चोक्तमर्थे चेत्तद्धितानुत्पत्तिः वहुव्रीहिवदिति । नैष दोषः ; नावश्यमर्थशब्दोऽभिधेय एव वर्तते ; किं तर्हि ? स्यादर्थेऽपि ; तद्यथा—दारार्थं भिक्षामहे, जनार्थं भिक्षामहे ; दारा नः स्युः, जना नः स्युः, इति । एवमिहापि तद्धितार्थे द्विगुर्भवति, तद्धितः स्यादिति । द्विगोर्वा लुग्वचनं ज्ञापकम् ; यदयं "द्विगोर्लुगनपत्ये" (पा. ४. १. ८८.) इति द्विगोस्तद्धितस्य लुकं शास्ति, तज्ज्ञापयति—उत्पद्यते द्विगोस्तद्धित इति । यद्येवं समाहारसमूहयोरविशेषात् समाहारग्रहणमनर्थकम्, "तस्य समूहः" (पा. ४. २. ३७.) इति तद्धितार्थेनैव-कृतत्वात् ; तथा हि समाहारः समूह इत्यविशिष्टावेतावर्थौ ; तत्र समूह इव समाहारेऽपि तद्धितार्थे द्विगुः इत्येव भाविष्यति । यदि तद्धितार्थे द्विगुर्भवतीत्युच्यते, तद्धितोत्पत्तिः प्राप्नोति । उत्पद्यताम् ; लुग्भविष्यति । लुक्कृतानि प्राप्नुवन्ति । कानि पुनस्तानि ? पञ्चपूली दशपूली इति ; 'न तद्धितलुकि' (पा. ४. १. २२.) इति ङीप्प्रतिषेधः प्राप्नोति ; पञ्चगवं दशगवमिति 'गोरतद्धितलुकि' इति टच् न प्राप्नोति । नैष दोषः ; अविशेषेण द्विगोः ङीप् भवतीत्युक्त्वा अपरिमाणविस्ताचितकम्बल्येभ्यः समाहारे इति वक्ष्यामि ; अविशेषेण च गोष्टच् भवतीत्युक्त्वा द्विगोः समाहारे इति वक्ष्यामि ; तदुभयमपि नियमार्थं भविष्यति समाहार एव नान्यत्रेति । एवं तर्हि, अभिधानार्थं समाहारग्रहणम् ; समाहारेणाभिधानं यथा स्यात् न तद्धितार्थेन । यदि स्यात् को दोषः स्यात् ? तद्धितोत्पत्तिः प्रसज्येत । प्रसज्यताम् ; लुग्भविष्यति । लुक्कृतानि प्राप्नुवन्ति । सर्वाणि परिहृतानि । न सर्वाणि परिहृतानि ; पञ्चकुमारि दशकुमारीति "लुक् तद्धितलुकि" (पा. १. २. ४९.) इति ङीपो लुक् प्रसज्यत इति । ननु च यदि तद्धितार्थे द्विगुः इत्युच्यते पञ्चखट्वः दशखट्वः इति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मत्वर्थेऽपि द्विगुसंज्ञायां " द्विगोः " (पा. ४. १. २१.) इतीकारः प्राप्नोति । बहुव्रीहिसंज्ञया द्विगुसंज्ञाया बाधितत्वान्न भविष्यति ; समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवति । यद्युत्तरपदे द्विगुरित्युच्यते, उत्तरपदोक्तिर्वक्तव्या । इयमुच्यते--" उत्तरपदेन परिमाणिना द्विगोः समासवचनम् "; द्वौ मासौ जातस्य द्विमासजातः, द्वे अहनी जातस्य द्व्यह्नजात इति । किमुच्यते परिमाणिनैवेति, न पुनरन्यत्रापि ; तद्यथा—पञ्चगवप्रियः पञ्चगवधन इति । अन्यत्र समुदायस्य बहुव्रीहित्वादुत्तरपदं प्रसिद्धमेव ; तथा हि--" अनेकमन्यपदार्थे " (पा. २. २. २४.) समस्यते, बहुव्रीहिश्च समासो भवति । अथ द्वन्द्वस्य का वार्ता ? द्वन्द्वोऽग्रतो विशेषेण व्याकरिष्यत इति । अथ बहुभिर्बहुव्रीहिः--

' चञ्चद्भुजभ्रमितचण्डगदाभिघातसंचूर्णितोरुयुगलस्य ' । इति । (वेणीसंहारम् १.२१.)

तत्र चञ्चद्भ्यां भुजाभ्यां भ्रमितायाश्चण्डाया गदायाः अभिघातेन संचूर्णितमूरुयुगलमस्येति विग्रहः । न चैतद्वाच्यं समानाधिकरणानामेव बहुव्रीहिः ; " सप्तमीविशेषणे बहुव्रीहौ " (पा. २. २. ३५.) इति ज्ञापकेन वैयधिकरण्येऽपि बहुव्रीहेः स्मरणात् । एतेन सर्वपदप्रधानो द्वन्द्वोऽपि व्याख्यातः ; यथा--

' सूर्यानलानिलहिमांशुधनेशशक्रप्रेताधिनाथवरुणाः करुणास्पदं नः । ' इति ॥

ननु च अन्यपदार्थे बहुव्रीहिः स्मर्यते ; तत्र चित्रगुर्देवदत्तः इति देवदत्तादेरनुप्रयोगो न प्राप्नोति ; न हि चैत्रादिशब्दप्रयोगादवधृतेषु चैत्रादिषु पुनश्चैत्रादिश्रुतयः प्रयुज्यन्ते । नैवम् ; चित्रगुशब्दः चित्रगवीनां स्वामिसामान्यमभिधत्ते ; तत्रावश्यं विशेषार्थिना विशेषोऽनुप्रयोक्तव्यः । चित्रगुः कः ? देवदत्त इति ; यत्र त्वसाधारणविशेषणादिभिर्विशेष एव समासः तत्रानुप्रयोगो न भवत्येव ; यथा--त्रिलोचनः, शूलपाणिरिति । एवं तर्हि, सामान्यवचनानामनुप्रयोगस्याप्राप्तिः ; यथा—चित्रगु सर्वम्, चित्रगु विश्वम्, इति । सामान्यमपि यथा विशेषः ; तथा हि—यथा चित्रगुशब्दादिप्रयोगे विशेषान्तराणां निवृत्तिः, तथा सर्वादिशब्दप्रयोगे विशेषाणां निवृत्तिः प्रतीयते । यदि वा, चित्रा गावोऽस्य देवदत्तस्येति षष्ठ्यर्थस्य समासेनाभिधानात् षष्ठी नानुप्रयुज्यते ; संबन्धी तु न समासोपादान इत्यनुप्रयुज्यते । एवं तर्हि, विभक्त्यर्थाभिधायिनो बहुव्रीहिपदस्य देवदत्तादिभिर्द्रव्यवचनैः सामानाधिकरण्यं न प्राप्नोति । मतुब्लोपाद्भविष्यति । नैवम् ; मतुपोऽपि संबन्धार्थत्वात् द्रव्यवचनैरसामानाधिकरण्यमेव । न च बहुव्रीहेः विभक्त्यर्थाभिधायिनो मतुप्प्रत्ययो विधातुं शक्यते ; स हि प्रथमासमर्थादस्त्युपाधिर्विधीयते ; न च विभक्त्यर्थवृत्तेर्बहुव्रीहिपदस्यास्त्यादिक्रियाभिः सामानाधिकरण्येन संबन्धो भवति । अथ, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति सामानाधि-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative
FRONTIER CIRCLE LIBRARY

करण्यमुपपत्स्यते। तन्न; अभिहितोऽप्यसौ यतो यत्रेत्यादिवन्न स्वरूपं हास्यति। एवं तर्हि, यथा—जातौ पदार्थे जातेः कार्यमुच्यमानमसंभवात् तत्सहचरितासु व्यक्तिषु निविशते, तथा बहुव्रीह्यर्थे संबन्धे सामानाधिकरण्याक्रियायोगादिकार्यं प्रयुज्यमानं तदाश्रये भविष्यति; एवं च सोऽयमित्युपचरितसंबन्धेषु संबन्धिषु बहुव्रीहिपदैरभिधीयमानेषु, शुक्लादिविशेषणानामिवाश्रयतो लिङ्गवचनान्यपि न विरोत्स्यन्ते। यदि वा, अन्यपदार्थ इत्यर्थग्रहणसामर्थ्यात् सद्रव्यस्य सलिङ्गस्य ससङ्ख्यस्य चोपादानं भविष्यति, न विभक्त्यर्थमात्रस्य। कथं पुनरर्थशब्दोपादानादयमर्थो लभ्यते? श्रूयताम्—अन्यपद इतीयत्युच्यमाने पदे वृत्त्यसंभवात् पदसहचरितां यां कांचिदर्थमात्रां पदशब्दो लक्षयेत्; पदत्वस्य वा निमित्तत्वेन प्रत्यासन्नोपकारिणं विभक्त्यर्थं प्रत्याययेत्; सोऽयमेवं सिद्धे समीहिते, यदर्थग्रहणं करोति तेनैतत् ज्ञापयति—यावानर्थश्रुतेः पदविषयोऽर्थः प्रतीयते, तावान् सर्वोऽपि त्यागनिमित्ताभावादुपादीयत इति। अपि च, पदमर्थस्य परिच्छेदायोपादीयते; अर्था हि प्रकृत्यादीनां सामान्येन प्रसक्ताः पदेनावच्छिद्यन्ते पदावधिकोऽर्थ उपादेय इति; तत्र यथा वाक्यार्थस्यानाश्रयणमाधिक्यात् तथा पदार्थैकदेशस्यापि, न्यूनत्वात्। तदेवमर्थग्रहणसामर्थ्यात् सलिङ्गः ससङ्ख्यः सद्रव्यश्च समर्थः पदार्थ उपादीयते। ननु च बहुव्रीहिणा समस्तपदार्थाभिधाने यथा संबन्धाभिधायिका षष्ठी न प्रयुज्यते, तथा संख्याभिधायिनः स्वादयः लिङ्गाभिधायिनष्टाबादयो वा न प्रयुज्येरन्। उच्यते—एकादिपदैरिव वृत्तिपदैरभिहिताऽपि न संख्या संख्याकार्यं विन्नयिष्यति; न हि षष्ठ्यादिविधान इव वचनविधावनभिहिताधिकारो विद्यते, कर्मादयश्च कारकविशेषाः प्रत्याययितव्या[1] इत्यवश्यविधेया द्वितीयादयः; प्रथमा तु वचनग्रहणसामर्थ्यात् न केवला प्रकृतिः प्रयोक्तव्या इति समयाद्वा प्राथमिककल्पिकी भविष्यति। स्यादेतत्; यथा अभिहिता एकत्वादयो वचनव्यवस्थानिमित्तं तथाऽभिहितः संबन्धोऽपि षष्ठीनिमित्तं भवति। तदयुक्तम्, अनभिहिताधिकारात्। अपि च, संबन्धोपसर्जनं प्रातिपदिकार्थो वृत्तिशब्देनाभिधीयते; न चायं षष्ठीविषयः, तस्याः प्रातिपदिकार्थोपसर्जने संबन्धे विधानात्। टाबादयस्तु स्वार्थिकत्वादभिहितेऽपि लिङ्गे भवन्ति; तदुक्तम्—'सिद्धं तु स्त्रियाः प्रातिपदिकविशेषणत्वात् स्वार्थे टाबादयः' इति (महाभाष्यम् ४. १. १. १.)। यदि वान्य एव वाक्यार्थो वृत्त्यर्थात्; तथा हि—चित्रा गावोऽस्येत्यन्यपदार्थोपसर्जनाश्चित्रगव्यो वाक्येनाभिधीयन्ते; चित्रगुरिति पुनर्वृत्तौ गवार्थोपसर्जनस्वामी प्रतीयते; तत्र यदा निर्ज्ञातपराधीनतानां चित्रगवीनां स्वामिविशेषावच्छेदायान्यपदार्थ उपादीयते अस्यैता गाव इति, तदा बहुव्रीहिर्न भवति; यदा तु ताश्चित्रा गावः स्वामिनो विशेषाभिधानाय प्रत्यवमृश्यन्ते—चित्रगवीनामासामयं स्वामीति, तदा बहुव्रीहिर्भवति—चित्रगुः शबलगुरिति; तामेव च स्वामिविशेषणतां स्फुटमुपदर्शयन्तो निदर्शयन्ति—यस्य चित्रा गावः स चित्रगुः, यस्य शबलाः स शबलगुरिति। उपलक्षणं चात्र षष्ठी; तेन

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कर्मकर्तृप्रवचनेनाप्रथमाया अपि बहुव्रीहिर्वक्तव्यः--ऊढो रथोऽनेन ऊढरथोऽनड्वान्, उद्धृतः ओदनः अस्याः उद्धृतौदना स्थाली, उपहृतः पशुः अस्मै उपहृतपशू रुद्रः, आरूढो वानरोऽमुम् आरूढवानरो वृक्षः, प्राप्ता अतिथयोऽस्मिन् प्राप्तातिथिर्ग्रामः, सिद्धः साधकोऽनया सिद्ध-साधका विद्येति। अथ अप्रथमाया इति किमर्थम्? इह माभूत्—वृष्टे देवे गत इति। अथेह कस्मान्न भवति--वृष्टे देवे गतं पश्येति? बहिरङ्गाऽत्राप्रथमा। यद्येवं षष्ठ्याद्यन्तरङ्गत्वे चित्रगोर्देवदत्तस्येत्यादौ पुनः षष्ठ्यादयो न स्युः। बाह्यं संबन्धिनमपेक्ष्य भविष्यन्ति। अथ, यथा चित्रगुप्रभृतिभ्यः षष्ठ्यादयः, तथा यतो यत्रेत्यादिभ्यः पञ्चमीसप्तम्यादयोऽपि कस्मान्न भवन्ति? उच्यते--तसिल्त्रलादिभिः पञ्चमीसप्तम्यादीनामभिहितोऽर्थोऽनन्तर्भूतः। चित्रगुप्रभृतिषु तु बहुव्रीहिणाभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति। अथेह बहुव्रीहिः कस्मान्न भवति—पञ्चभिर्भुक्तमस्य? बहुव्रीहिः समानाधिकरणानामेवेति स्मरणात्। यद्येवम्, अस्तिक्षीरा, उच्चैर्मुखः, अभार्यः, प्रपर्णः, उष्ट्रमुखः, चन्द्रवदना, केशचूडः, सुवर्णालङ्कारः, चन्द्रशेखरः, शूलपाणिः, कण्ठेकालः, उरसिलोमेति बहुव्रीहिसंज्ञा न प्राप्नोति; तथा हि—आद्येषु चतुर्षु पूर्वपदमव्ययम्, तस्यासत्त्ववाचित्वात् सत्त्वभूतैः क्षीरादिभिः सह सामानाधिकरण्यं नास्ति; मध्यमेष्वपि विशेषणविशेष्यभावानुपपत्तेर्न सामानाधिकरण्यं घटते; अन्त्येषु तु सप्तम्यन्तप्रथमान्तयोरसामानाधिकरण्यं व्यक्तमेवेति। नैवम्, एतेष्वपि सामानाधिकरण्यो-पपत्तेः। तत्रास्तीति निपातो विभक्तिप्रतिरूप इति कालं पुरुषं संख्यां साधनं च न व्यभिचरति; उच्चैःशब्दस्यापि सत्त्ववचनत्वं दृश्यते—'किं पुनर्यस्तथोच्चैः' इति; अत एव एताभ्यामस्तितोच्चैस्त्वमिति भावप्रत्यया अपि; अभार्य इत्यादिषु दध्योदनादिवन्मध्यमपदलोपो व्यवस्थितविभाषया वृत्तिविषये द्रष्टव्यः; तेनायमर्थः संपद्यते—अस्ति क्षीरमस्याः अस्तिक्षीरा गौः, उच्चैर्मुखमस्य उच्चैर्मुखो मैत्रेयः, अविद्यमाना भार्या अस्य अभार्यः अविद्यमानभार्यो वा, प्रपतितानि पर्णानि अस्य प्रपर्णः, प्रपतितपर्णो वा। उष्ट्रमुखः चन्द्रवदना इत्येतयोस्तु उष्ट्रचन्द्रशब्दौ भूयोऽवय-वसामान्ययोगातिशयादभेदोपचारेण मुखविशेषणं भवन्तौ गौणीं वृत्तिमनुभवतः। ननु किमुष्ट्रमुख-योर्मिथः सादृश्यम्? उष्ट्रशब्देनेहोष्ट्रमुखमभिधीयते; अवयवेऽप्यवयविवदुपचारो द्रष्टव्य इति। केशचूडः सुवर्णालङ्कारः इत्येतयोस्तु केशसंघाते केशशब्दो वर्तते, सुवर्णविकारे तु सुवर्णशब्दः, कारणे कार्योपचारात्। चन्द्रशेखरः शूलपाणिः इत्यत्र चन्द्रशूलोपलक्षितौ शेखरपाणी चन्द्रशूल-शब्दाभिधेयौ; यथा—कुन्तान् प्रवेशय, यष्टीः प्रवेशयेति। कण्ठेकालः उरसिलोमा इत्येतयोस्तु कण्ठे स्थिताः कालाः अस्य, उरसि जातानि लोमान्यस्येति पदान्तरमध्याह्रियते; यथा—द्वारं द्वारम् इत्युक्ते अपाव्रियतां संव्रियतां वेति। एतेन 'सुबधिकारे अस्तिक्षीरेत्युपसंख्यानम्' 'अव्ययानां बहुव्रीहिर्वक्तव्यः' 'सप्तम्युपमानपूर्वपदस्योत्तरपदलोपश्च' 'समुदायविकारषष्ठ्याश्च' 'प्रादिभ्यो धातुजस्य वा' (महाभाष्यम् २. २. २४.) इत्यपि न वक्तव्यं भवति। ननु परिगणनार्थमप्येतदवश्यं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वक्तव्यम्, नैवम्; क्रियमाणेऽपि हि परिगणने यत्राभिधानं नास्ति न तत्र समानाधिकरणानामपि बहुव्रीहिः; तद्यथा—पञ्च भुक्तवन्तोऽस्येति। एवं तर्हि मत्वर्थग्रहणं करिष्यते—समानाधिकरणानां मत्वर्थे बहुव्रीहिर्भवतीति; तथाऽपि, ऊढो रथोऽनेन ऊढरथोऽनड्वान्, दक्षिणस्याश्च पूर्वस्याश्च दिशो यदन्तरालं सा दक्षिणपूर्वा, पुत्रेण सह सपुत्रः, केशेषु केशेषु च गृहीत्वा प्रवृत्तं युद्धं केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि, त्रिर्दशैते त्रिदशाः, इत्येवमादिभिरव्याप्तिरेव। तस्मात्सुदूरमपि गत्वाऽभिधानमेवाश्रयितव्यम्; अभिधानलक्षणा हि कृत्तद्धितसमासा इति कृतं परिगणनेन। अथ त्रिदशा इति कोऽस्य विग्रहः? त्रिर्दशैते त्रिदशा इति। 'संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिः इति; न हि सुजन्ता संख्याऽस्ति। अस्तु तर्ह्येवं विग्रहः—त्रयो दशत एते त्रिदशा इति। एवमप्यत्कारान्तस्य संख्येत्यप्रसिद्धिः; न ह्यत्कारान्ता संख्याऽस्ति। अस्तु तर्ह्ययमेव विग्रहः—त्रिर्दशैते त्रिदशा इति। ननु चोक्तं संख्यासमासे सुजन्तस्य संख्येत्यप्रसिद्धिरिति। नैष दोषः; सुजन्तस्य संख्येत्यप्रसिद्धिः; न चात्र समासे सुचं पश्यामः। किं तर्हि? वाक्ये। कुतः पुनरेतद्वाक्ये सुच् दृश्यते? अभिहितत्वात्; अभिहितः सुजर्थः। केन? समासेन। किं च भोः सुजर्थे समास उच्यते? नैवम्; सामर्थ्यादिह सुजर्थो गम्यते। कथम्? यावता संख्या संख्यया संख्यायते, स च क्रियाभ्यावृत्त्यर्थ उक्तः समासेनेति कृत्वा सुज् न भविष्यति' (महाभाष्यम् २. २. २५.)॥

प्रकृतिः प्रातिपदिकरूपाऽप्येषोपवर्णिता।
स्वरूपं प्रत्ययादीनां पृथक् पृथगथोच्यते॥

तत्र प्रतीयते अनेनार्थ इति प्रत्ययः; स त्रिधा—धातुप्रत्ययः, प्रत्ययप्रत्ययः, प्रातिपदिकप्रत्यय इति। तेषु सनादयः, तिबादयः, तुमुनादयः, तव्यादयः, ण्वुलादयः, उणादयश्चेति धातुप्रत्ययभेदाः। तत्र इच्छाप्रयोजकव्यापारादिक्रियासु क्रियासमभिहारादिषु च ये विधीयमानाः क्रियावचनत्वात् भूवादिवदेव प्रत्ययान्तरमपेक्षन्ते ते सनादयः; यथा—चिकीर्षति, अध्यापयति, पापच्यते, गोपायति, ऋतीयते, कामयते, इति। क्रियाप्रधानाः कर्तृकर्मणोः क्रियायां च ये विहिताः साध्यरूपापन्नक्रियाभिधायित्वेन प्रत्ययान्तरं नापेक्षन्ते ते तिबादयः; यथा—व्रजति देवदत्तः, पच्यते ओदनः, रज्यति वस्त्रम्, लूयते केदारः, चोरस्य रुजति, आस्यते युष्माभिः इति। अनुपात्तक्रमक्रियाभिधायिनोऽसत्त्वभूतार्थाः साध्यभावे ये विधीयन्ते ते तुमुनादयः; यथा—पक्तुमिच्छति, भुक्त्वा व्रजति, अधीत्य स्नाति, पायंपायमास्ते, चोरंकारमाक्रोशति, चकासाञ्चकार इति। प्रायेण भावकर्मणोः कर्त्रादिषु च ये विधीयन्ते ते तव्यादयः; यथा गन्तव्यं भवता, करणीयः कटः, कृतो भवता, लूयमानः केदारः, दुर्गमो मार्गः, वास्तव्यो लोक इति। प्रायेण कर्तरि कर्मादिषु च ये विधीयन्ते ते ण्वुलादयः;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा पाचकः पुमान्, सोमं पवमानः, पचन्यवागूम्, कन्यामलङ्करिष्णुः, पादहारकः पङ्कः, प्रियंकरणं शीलम्, इति। सर्वकारकेषु सिद्धभावे च ये विधीयमानाः प्रायेण द्रव्यवचनत्वं लभन्ते ते उणादयः; यथा—शीतो वायुः, वत्सला धात्री, तीक्ष्णं दात्रम्, वृद्ध उपाध्यायः; रम्यः प्रासादः, पाको वर्तत इति। यदादयः, घादयः, मवादयः, फगादयः, युजादयः, ढगादयश्चेति प्रत्ययप्रत्ययभेदाः। तेषु भवापत्यस्वार्थमत्वर्थादिषु सुबन्तेभ्यो य उत्पद्यन्ते ते यदादयः, यथा—अप्सव्यः, पूर्वाह्णेतनम्, चिरंतनम्, आमुष्यायणः, त्वयका, शुभंयुः इति। प्रकर्षापकर्षकुत्साप्रशंसादिषु तिङन्तेभ्यो य उत्पद्यन्ते ते घादयः, यथा—पचतितराम्, गच्छतितमाम्, जल्पतिकल्पम्, स्पृशतिदेश्यम्, पचतकि, पचतिरूपम्, इति। निवृत्तस्वार्थमत्वर्थादिषु कृद्भ्यो य उत्पद्यन्ते ते मवादयः; यथा—कृत्रिमम्, पाकिमम्, सांराविणम्, व्यावक्रोशी, जित्वरी, श्यैनंपाता इति। जीवद्वंश्यप्रशस्तकुत्सितस्वार्थादिषु अपत्यादितद्धितान्तेभ्यो य उत्पद्यन्ते ते फगादयः; यथा—गार्ग्यायणः, दाक्षायणः, वार्ष्यायणीयः, वार्ष्यायणिकः, आभिजित्यः, कौञ्जायन्यः इति। सिद्धभावताच्छील्योपाधिकर्त्रादिषु णिजादिधातुप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते युजादयः; यथा—कारणा, अटाट्या, यायजूकः, सासहिः, यायावरः, चिकीर्षुः इति। अपत्याद्यर्थस्वार्थशक्तिसंख्यादिषु स्त्रीप्रत्ययान्तेभ्यो य उत्पद्यन्ते ते ढगादयः; यथा—गाङ्गेयः, यौवतेयः, वाराणसेयः, सुवधूकः, नद्याम्, खट्वायाम्, युवतयः, इति। टाबादयः, स्वादयः, तसिलादयः, कादयः, अणादयः, क्यजादयश्चेति प्रातिपदिकप्रत्ययभेदाः। तेषु प्रकृतिलिङ्गाभिधायिनः प्रातिपदिकाद्य उत्पद्यन्ते ते टाबादयः; यथा—खट्वा, सुदामा, कारीषगन्ध्या, ब्रह्मबन्धूः, कुमारी, युवतिः, इति। प्रकृत्यर्थसंख्याभिधायिनः प्रातिपदिकादेव य उत्पद्यन्ते ते स्वादयः; यथा—कुण्डं, कुण्डे, कुण्डाभ्याम्, कुण्डेभ्यः, कुण्डयोः, कुण्डेषु, इति। शक्तिमात्राभिधायिनः सोपाधिशक्त्यभिधायिनो वा सुबन्तप्रातिपदिकात् स्वार्थादिषु य उत्पद्यन्ते ते तसिलादयः; यथा—यतः, यत्र, कदा, पुरस्तात्, बहुशः, पुरुत्रा वसतीति। कुत्साप्रशंसातिशयानतिशयाद्युपाधेरनुपाधेश्च सुबन्तादेव प्रातिपदिकात् स्वार्थादिषु य उत्पद्यन्ते ते कादयः; यथा—अश्वकः, युष्मकाभिः, वैयाकरणरूपः, पटुतरः, कुटीरः, तार्तीयीकम्, इति। समर्थप्रातिपदिकात् संबन्धिकारकभावेषु य उत्पद्यन्ते ते अणादयः, यथा—औपगवः, तावकीनः, आक्षिकः, वामदेव्यम्, ब्राह्मणत्वम्, पौरोहित्यम्, इति। कर्मादिकारकोपहितक्रियेच्छाचारच्व्यर्थादिषु समर्थादेव प्रातिपदिकाद्य उत्पद्यन्ते ते क्यजादयः; यथा—चित्रीयते, पुत्रकाम्यति, श्येनायते, लोहितायति, कण्डूयते, मुण्डयति, इति॥

प्रकृतिप्रत्ययानामुपसर्गोपग्रहागमलोपवर्णविकारविकरणादिरूपः संस्कारः उपस्कारः। स च त्रिधा—प्रकृत्युपस्कारः, प्रत्ययोपस्कारः, उभयोपस्कारश्चेति। ते पुनर्भूषणसमवायाध्याहारवैकृतयत्नप्रतियत्नभेदात् प्रत्येकं षट्प्रकारा भवन्ति। तत्र प्रकृत्युपस्काररूपा निरर्थकोपसर्गस्वार्थि-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कवैकल्पिकादयः ; यथा—अध्यागच्छति, पर्यागच्छति, प्रलम्बते, निम्रञ्जति इति ; यावकः, षाड्गुण्यम्, औपयिकम्, मानसम्, इति ; आली, मृद्वी, कमण्डलूः, चञ्चूः, इति । समवायरूपाः सार्थकोपसर्गसन्क्यङादयः, यथा—आशास्ते, प्रतिष्ठते, सुमनायते, दुर्मनायते, इति ; जुगुप्सते, गोपायते, ऋतीयते, कामयते, इति ; पुत्रीयति, पुत्रकाम्यति, श्येनायते, मुण्डयति इति । अध्याहाररूपाः सहाभिधायकोपसर्गद्विर्वचनसुडागमादयः ; यथा—अधीते, अध्येति, अनुरुध्यते, संग्रामयते, इति ; जञ्जप्यते, संपनीपद्यते, अरार्यते, उन्दिदिषति इति ; उपस्कुरुते, अपप्तत्, आस्थत्, मध्वस्यति, इति । वैकृतरूपाः वर्णव्यत्ययविपर्ययापायादयः ; यथा—निषिञ्चति, प्रणयति, यन्ति, उशन्ति इति ; तरुः, सिंहः, सिकताः, सक्तवः इति ; सन्ति, घ्नन्ति, घ्नन्ति, समगत, इति । यत्नरूपाः उपचयप्रसवसंवृत्यादयः ; यथा—यौति, मेद्यति, दीव्यति, निगूहति इति ; कीर्यते, पूर्वते, सौध्रातकिः, स्वायंभुवम्, इति ; आस्त, आस्ते अवोचत्, घटयति, इति । प्रतियत्नरूपाः विशेषादेशविधिनिषेधादयः ; यथा—आह, अघसत्, वध्यात्, अध्यगीष्महि, इति ; जप्यः, पित्र्यम्, गव्यम्, नाव्यम्, इति ; तितउः, प्रउगम्, कोकूयते, कथयति, इति ॥

प्रत्ययस्य भूषणरूपाः इडसुगीकक्कादयः ; यथा—सहिता, वरिता, भ्रुवै, भ्रूणाम्, इति ; देवासः, पारयामसि, तारिषत्, भवाति, इति ; तार्तीयीकम्, पीत्वाय, त्वयका, पचतकि, इति । समवायरूपाः स्यसिचूसीयुडादयः ; यथा—करिष्यति, अकरिष्यत्, वक्ता, ब्रवीति, इति ; अपाक्षीत्, अपीपचत्, अशिषत्, अलिक्षत्, इति ; कृषीष्ट, कुर्यात्, कुर्वीत, करवामहै, इति । अध्याहाररूपाः प्रत्ययार्थविशेषकोपसर्गमतरवादयः ; यथा—सुमनायते, दुर्मनायते, अभिमनायते, अभिषेणयति, इति ; कृत्रिमम्, सांराविणम्, व्यावहासी, कौञ्जायन्यः, इति ; पचतितराम्, पचमानः, सर्वेषां, वृक्षाणाम्, इति । वैकृतरूपा आदेशसर्वादेशप्रत्ययादेशादयः ; यथा—गार्ग्यायणः, चान्द्रमसायनिः, गौधेरः, कौलेयकः, इति ; पवनः, पावकः, वृक्षस्य, वृक्षैः, इति ; वेद, विवेद, विद्वान्, विद्धि, इति । यत्नरूपा लुग्लुम्पनविलुम्पनादयः ; यथा—पचत्, जुहोति, पञ्चालाः, दधि, इति ; ददर्श, अद्राक्षीत्, कारकः, कामण्डलेयः, इति ; अग्निचित्, शुभंयाः, मूलखाः, अश्वति, इति । प्रतियत्नरूपा विशेषादेशविधिनिषेधादयः ; यथा—तस्थौ, वेद, प्रशाधि, जीवतात् इति ; उदपादि, राथ्रियः, आग्नेयः, स्त्रैणम्, इति ; सुभ्रूः, सुप्रेयसी, व्यतिहसन्ति, व्यतिगच्छन्ति इति । उभयोर्भूषणरूपा युष्मत्प्रभृतिप्रयोगादयः ; यथा—त्वं पचसि, युवां पचथः, यूयं पचथ, अहं पचामि, आवां पचावः, वयं पचामः, वायुर्वाति, देवो वर्षति, भज्यते शाखा स्वयमेव, अवकिरते हस्ती स्वयमेव, भूषयते कन्या स्वयमेव, ब्रूते कथा स्वयमेवेति । समवायरूपा विकरणादयः ; यथा—भवति, चोरयति, दीव्यति, सुनोति, तुदति, तनोति, रुणद्धि, क्रीणाति, स्वयं नमते, स्वयं दुग्धे, तप्यते तपः, लूयते

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

केदारः इति। अध्याहाररूपाः द्विरुक्त्यादयः; यथा—पायं पायं, पचतिपचति, ग्रामो ग्रामो रमणीयः, मूले मूले स्थूलाः, अग्रे अग्रे सूक्ष्माः, पूर्वं पूर्वं पुष्यति, प्रथमं प्रथमं पच्यते, ज्येष्ठं ज्येष्ठमुपवेशय, माषं माषं देहि, उपर्युपर्यास्ते, अहिरहिः बुध्यस्व इति। वैकृतरूपा वांनावादयः; यथा—ग्रामो वां, ग्रामो नौ ग्रामो वः, ग्रामो नः, ग्रामस्ते, ग्रामो मे, ग्रामस्त्वा रक्षतु, ग्रामो मा रक्षतु, हैयङ्गवीनम्, मातुलः, क्षत्रियः, श्रोत्रियः इति। यत्नरूपा अनुप्रयोगादयः; यथा—अग्निसात् संपद्यते, भस्मसाद्भवति, ब्राह्मणसात् स्यात्, देवत्रा करोति; मर्त्यत्रा गच्छति, मनुष्यत्रा वसति, शुक्लीभवति, पटपटाकरोति, चकासांचकार, कारयामास, बिभरांबभूव, विदांकुर्वन्तु इति। प्रतियत्नरूपा विध्यनुप्रयोगादयः; यथा—रैपोषं पुष्यति, समूलकाषं कषति, जीवग्राहं गृह्णाति, पुरुषवाहं वहति, ऊर्ध्वशोषं शुष्कः, चूडकनाशं नष्टः, ओदनपाकं पक्वः, सुवर्णनिधायं निहितः, लुनीहि लुनीहीत्येवायं लुनाति; अधीष्वाधीष्वेत्येवायमधीते; राष्ट्रमट मठमट दूरमटेत्येवायमटति, सक्तून् पिब धानाः स्वाद ओदनं भुङ्क्ष्वेत्येवायमभ्यवहरति, इति। उपस्कारविशेष एव प्रकृतिसमीपोच्चारितं पदमुपपदम्; तत् त्रिधा—तिङुपपदम्, कृदुपपदम्, सुबुपपदं च। तेषु प्रथमं क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम्, उपसर्गरूपं च। तेषु क्रियारूपं यथा—एहि मन्ये रथेन यास्यसि, न मर्षयामि यत्तत्रभवान् वृषलं याजयेत्। कारकरूपं यथा—अश्वेन संचरते, दास्या संप्रयच्छते। नामरूपं यथा—कालो यद्भुञ्जीत भवान्, समयो यद्भुञ्जीत भवान्, वेला यद्भुञ्जीत भवान्। अव्ययरूपं यथा—कथं नाम तत्रभवान् वृषलं याजयेत्, नमते दण्डः स्वयमेव। निपातरूपं यथा—यावद्भुङ्क्ते, पुरा व्रजति। उपसर्गरूपं यथा—पराक्रमते, पराजयते इति। द्वितीयमपि क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम्, उपसर्गरूपं च। तेषु क्रियारूपं यथा—भोक्तुं व्रजति, भोजको व्रजति, गोदायो व्रजति, कर्तुमिच्छति इति। कारकरूपं यथा—कुम्भकारः, उत्तानशयः, शय्योत्थायम्, मूलकोपदंशम्, इति। नामरूपं यथा—कालो भोक्तुम्, समयो भोक्तुम्, ब्रह्मभूयम्, ब्रह्मोद्यम् इति। अव्ययरूपं यथा—दिवाकरः, दोषाकरः, मृषोद्यम्, ईषत्पानः, इति। निपातरूपं यथा—अलं कृत्वा, खलु कृत्वा, यावद्वेदम्, अन्यथाकारम् इति। उपसर्गरूपं यथा—प्रजवी, प्रसवी, विकत्थी, निराकरिष्णुः इति। तृतीयं क्रियारूपम्, कारकरूपम्, नामरूपम्, अव्ययरूपम्, निपातरूपम्, कर्मप्रवचनीयरूपं चेति। तेषु क्रियारूपं यथा—न त्वां तृणाय मन्ये, संतापाय प्रभवति, गोषु दुह्यमानासु गतः, क्रोशतः प्राव्राजीदिति। कारकरूपं यथा—

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम्।
केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

केशेषु प्रसितः, ब्राह्मणेषु भुञ्जानेषु वृषला आसते, वृषलेष्वासीनेषु ब्राह्मणा भुञ्जते, इति । नामरूपं यथा—गवां स्वामी, अन्नस्य हेतोर्वसति, पित्रा सदृशः, शिवं प्रजाभ्यः इति । अव्ययरूपं यथा--समया ग्रामम्, सह च्छात्रेण, नमो देवेभ्यः, दक्षिणाहि ग्रामात् इति । निपातरूपं यथा—हे देवदत्त, हा देवदत्तम्, विना विष्णुमित्रेण, ऋते यज्ञदत्तात् इति । कर्मप्रवचनीयरूपं यथा—वृक्षमनु विद्योतते, उपार्जुनं योद्धारः, अधि ब्रह्मदत्ते पञ्चालाः, अधि पञ्चालेषु ब्रह्मदत्त इति ॥

प्रकृतिप्रत्ययावेवमुपस्कारश्च दर्शितः ।
क्रमादुपपदस्यापि स्वरूपमुपवर्णितम् ॥

अव्ययानि निपाताश्च गतयश्च निरूपिताः ।
कर्मप्रवचनीयाश्च सोपसर्गाः प्रकाशिताः ॥

न केवलेह प्रकृतिः प्रयुज्यते
न केवलाः सुप्तिङ्जण्क्यजादयः ।
भवत्युपस्कार इहापृथग्द्वयो-
र्द्वयार्थमेवोपपदं प्रयुज्यते ॥

॥ इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रकृत्यादिप्रकाशो नाम प्रथमः प्रकाशः ॥




CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

# द्वितीयः प्रातिपदिकादिप्रकाशः



प्रातिपदिकं त्रिधा—विभक्तावयवम्, अविभक्तावयवम्, अनुकरणं च। तत्र विभक्तावयवं त्रिधा—कृद्रूपम्, तद्धितरूपम्, समासरूपं च। तेषु भावकारकाभिधायिनो धातुप्रत्ययाः कृतः। तत्र धात्वर्थ एवापूर्वापरीभूतो भावः; यदाह—

> कालानुपाति यद्रूपं धात्वर्थस्य क्रियेति तत्।
> परितो यत् परिच्छिन्नं तद्भाव इति कथ्यते॥

स इह षोढा संभवति—सिद्धः, साध्यः, सिद्धासमाप्तः, साध्यासमाप्तः, सिद्धसाध्यः, साध्यसिद्धश्चेति। तेषु उद्भूतप्रत्ययांशत्वेन क्रियानुद्रेकात् सत्त्वभूतत्वे लिङ्गसंख्याद्युपग्राही 'कर्तृकर्मणोः कृति' (पा. २. ३. ६५.) इति संबन्धविभक्तेर्निमित्तं सिद्धः; यथा—आश्चर्यमिदमोदनस्य च पाको ब्राह्मणानां च प्रादुर्भावः, भेदिका काष्ठानां देवदत्तस्य, चिकीर्षा यज्ञदत्तस्य कटस्य इति। अत्र उभयप्राप्तौ कर्मण्येव इति नियमे उभयोः प्राप्तिर्यस्मिन् कृति इति व्याख्यानात्, अकाकारयोश्च नियमप्रतिषेधात्, कर्तर्यपि षष्ठ्येव भवन्ती भावस्य सिद्धतां द्योतयति। उद्भूतप्रकृत्यंशत्वेन क्रियोद्रेकादसत्त्वभूतत्वे लिङ्गसंख्याद्यनुपग्राही कर्तृकर्मणोः कारकविभक्तेरेव निमित्तं साध्यः; यथा—ओदनं भोक्तुं याति, स्वाध्यायमधीत्य स्नापयति, पयः पायं पायमास्ते इति। अत एव 'न लोक' (पा. २. ३. ६९.) इत्यादिना षष्ठी निषिध्यते। सिद्ध एव तद्धितानुबन्धी सिद्धासमाप्तः; यथा—व्यावक्रोशी, साङ्कूटिनम्, कृत्रिमम् इति। अत्र यथा आभिजित्यः, कौञ्जायन्यः इत्यादावणाद्यभिहितोऽप्यपत्यार्थः, तैत्तिरीयाः छागलेयिनः इत्यादौ छणाद्यभिहितोऽपि प्रोक्तार्थः, स्वार्थिकाध्येतृवेदितृविषयतद्धितोत्पत्तिमन्तरेण न समाप्यते, तथा व्यतिहाराभिविध्युपाधिको णजिनुणुक्तः शुद्धश्च कृत्यभिहितः सिद्धोऽपि भावः स्वार्थिकनिवृत्तार्थीयतद्धितोत्पत्तिमन्तरेण न समाप्यत इति सिद्धासमाप्तो भवति। साध्य एवानुप्रयोगानुबन्धी साध्यासमाप्तः; यथा—चकासाञ्चकार, विदाङ्कुर्वन्तु, रैपोषं पुष्यति इति। अत्र यथा शुक्लीभवति, पटपटाकरोति, इत्यादावभूततद्भावादिषु च्व्याद्यन्तम्, लुनीहि लुनीहीत्येवायं लुनाति, राष्ट्रमट मठमट दूरमटेत्येवायमटति, इत्यादिषु क्रियासमभिहारादिषु लोडन्तम् अनभिव्यक्तपदार्थकत्वादसमाप्तं स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं चापेक्षते, तथा आमन्तं णमुलन्तं चानभिव्यक्तपदार्थकत्वादसमाप्तं साध्यरूपमेव स्वार्थाभिव्यक्तये कृभ्वाद्यनुप्रयोगं यथाविध्यनुप्रयोगं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

चापेक्षत इत्येतदुक्तो भावः साध्यासमाप्तो भवति। तदाह—'आम इव णमुलोऽप्यसमाप्तार्थत्वाच्चादिवदनुप्रयोगः सिद्ध एव यथाविध्यर्थं तु वचनं कषादिषु यथाविध्यनुप्रयोगः' इति। तेन चकासांचकार इत्यादिनाऽयमर्थो भवति—चकास्ति स्म, विदन्तु, रायः पुष्यन्नमुं पुष्यति, इति। अत एव क्रियाविशेषणेनैव सिद्धमिति न केचित् णमुलप्रकरणमारभन्ते। ननु च क्रियाविशेषणानां कर्मता नपुंसकता च; कथं च पुषेरेव पुषिः कर्म भवति? न ह्यात्मनैवात्मा व्याप्यते; न हि सुशिक्षितोऽपि वटुः स्वं स्कन्धमारोढुं शक्नोति। नैवम्; नागरकं वृत्तं वर्तेत, विश्वजिता यजेत, इत्यादौ सामान्यविशेषयोरनैकात्म्येन व्याप्त्यवच्छेदयोरुपलम्भात् सामान्यपुषेरेवावयवपुषिः कर्म भवति। न च क्रियाविशेषणानां कर्मतैवेति नियमः; क्रिया हि यथा साध्यमानत्वात् कर्म, तथोत्पद्यमानत्वात् कर्त्र्यपि भवति; ततश्चोभयथाऽपि क्रियाविशेषणानि योज्यन्ते—रैपोषं कृत्वा पुष्यति, रैपोषं यथा भवत्येवं पुष्यतीति। सिद्ध एव साध्यधर्मयोगी सिद्धसाध्यः; यथा—आश्चर्यो गवां दोहोऽशिक्षितेनागोपालेन, साधु खलु पयसः पानं यज्ञदत्तेन, विचित्रा हि सूत्रस्य कृतिः पाणिनिना, इति; अत्र उभयप्राप्तौ कर्मण्येव षष्ठीति कर्तरि तृतीयाम्नानात् सिद्धोऽप्ययं विवक्षातः साध्योऽपि भवतीति ज्ञायते। अन्ये त्वन्यथा सिद्धसाध्यं वर्णयन्ति—उष्ट्रासिकामास्ते, पञ्च वारान् भुङ्क्ते, पञ्च प्रयोगान् पचति इति। अत्रोष्ट्रासिकावारप्रयोगाणां क्रियाविशेषावृत्त्यनुष्ठानरूपत्वेनापृथग्भावात् क्रियाभिख्याप्यानां द्वितीयादर्शनादभेदविवक्षातः सिद्धानामपि क्रियावदेव साध्यत्वमवगम्यते; तदाह—

तत्स्वभावविशेषत्वाद्व्याप्या नोष्ट्रासिकाऽनया।
साध्यत्वे त्वासनैकात्म्यात् फलतः कर्म कथ्यते॥

सोऽयमित्यभिसंबन्धादभेदे धर्मधर्मिणोः।
क्रियाया इव साध्यत्वं वारादीनां न दुष्यति॥

तेन उष्ट्रासिकामास्ते इत्यादीनामयमर्थो भवति—उष्ट्रवदास्ते, पञ्चावृत्तिं भुजिक्रियां करोति, पञ्च पाकान्निर्वर्तयति इति। साध्य एव सिद्धधर्मयोगी साध्यसिद्धः; यथा—कर्तव्यं भवतः, कार्यं भवतः इति। अत्र 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (पा. २. ३. ६९.) इति लादीनां साध्यार्थाभिधायित्वात् कर्तृकर्मणोः षष्ठीनिषेधे, 'कृत्यानां कर्तरि वा' 'क्तस्य च वर्तमाने' (पा. २. ३. ७१. ६७.); नपुंसके भावे उपसंख्यानम्' इत्यादिभिः पुनः षष्ठीविधानात् पक्षे विवक्षातः सिद्धार्थाभिधायित्वमवगम्यत इत्येतदुक्तो भावः साध्यसिद्धो भवति। न चात्र कृत्यानां निषेधो न श्रूयते, यतः खलर्थतृनामित्यत्र खलर्थेत्यनेन कृत्यक्तखलर्थाः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

शतृशानच्चानशश्च संगृह्यन्ते ; तृन्नित्यनेन पुनस्तृन्नेवेति । अत एव निष्ठादिभावस्येव कृत्यभावस्य कर्मण्यपि षष्ठी न भवति ; यथा—

गतमस्तं यथाऽर्केण यथाऽभ्युदितमिन्दुना ।
तथा मानेन शैथिल्यमागन्तव्यं मृगीदृशः ॥

कथं पुनः सकर्मकात् भावप्रत्ययः ? तेन ह्यकर्मकाद्भवितव्यम् ; यदाह 'लः कर्मणि च भावे चाकर्मकेभ्यः' (पा. ३. ४. ६९.) 'तयोरेव कृत्यक्तखलर्थाः' (पा. ३. ४. ७०); न हि भवति कृतं कटं देवदत्तेनेति । उच्यते—नैतदन्तरङ्गं द्रव्यकर्म, अपि तु 'कालाध्वभावगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्' इति बहिरङ्गेषु कालादिकर्मसु गन्तव्यलक्षणं गत्यर्थकर्म ; बहिरङ्गता च 'कालाध्वनोरत्यन्तसंयोगे' (पा. २. ३. ५.) इत्यनेन द्वितीयाविधानेन, भावस्य च कालादभेदेन, गन्तव्यस्य तु 'गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ' (पा. २. ३. १२.) इति पुनर्द्वितीयाग्रहणेन ज्ञायते ; अन्यथा हि कर्मणि द्वितीयायाः सिद्धत्वात् गत्यर्थकर्मणि चतुर्थी चेत्येव ब्रूयात् । यस्यैव च द्रव्यकर्मणोऽन्तरङ्गस्याभावेनाकर्मकः, तस्यैव भावेन सकर्मको भवति ; अतो विद्यमानमपि कालादिकर्म नाकर्मकव्यपदेशं विघ्नयति । अन्ये त्वन्यथा साध्यसिद्धं वर्णयन्ति—उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, यवाग्वाः पाकाय व्रजति इति । अत्र आसिकाशायिकयोराख्याताभिहितक्रियात्मकत्वात् पाकस्य व्रजिक्रियासाध्यत्वात्, सत्यपि साध्यत्वे लिङ्गसंख्यासंबन्धिविभक्तियोगाद्विवक्षातः सिद्धत्वमपि गम्यत इत्ययं साध्यसिद्धो भवति । तथाऽपि उष्ट्रासिका आस्यन्ते, हतशायिकाः शय्यन्ते, इत्यमूभ्यां सामान्यविशेषोपचरितरूपो भावात्मैव प्रत्याय्यते ; स आख्याताभ्यां सामान्यरूपेण, ण्वुलन्ताभ्यां विशेषरूपेण । बहुवचनं तु कुत्सातिशयार्थम् ; या हि नामोष्ट्रस्य कुत्सावत्यो बहुप्रकारजुषो बह्वयः आसिकाः, याश्च हतानामतिशयवत्यस्तथाभूता एव भूयस्यः शायिकाः प्रतीताः, ताभिः विशेषरूपाभिरियमासिका शायिका च उपमानोपमेयसंबन्धजनितभेदाभेदपरिग्रहाल्लकारेणापि सामान्यविशेषभावेन कुत्सातिशयार्थं बहुत्वेनैव प्रत्याय्यते, बहुत्वेन विना सामान्यविशेषभावानुपपत्तेः ; तेनोष्ट्रासिका इवासनानि हतशायिका इव शयनानि क्रियन्ते भवन्तीति वा वाक्यार्थो भवति । नन्वेवमुष्ट्रासिकादीनां वारप्रयोगादीनां च कर्मतेव नपुंसकताऽपि प्राप्नोति ; यथा—मृदु पचति, प्रशस्तं पचतीति । उच्यते—त्रिधा खलु क्रियाविशेषणं भवति—बाह्यम्, आभ्यन्तरम् ; बाह्याभ्यन्तरं च ; तत्र बाह्यं धर्मरूपं वारादि ; आभ्यन्तरं विशेषरूपमुष्ट्रासिकादि, बाह्याभ्यन्तरं गुणरूपं मृद्वादि । तेषु बाह्यं सोऽयमित्यभिसंबन्धादभेदोपचारेणाविचलितस्वरूपमेव प्रधानं विशिषत् कथमिव स्वलिङ्गं जह्यात् ? आभ्यन्तरं तु विशेषांशपरिग्रहादाविष्टलिङ्गसंख्यं कथमिव वाऽन्यलिङ्गं गृह्णीयात् ? बाह्याभ्यन्तरं तु गुणत्वात् स्वलिङ्गविरहे 'गुणवचना-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नामाश्रयतो लिङ्गवचनानि’ (महाभाष्यम् १. २. ६४.) इति विशेष्यलिङ्गग्राह्येव भवति; तत्र साध्यैकस्वभावत्वादलिङ्गसंख्यायाः क्रियाया विशेषणत्वे मृद्वादीनां नपुंसकत्वमेव न्याय्यम्। उष्ट्रासिकावारादीनां तु नित्यमाविष्टलिङ्गत्वाद्विशेषांशपरिग्रहात् क्रियाविशेषणत्वेऽपि न नपुंसकलिङ्गता। अथ पाकाय व्रजति, एधेभ्यो व्रजति, इति क्रिया रन्धनाय स्थालीतिवत् तादर्थ्यचतुर्थ्यन्तः सिद्ध एव कस्मान्न विज्ञायते? नैवम्, ‘भाववचनाश्च’ (पा. ३. ३. ११.) इति तादर्थ्य एव प्रत्ययोत्पत्तेः, ‘तुमर्थाच्च भाववचनात्’ (पा. २. ३. १५.) इति स्वार्थ एव चतुर्थीविधानात्। किमर्थं पुनरिदम्? भावे हि घञादयः सिद्धा एव, तादर्थ्ये चतुर्थी। क्रियार्थोपपदेन तुमुनाऽस्मिन् विषये घञादयो मा बाधिषत; वासरूपविधिश्चात्र तुमुन्ण्वुलाविति ण्वुल्ग्रहणान्नावतरति। अथ यथैधानाहर्तुं व्रजति एधेभ्यो व्रजतीति ‘क्रियार्थोपपदस्य च कर्मणि स्थानिनः’ (पा. २. ३. १४.) इति चतुर्थी, तथा पाकं कर्तुं व्रजति पाकाय व्रजतीति यदि भवेत्, को दोषः स्यात्? न कश्चित्; किं त्वेतत् पृच्छामि— स पाकः सिद्धः साध्यो वा? यदि सिद्धः किं कर्तुं व्रजति? अथ साध्यः, क्रियार्थोपपदेषु तुमुना घञादयो बाध्यन्ते। अथ तुमर्थत्वेन साध्याभिधायिनश्चतुर्थ्यन्तत्वेन चासत्त्वभूतार्थाः पाकायेत्यादिषु घञादयः, कथं यवाग्वा इत्यादेः संबन्धविभक्तेर्निमित्तं भवति? शब्दशक्तिरेषा यत् कस्यचिदेव केनचित्, केनचिदेव कस्यचित्संबन्धः; तद्यथा—अभिन्नेऽप्यर्थे प्रजागरिताऽपररात्रानिति तृनो बाह्यकर्मोपसर्गकर्मयोगात् जायते, न जागरूक इत्युक्तस्य; ऊरीकरोति पाकादिकमित्यूर्यादीनामेकानेकविशेषस्थया करोतिक्रियया भवति संबन्धः, न तदर्थविषयैः पचादिभिः; सूर्यमपि न पश्यन्ति असूर्यंपश्या राजदारा इति व्यवहितामपि सूर्यकर्मिकां दृशिक्रियां नञ् निषेधति, न सूर्यसत्ताम्; एवं न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते अश्राद्धभोजी ब्राह्मण इति। तथा लवणं न भुङ्क्ते अलवणभोजी भिक्षुः इत्यसूर्यंपश्यादिवदसामर्थ्येऽपि नञ्समासो दृश्यते; न त्वकिंचित्कुर्वाण इति; एवं माषं हरमाणः, अगाधादुत्सृप्त इति। अपि च, पयः पायं पायं, पयः पीत्वा पीत्वा, गेहमनुप्रवेशमनुप्रवेशम्, गेहमनुप्रविश्यानुप्रविश्य, इत्याभीक्ष्ण्यवीप्सयोः पदद्विर्वचनं प्रयोजयन्ति णमुलादयः, न पापच्यते, द्विशो देहीति यङ्शसादयः; लोलूयत इति द्विर्वचनमन्तरेणापि क्रियासमभिहारमवगमयति यङन्तम्, न लुनीहि लुनीहीति लोडन्तम्; कृतपूर्वी कटम्, अधीती व्याकरणम्, इति वृत्तिवशेनोज्झितकर्माभिधानशक्तयः कर्मविभक्तिं न विघ्नयन्ति निष्ठादयः; ग्रामं गन्तुमनाः, कटं कर्तुकाम इति निवृत्तिच्छिन्ना अपि कर्मणि द्वितीयामेव प्रयोजयन्ति तुमुनादयः; उभयप्राप्तौ कर्मण्येवेति नियमेऽपि विचित्रा सूत्रस्य कृतिः पाणिनेः इति, शब्दानामनुशासनमाचार्यस्य इति, समासाय कर्तरि संबन्धविभक्तिमप्युपाददते क्तिनादयः, साध्यार्थाभिधायिनोऽसत्त्वभूतार्था अपि यवाग्वाः पाकायेति कर्मणि संबन्धविभक्त्यैव संबध्यन्ते घञादय इति तदुक्तभावः साध्यसिद्धो भवति॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियानिमित्तं कारकम्; तदपि षोढा—कर्ता, कर्म, करणम्, संप्रदानम्, अपादानम्, अधिकरणं चेति। तत्र कर्ता--स्वतन्त्रः, हेतुः, कर्मकर्ता च; तेषु क्रियायाः स्वेच्छया करणादीनि यः प्रयुङ्क्ते न तु तैः प्रयुज्यते, स स्वतन्त्रः; यथा--पुत्रपौत्रस्य दर्शकः, पुरां भेत्तेति। तमेव क्रियाप्रवृत्तं यः प्रयुङ्क्ते स हेतुः; यथा—राजानं योधितवान् राजयुध्वा धनुष्मान्, नखानि मोचयन्ति नखमुचानि धनूंषीति। कर्मैव स्वातन्त्र्येण विवक्षितं कर्मकर्ता; यथा—स्वयमेव पच्यन्ते पचेलिमा माषाः, स्वयमेव भज्यन्ते भङ्गुराणि काष्ठानि इति। कर्म—निर्वर्त्यं, विकार्यं, प्राप्यं च; तेषु यदसज्जन्यते, सद्वा प्रकाश्यते, तन्निर्वर्त्यम्; यथा—कर्तव्यः कटः, उच्चार्यः शब्दः, इति। यस्य प्रकृत्युच्छेदो गुणान्तरं वोत्पद्यते तद्विकार्यम्; यथा—भुक्त ओदनः; लूयमानः केदारः, इति। क्रियाकृतविशेषानवगतौ कर्तुः क्रिययाऽनास्थितमास्थितं वा यदाप्यते तत् प्राप्यम्; यथा—दुर्दर्शः प्रभुः, सुयानो मार्ग इति। करणं—बाह्यम्, आभ्यन्तरं, बाह्याभ्यन्तरं च; तेषु कर्तुः शरीराद्बहिरुपलभ्यमानं बाह्यम्; यथा—आशितंभवं भक्तम्, धृतोदकः करकः, इति। तद्विपरीतमाभ्यन्तरम्; यथा—प्रियंकरणं शीलम्, वशीकरणं प्रेम, इति। उभयगुणयोगि बाह्याभ्यन्तरम्; यथा—दर्शनं चक्षुः, संवननं साम इति। संप्रदानम्—ददातिकर्माप्यं, कर्ममात्राप्यं, क्रियाप्यं च; तेषु सम्यक् प्रदीयते अस्मै इत्यन्वर्थसंज्ञाया विषयो ददातिकर्माप्यम्; यथा—दीयतेऽस्मै दानीयो ब्राह्मणः; देवा देयासुरस्मै देवदायो डिम्भः, इति। 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा. १. ४. ३२.) इति पारिभाषिकसंज्ञाविषयः कर्ममात्राप्यम्; यथा—दाश्यतेऽस्मै देयमिति दाशः कैवर्तः, गां हन्ति आगतायेति गोघ्नः अतिथिः इति। कर्मशब्देन क्रियाया अप्युपादानात् क्रियया यदाप्यते तत् क्रियाप्यम्; यथा—श्लाघन्तेऽस्मै जना इति श्लाघ्यो राजा, स्पृहयन्त्यस्मै लोकाः स्पृहणीयो विभव इति। अपादानम्—निर्दिष्टविषयम्, उपात्तविषयम्; अपेक्षितक्रियं च; तत्र 'ध्रुवमपायेऽपादानम्' (पा. १. ४. १४.) इति निर्दिष्टविषयम्; यथा—प्रपतनो गिरिः, प्रस्रवणः शैलः इति। भीत्रार्थादियोगोक्तमुपात्तविषयम्; यथा—अवधिः पर्वतः, मर्यादा समुद्रः इति। अधिकरणम्--वैषयिकम्, औपश्लेषिकम्, नैमित्तिकं च; तेषु विविधमनेकप्रकारं जातिगुणक्रियाद्रव्यादिभिः सिनोतीति विषयो देशकालादिः; विषय एव वैषयिकम्; यथा--निपिबन्त्यस्मिन् गवादय इति निपानं जलाशयः, राजानो धीयन्तेऽस्यां राजधानी नगरम् इति। उपश्लेषोऽवष्टम्भः, तस्मै प्रभवत्यौपश्लेषिकम्; यथा--इषवो धीयन्ते अस्मिन् इषुधिः उपासङ्गम्, शेरतेऽस्यां शय्या पर्यङ्कः। निमित्तमेव नैमित्तिकम्, यथा--रज्यन्तेऽस्मिन् सामाजिकमनांसि इति रङ्गः प्रेक्षा, प्रसीदन्ति अस्मिन् नयनमनांसि इति प्रासादः सौधम् इति। तदेतदुभयमपि--शुद्धम्, सङ्कीर्णम्, उपाधिमत्, रूढिमत्, संबन्धि, अनुबन्धि चेति षोढा विप्रथते। तत्र अर्थान्तरैरसंस्पर्शः शुद्धिः; सा भावानां यथा--ओदनस्य पाकः,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अलं कृत्वा, खलु स्थित्वा इति ; कारकाणां यथा—अपां स्रष्टा, वर्षशतस्य पूरकः, सोमं पवमान इति । संपर्कः सङ्करः ; स भावानां यथा—कालो भोक्तुम्, अलं भोक्तुम्, भोजं भोजं व्रजतीति ; कारकाणां यथा—गमनमर्हति गम्या योषित्, जेतुं शक्यते जय्यः शत्रुः, पक्तुं व्रजति, पाचको व्रजतीति । बाह्यमाभ्यन्तरमुभयं वा शास्त्रोपात्तं विशेषणमुपाधिः ; स भावानां यथा—भवतः शायिका, उपसरो गवाम्, समजः पशूनामिति । कारकाणां यथा—तुन्दपरिमृजोऽलसः, स्तम्बेरमो हस्ती, दृतिहरिः पशुः इति । गुणवचनत्वे द्रव्यवचनत्वरूढिः ; सा भावानां यथा—मृगया, वासना, परिव्रज्येति ; कारकाणां यथा—कुम्भकारः, पङ्कजम् अमावास्येति । नियोगतः प्रतियोग्यपेक्षः संबन्धः ; स भावानां यथा—भुक्त्वा व्रजति, भोक्तुमिच्छति, अप्राप्य नदीं पर्वत इति ; कारकाणां यथा—चङ्क्रम्यमाणोऽधीते, अधीयानो वसति, गोदायो व्रजति । अनुषङ्गोऽनुबन्धः ; स भावानां यथा—सांराविणं वर्तते, रैपोषं पुष्यति, चकासांचकार इति ; कारकाणां यथा—अग्निष्टोमयाजी, उष्ट्रकोशशतं दायी इति । अथैतदभिधाने त्रिप्रकाराः कृतो भवन्ति—भाववचनाः, कारकवचनाः, भावकारकवचनाश्च । तेषु अथुजादयः, ण्वुलादयः, णजादयः, तुमुनादयः, सयादयः, णमुलादयश्च भाववचनाः ; ण्वुलादयः, अणादयः, उणादयः, क्विनादयः, शत्रादयः, तृनादयश्च कारकवचनाः ; तव्यादयः, तवायादयः, क्तादयः, खलादयः, लुडादयः, घञादयश्च भावकारकवचनाः । तत्र भाववचनेष्वनुपाधौ सिद्धभावे अथुजादयः ; यथा—नन्दथुः, यज्ञः, स्वप्नः, क्रिया, कण्डूया, व्यज्या इति । अत्रैव रोगाद्युपाधिमति ण्वुलादयः ; यथा—अरोचको बाधते, प्रवाहिकातः करोति, भवत आसिका, इक्षुभक्षिकां मे धारयसि, कां त्वं कारिमकार्षीः, अकरणिस्ते वृषल इति । सिद्धासमाप्ते णजादयः ; यथा—व्यावक्रोशी वर्तते, व्यावहासीं कुर्वन्ति, साङ्कूटिनं वर्तते, सांराविणं कुर्वन्ति, करणेन निर्वृत्तं कृत्रिमम्, पाकेन निर्वृत्तं पक्त्रिमं इति । साध्यरूपे तुमुनादयः ; यथा—भोक्तुं व्रजति, भोक्तुं जानाति, भुक्त्वा व्रजति, अपमित्य याचते, स्वादुङ्कारं भुङ्क्ते, चोरङ्कारमाक्रोशति । तुमर्थ एव छन्दोविषये सयादयः ; यथा—वक्षे रायस्त्वा, दृशे विश्वाय सूर्यम्, अग्निं देवा विभाजं नाशक्नुवन्, ईश्वरोऽभिचरितोः, ईश्वरो विलिखः इति । स्वाध्यायसमाप्ते णमुलादयः ; यथा—समूलकाषं कषति, रैपोषं पुष्यति, चकासांचकार, बिभरांबभूव, चकासामास, विदांकुर्वन्तु इति । कारकवचनेष्वनुद्रिक्तक्रियांशाः कर्तर्येव ण्वुलादयः ; यथा—कारकः, स्रष्टा, नन्दनः, प्रियः, यज्वा, जरन्निति । सोपपदाः कर्त्रादिष्वणादयः ; यथा—काण्डलावः, पादहारकः, सुभगंकरणम्, गोघ्नः, शंभुः, गोष्ठः इति । निरुपपदा रूढिमन्त उणादयः ; यथा—कारुः, दात्रम्, धात्री, दासः, भीष्मः इति । उभयेऽपि लोपवन्तः क्विनादयः ; यथा—घृतस्पृक्, सदृक्, अर्धभाक्, शुभंयुः, प्राङ्, युङ् इति । कर्तर्येवोद्रिक्तक्रियांशाः शत्रादयः ; यथा—यवागूं पचन्, सोमं पवमानः, आशितं दाश्वान्, वेदमनूचानः, भुक्तवानोदनम्, ग्रामं गमी इति । त एव

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

ताच्छील्याद्युपाधिमन्तस्तृनादयः ; यथा—जागरितापररात्राः, मुण्डयितारः श्राविष्ठायनाः, वधूमूढाम्, अलंकरिष्णुः, कतीह कवचमुद्वहमानाः, शतं दायी, पधानाहारको व्रजति इति। भावकारकवचनेषूद्रिक्तानुद्रिक्तक्रियांशाः तव्यादयः ; यथा—कर्तव्यं भवता, करणीयं भवता, कार्यः कटो भवतः, कृत्यः कटो भवतः, वास्तव्यो भवान्, ब्रह्मभूयं भवतः इति । त एव छन्दोविषयास्तवायादयः ; यथा—परिधातवै, परिस्तरितवै, अवचक्षे, अवगाहे, दिदृक्षेण्यः, कर्तुं हविः इति। उद्रिक्तक्रियांशाः क्तादयः ; यथा—भुक्तं भवता, भुज्यमानं भवता, भोक्ष्यमाणं भवता, भुक्तमोदनम्, भुक्त ओदनो भवता, एवं भोक्ष्यमाणः इति । त एव व्यक्तकालाः खलादयः ; यथा—स्वाढ्यंभवं भवता, सूत्थानं भवता, प्राशितंभवं भवता, दुराढ्यंभवं भवता, ईषत्पानः सोमो भवतः, आशितंभवं भक्तम् इति । अनुद्रिक्तक्रियांशाः प्रायो गुणवचना ल्युडादयः ; यथा—व्यासस्य वचनं, पाणिनेरुक्तिः, छात्रस्य हसितं, इध्मानां व्रश्चनं, जनानां भक्तिः, राज्ञां मत इति । त एव प्रायो द्रव्यवचना घञादयः ; यथा—पर्यायः क्रियाणां, विपर्यायः कालस्य, संग्रहः शास्त्राणां, अधीतः स्वाध्यायः, अधिगत उपायः, श्रेयानुपाध्यायः इति ॥

भावकारकसंबन्धिस्वार्थाभिधायिनोऽधातुप्रत्ययास्तद्धिताः । तत्र भावो द्विधा—अन्तरङ्गः, बहिरङ्गश्चेति । तयोः शब्दस्यार्थे प्रवृत्तिनिमित्तमन्तरङ्गः, यदाह—'यस्य गुणस्य हि भावाद्द्रव्ये शब्दनिवेशः, स तस्य भावः ; तदभिधाने त्वतलौ ।' तस्योपसंग्रहाय संग्रहकारः पठति—

'शब्दे तां जातिं शब्दमेवार्थजातौ जातिः शुक्लादौ द्रव्यशब्दे गुणं तम् ।
कृत्तत्संयोगं योगि चाभिन्नरूपं वाच्यं वाच्येषु त्वादयो बोधयन्ति ॥'

ततः स षोढा भिद्यते—जातिः, गुणः, स्वरूपं, संबन्धः, संहतिः, अभिन्नरूपं इति । तेषु जातिर्यथा—गोत्वं, शुक्लत्वं, मानुष्यकं, स्त्रैणं, पौंस्नं, ब्राह्मण्यं इति । गुणो यथा—शुक्लत्वं, शीघ्रता, म्रदिमा, माधुर्यं, आर्जवम्, वैदग्ध्यं इति । स्वरूपं यथा—डित्थत्वं, आकाशत्वं, चन्द्रत्वं, सूर्यत्वं, दिक्त्वं, तदात्वं इति । संबन्धो यथा—पाचकत्वं, काण्डलावत्वं, दण्डित्वं, औपगवत्वं, राजपुरुषत्वं, पुरुषव्याघ्रत्वं इति । संहतिर्यथा—धवखदिरत्वं, नरसिंहत्वं, शुक्लकृष्णत्वं, कृष्णशारत्वं, नीलोत्पलत्वं, गौरखादिरत्वं इति । अभिन्नरूपं यथा—सत्त्वं, विद्यमानत्वं, गर्गत्वं, पञ्चालत्वं, पदार्थत्वं, पङ्कजत्वं इति ॥ ननु च,

जातिगुणाज्जातिगुणे धवखदिरादेः स्वजातिसंघाते ।
डित्थादौ च स्वरूपे कृत्तत्संयोगे तु संबन्धे ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

त्वादयः इति स्मृतिः ; कथमभिन्नरूपादावपि भवति ? उच्यते— 'कृत्तद्धितसमासेषु संवन्धाभिधानमन्यत्र रूढ्यभिन्नरूपाव्याभिचरितसंवन्धेभ्यः' । अत एवोक्तं— 'कृत्तत्संयोगं योगिना भिन्नरूपं' इति ॥

अवधेरपि वाच्यत्वं त्वादीनामिष्यते बुधैः ।
गोत्वाद्धि गौरिति ज्ञानमभिधानंच जायते ॥

ते ह्येवमाहुः— 'तस्य भावस्त्वतलौ' भवतोऽस्मादभिधानप्रत्ययाविति भावः । तदसत् ; न हि गोत्वं गौरिति ज्ञानस्योत्पत्तावपादानतां जनयत् 'जनिकर्तुः प्रकृतिः' 'भुवः प्रभवो वा' भवति ; यथा—शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवतीति । ज्ञानं त्वात्मन एव जायते, मनसैवोद्भवति ; तदाह— 'व्यापकादप्यात्मनो युगपत् ज्ञानानुत्पत्तिर्मनसो लिङ्गम् ; नाहमद्राक्षं, नाहमश्रौषं, नाहमज्ञासिषं, अन्यत्र मे मनोऽभूदिति' । निमित्तत्वं तु गौरिति ज्ञानोत्पत्तौ शब्दस्येव गोत्वादेरपीष्यत एव । तत्र यथा समवायिनः श्वैत्यात् श्वैत्यबुद्धेः श्वेते श्वैत्यबुद्धिः, तथा समवायिनो गोत्वाद्गोत्वबुद्धेः गवि गोत्वबुद्धिः ; ते परस्परं कार्यकारणभूते इति । अभिधानं तु शब्दः ; स च येनोच्चारितेनार्थः प्रतीयते । तस्यापि न गोत्वमवधिर्भवति । शब्दो ह्याकाशादेव जायते, मुखादेव प्रभवति ; न गोत्वादेः । तदाहुः—'मुखे हि शब्दमुपलभामहे भूमावर्थम्' इति । यदाऽपि नित्यः शब्द इति मतं तदाऽपि शब्दस्य गोत्वादयो वाच्याः विशेष्याः प्रत्याय्या एव भवन्ति । तत्र च शब्दस्य गोत्वादीनां वाच्यत्वे वा कर्मतैव, नावधित्वम् । प्रत्याय्यत्वे तु विपरिणामविपरिवर्तपक्षयोर्वक्ष्यमाणन्यायेन प्रत्युत शब्दस्यैवावधित्वम् । अध्यासस्तु सादृश्यादुपाधेरुपाधिसादृश्याभ्यां वा संभवति ; यथा— शुक्तिकादौ रजतादेः, स्फटिकादौ रक्तादेः, प्रतिबिम्बादौ मुखादेरिति । तत्र यो यदध्यास्यते, यो यदध्यास्ते वा, स तस्याधिकरणं कर्म वा स्यात्, न त्वेवावधिः ; गोत्वं निमित्तमुपादाय गोशब्दो गामध्यास्ते गवि वाऽध्यास्यते । तदिष्यत एव 'यस्य गुणस्य हि भावात् द्रव्यं शब्दनिवेशः तदभिधाने त्वतलौ' इति ॥

धात्वर्थरूपः कृदभिधेयो वहिरङ्गः ; सोऽपि षोढा—भावरूपः, कारकरूपः, संबन्धिरूपः, भावविशिष्टः, कारकविशिष्टः, संबन्धिविशिष्टश्चेति । तत्र प्रवृत्तिनिमित्ततुल्यो भावरूपः— ब्राह्मणस्य कर्म ब्राह्मण्यं, पुरोहितस्य कर्म पौरोहित्यं, स्तेनस्य स्तेयं, सख्युः सख्यं, दूतस्य दूत्यं, वणिजो वाणिज्यमिति । कारकैस्तुल्यकक्ष्यः कारकरूपः ; यथा—राजानमर्हति राजवद्वृत्तं, आप्रयोजनकालं भवति आकालिकी प्रवृत्तिः, श्येनस्येव पातोऽस्यां वर्तते-श्येनंपाता क्रिया, दण्डः प्रहरणमस्यां क्रीडायां-दाण्डा, महिमा अस्त्यस्यां महिमिनी समस्या, वटकं प्रकृतमस्यां वटकमयी यात्रेति । रूढे द्रव्यभूतः संबन्धिरूपः ; यथा—चाषाणां समूहः चाषं, नाट्यानामाम्नायो

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नाट्यं, भृग्वङ्गिरसां विवाहो भृग्वङ्गिरसिका, काकोलूकस्य वैरं काकोलूकिका, अवीनां संघातो अविकटः, तेषामेव विस्तारोऽविपटः इति । अतर्कितोपनतचित्रीकरणादिसदृशो भावविशिष्टः; यथा—काकस्य चागमनं यादृच्छिकं, तालस्य च पातः, तेन तालेन पतता काकस्य वधः; एवमेव देवदत्तस्य चागमनं दस्यूनां चोपनिपातः, तैश्च तस्य वधः; तत्र यो देवदत्तस्य दस्यूनां च समागमः स काकतालसमागम इवेत्येक उपमार्थः, यश्च देवदत्तवधः स काकवध इवेति द्वितीय उपमार्थः, तत्र प्रथमः समासार्थः काकतालमिति, द्वितीयः प्रत्ययार्थः काकतालीयमिति; समासश्चायमस्मादेव ज्ञापकात्; यदाह—समासाच्च तद्विषयादाकस्मिक इवार्थे च्छो भवति ; तद्विषयादित्यत्र हि तदित्यनेन 'इवे प्रतिकृतौ' इतीवार्थः परामृश्यते। एवमजाकृपाणीयं, अन्धकवर्तकीयं, घुणाक्षरीयं, अर्धजरतीयं, गोमयपायसीयं इति । कारकावच्छिन्नः कारकविशिष्टः; यथा—मतस्य करणं मत्यं, पीलूनां पाकः पीलुकुणः, जनस्य जल्पो जन्यः, शिवस्य भवनं शिवतातिः, नासिकाया अवनतिः अवटीटं, धने कामः धनकः इति । संबन्धिनाऽवच्छिन्नः संबन्धिविशिष्टः; यथा—हल्यः काषः, सौधः संकोचः, पौरुषेयो वधः, आथर्वण आम्नायः, वैदो घोषः, छान्दोग्यो धर्मः इति । उपाधिरपि संबन्ध्येव भवति, यथा—गार्गिकया विकत्थते, काठिकयाऽधिक्षिपति, गार्गिकामन्ववेतः, गार्गिकामवगतवान्, काठिकामवगतवान् इति । धात्वर्थोऽपि भाव एव; क्रियाऽपि ह्युपमानेन परीता परिच्छिन्ना साध्यसिद्धभावो भवति । स त्रिधा—भावकारकः, कारकविशिष्टः, संबन्धिविशिष्टश्चेति । तेषु भावविशिष्टो यथा—ब्राह्मणेन तुल्यमधीते-ब्राह्मणवत्, राज्ञा सदृशं वर्तते-राजवत्, जडस्य तुल्यं ब्रूते जडवत्, सूर्य इव प्रकाशते सूर्यवत्, पिता यथा पालयति पितृवत्, गुरुरिवानुशास्ति गुरुवदिति । अत्र ब्राह्मणादिस्थास्वध्ययनादिक्रियासु साहचर्याद्वृत्तिः, जातिद्रव्ययोरन्यतरेण क्रियायाः सादृश्यानुपपत्तेः । यदाह— 'तेन तुल्यं क्रिया चेद्वतिः; तेनेति तृतीयासमर्थात् तुल्यमित्येतस्मिन्नर्थे वतिप्रत्ययो भवति यत्तुल्यं क्रिया चेत् सा भवति; अर्थपरं चैतत्; तेन सदृशेत्यादिप्रयोगेष्वतृतीयान्तादपि भवति । कारकविशिष्टो यथा—राज्ञेव व्यवहृतमनेन राजवत्, देवमिव भवन्तं पश्यामि देववत्, असिनेव दात्रेण च्छिनत्ति असिवत्, ब्राह्मणायेव यदा देवदत्ताय ददाति ब्राह्मणवत्, पर्वतादिवासनादवरोहति पर्वतवत्, पितरीव गुरावाचरति पितृवत् । अत्र पुनरिदमेव सूत्रमन्यथा व्याख्यायते—तेन कारकविशेषेण तुल्यं यथा भवति । एवं चेत् क्रिया भवति भावोत्पन्ने विहितप्रत्यये कदाचित् प्रत्ययमुखेन क्रियाविशेषणं भवति, कदाचित् प्रकृतिमुखेन ; यथा—तीव्रः पाकः, तीव्रं पाकं इति । संबन्धिविशिष्टो यथा—ब्राह्मणस्येवाध्ययनमस्य ब्राह्मणवत्, राज्ञ इव रौद्रं वृत्तमस्य राजवत्; जडस्य सदृशं वचनमस्य जडवत्, सूर्यस्येव प्रकाशोऽस्य सूर्यवत्, पितुर्यथा पालनमस्य पितृवत्, गुरोस्तुल्यमनुशासनमस्य गुरुवत् इति । अत्र तु 'तत्र तस्येव' इत्यनेन वतिः । ननु च 'तेन तुल्यं' इत्यनेनैव सिद्धे किमर्थं 'तत्र तस्येव' इति सूत्रारम्भः? द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न लभ्यः इति; यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मथुरायामिव पाटलिपुत्रे प्रासादाः मथुरावत्, ब्राह्मणस्येव क्षत्रियस्य शुक्ला दन्ताः ब्राह्मणवत् इति। यद्येवं पूर्वसूत्रे क्रियाग्रहणं न करिष्यते, साहचर्याच्च क्रियायामिव द्रव्यगुणयोः प्रातिपदिकं वर्तिष्यते; ततश्च मैत्रेयतुल्या गावश्चैत्रस्य, ब्राह्मणेन तुल्या दन्ता क्षत्रियस्य इति विगृह्य पूर्वसूत्रेणैव वतिः सेत्स्यतीति। तदसत्; एवं हि गवयेन तुल्योऽनड्वान् इत्यत्रापि प्रत्ययः प्रसजेत्; इवार्थे तु प्रत्यये सप्तमीषष्ठ्यन्ताभ्यामेव विधीयमाने गवय इवानड्वान् इत्यत्र प्रत्ययप्रसङ्गो न स्यात्; सप्तम्यन्तषष्ठ्यन्तयोर्हि बाह्यं संबन्धिनमपेक्ष्य इवशब्दप्रयोगो भवति, न पुनरिवार्थापेक्षयैव; इवशब्दो हि उपमानोपमेयभावलक्षणसंबन्धद्योतकः, न तु संबन्धिरूपाभिधायी। तस्माद्गवयेन तुल्योऽनड्वान् इत्यत्र मा भूत् प्रत्ययप्रसङ्ग इति पूर्वसूत्रे क्रियाग्रहणम्। तस्मिंश्च कृते द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न स्यादिति सप्तमीषष्ठ्यन्ताभ्यामिवार्थे 'तत्र तस्येव' (पा. ५. १. ११६.) इति वतिर्विधीयते। अथ 'तदर्हम्' (पा. ५. १. ११७) इति किमर्थम्?

अर्हतो या क्रिया कर्तुस्तत्रापि वतिरिष्यते।
उपमानाविवक्षायां तद्विधानं न लभ्यते॥

उपमानोपमेयत्वमन्यस्यान्येन वा सह।
अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनैव वा॥

तत्रान्यस्यान्येन यथा—अवैयाकरणोऽप्ययं वैयाकरणवद्ब्रूते, योषिदप्येषा पुंवद्वक्तीति; अवस्थाभेदभिन्नत्वादेकस्याप्यात्मनो यथा—वैयाकरणः केनचिदुच्यते—वैयाकरणवद्ब्रूहीति; योषिदप्युच्यते—स्त्रीवद्वदेति। वैयाकरणोऽप्यवज्ञया कदाचिदवैयाकरणवद्ब्रूते; श्रूयते हि—यर्वाणस्तर्वाणा नाम साक्षात्कृतधर्माण ऋषयो बभूवुः। ते हि 'अन्तर्वेद्यामेव न म्लेच्छितव्यम्, अतोऽन्यत्रावज्ञया' इति यद्वा नस्तद्वा न इति वक्तव्ये यर्वाणस्तर्वाण इत्यूचुः। योषिदपि कदाचिदाश्रितप्रागल्भ्यात् पुंवद्वक्ति, यथोच्यते—

सरस्वतीव कर्णाटी विजयाङ्का जयत्यसौ।
या वैदर्भगिरां भूमिः कालिदासादनन्तरम्॥

अस्यौपम्यद्वयस्यापि विवक्षातोऽपरिग्रहे।
वतिः कथमिवार्थीय इति (मत्वा) यमुच्यते॥

तत्र राजवद्वृत्तमित्यत्र यदैवंविधार्थविवक्षा—पृथ्वादिना राज्ञा तुल्यं वृत्तमनेन राज्ञा राजवद्वृत्तं राज्ञेति, तदाद्येनैव सूत्रेण सिद्धः प्रत्ययः। यदा त्वेतादृशी विवक्षा—राज्ञ इव पृथोरस्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वृत्तं राजवद्वृत्तं राज्ञ इति, तदा द्वितीयसूत्रेण । यदा त्विदं वृत्तं राजानमेवार्हति नान्यमित्युपमानोपमेयभावाभावे राजवद्वृत्तमिति प्रयोगः, तदा 'तदर्हम्' (पा. ५. १. ११६) इत्यनेन वतिर्विधीयत इति नानर्थकः सूत्रारम्भः ॥

अन्ये तु—'तेन तुल्यं क्रिया चेद्वतिः' (पा. ५. १. ११५.) इत्यत्र द्वितीयव्याख्यानपक्षे क्रियायाः क्रिया विशेषणं न संभवतीति कारकविशिष्टभावपक्षं 'तदर्हम्' (पा. ५. १. ११७) इत्यनेन संवाहयति ; राजानमर्हति यद्व्यवहरणं, देवमर्हति यद्दर्शनं, असिमर्हति यच्छेदनं, ब्राह्मणमर्हति यद्दानं, पर्वतमर्हति यदवरोहणं, पितरमर्हति यत् पारतन्त्र्यम् ; तदुच्यते राजवत्, देववत्, असिवत्, ब्राह्मणवत्, पर्वतवत्, पितृवत् इति । राज्ञेव व्यवहृतमित्यादिभिस्तु तस्यार्थः प्रदर्शित इति ॥

कारकमपि भाववदेवान्तरङ्गं बहिरङ्गं च ; तयोराख्याताभिधेयमन्तरङ्गं, अनाख्याताभिधेयं बहिरङ्गम् ; कर्ता हेतुकर्ता, कर्मकर्ता, कर्म चेति, करणं संप्रदानमपादानमधिकरणं चेति । तत्रान्तरङ्गभेदेषु कर्ता शुद्धः, मिश्रः, संकीर्णश्च । तेषु क्रियाकारकान्तरासंपृक्तः शुद्धः ; यथा—इष्टमनेन इष्टी यज्ञी, कृतः पूर्वं कटोऽनेन कृतपूर्वी कटमिति । क्रियान्तरसंपृक्तो मिश्रः ; यथा—व्याकरणं वेत्ति अधीते वा वैयाकरणः, शश्वद्भवः शाश्वतिकः इति । क्रियाकारकान्तरसंपृक्तः संकीर्णः ; यथा—शालायां प्रवेशमर्हति शालीनः अधृष्टः ; कूपे प्रक्षेपणमर्हति इति कौपीनमकार्यम् । हेतुः—आत्मस्थक्रियः, परस्थक्रियः, परात्मस्थक्रियश्चेति । तेषु आत्मस्थक्रियो यथा—पारायणं वर्तयति पारायणिकः ; चान्द्रायणं वर्तयति चान्द्रायणिक इति । परस्थक्रियो यथा—वातं शमयति वातिकं तैलं ; पित्तं शमयति पैत्तिकमिति । परात्मस्थक्रियो यथा—यथामुखं दर्शयते यथामुखीन आदर्शः, संमुखं दर्शयते संमुखीनः प्रेयान् इति । कर्मकर्ता—अनुद्रिक्तकर्मांशः, उद्रिक्तकर्मांशः, अनुद्रिक्तोद्रिक्तकर्मांशश्चेति त्रिधा । तेष्वनुद्रिक्तकर्मांशो यथा—अक्षद्यूतेन निर्वृत्तमाक्षद्यूतिकं धनं, पाकेन निर्वृत्तं पाकिमं, माणिकं इति । उद्रिक्तकर्मांशो यथा—वसन्ते पच्यन्ते वासन्त्यः कुन्दलताः, षष्टिरात्रेण पच्यन्ते षाष्टिकाः शालय इति । अनुद्रिक्तोद्रिक्तकर्मांशो यथा—वशं गतो वश्यः, शीर्षच्छेदमर्हति शीर्षच्छेद्य इति । कर्म—निर्वर्त्यं, विकार्यं, प्राप्यं च । तेषु यदसज्जन्यते, सद्वा प्रकाश्यते, तन्निर्वर्त्यम् ; यथा—उरसा निर्मितः औरसः पुत्रः, पाणिनिना प्रोक्तं पाणिनीयं व्याकरणं इति । यस्य प्रकृत्युच्छेदो गुणान्तरं वा विधीयते तद्विकार्यम् ; यथा—विषेण वध्यः विष्यः शत्रुः, कुसुम्भेन रक्तं कौसुम्भं वस्त्रमिति । आस्थितमनास्थितं वा क्रियया यदाप्तुमिष्यते तत् प्राप्यम् ; यथा—नावा तार्यः नाव्यो ह्रदः, अयानयं नेयः अयानयीनः शार इति । ननु च शारोऽप्यास्थितः कस्मान्न भवति ?

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

त्यागरूपं प्रहातव्येऽप्यर्थे (प्राप्ये) संसर्गदर्शनम् ।
आस्थितं कर्म यत्तत्र द्वैरूप्यं भजते क्रिया ॥

यथा—पन्थानं गच्छति, गर्तमुत्तरतीति । शारस्तु प्राप्य एव; यथा—अजां नयति ग्रामं, (ग्रामं) वहति भारम् इति । नन्वेवं ग्रामस्य प्राप्यता प्राप्नोति, नाजादेः; कः पुनराह न प्राप्नोतीति; किंतु अकथितत्वेन तत्र क्रियाव्याप्यत्वेनाद्वितीयैव, न प्रत्ययान्तरम्—गां दोग्धि पयः, पौरवं गां याचते इति । बहिरङ्गभेदेषु करणं—बाह्यं, आभ्यन्तरं, बाह्याभ्यन्तरं च । तेषु बाह्यं यथा—सुपां व्याख्यानः सौपः, ललाटस्य भूषणं ललाटिका । आभ्यन्तरं यथा—मतस्य करणं मत्यं, चतुर्णां पूरणश्चतुर्थः इति । बाह्याभ्यन्तरं यथा—समिध आधीयन्तेऽनेन सामिधेन्यो मन्त्रः, (स एव) हृदयस्य बन्धनः हृद्य इति । संप्रदानम्—ददातिकर्माप्यं, कर्ममात्राप्यं, क्रियाप्यं च । संप्रदीयते भोजनादिकमस्मै इत्यन्वर्थसंज्ञकं ददातिकर्माप्यं; यथा—अग्रभोजनं नियुक्तमस्मै दीयते आग्रभोजनिकः, पञ्चास्मै वृद्धिर्वा, आयो वा, लाभो वा, शुल्कं वा, उपदा वा दीयन्ते पञ्चकः पुरुष इति । 'कर्मणा यमभिप्रैति स संप्रदानम्' (पा. १. ४. ३२.) इति पारिभाषिकसंज्ञकं कर्ममात्राप्यं; यथा—राष्ट्रमस्मै निर्दिश्यते राष्ट्रियो राजन्यः, कलिं कुर्वन्त्यस्मै कालेयं गन्धद्रव्यं इति । कर्मशब्देन क्रियाया अप्यभिधानात् क्रिययाऽपि यमभिप्रैति स संप्रदानमिति क्रियाप्यम्, यथा—अलङ्कर्मास्मै निर्दिश्यते अलङ्कर्मीणः अन्यूनः, न षडक्षाणि अस्मै भवन्ति अषडक्षीणो मन्त्र इति । अपादानं—निर्दिष्टविषयं, उपात्तविषयं, अपेक्षितक्रियं च । तेषु 'ध्रुवमपायेऽपादानम्' (पा. १. ४. २४.) इति निर्दिष्टविषयम्; यथा—अग्निः पतति अस्मात् आग्नेयः ग्रावा, नद्यः स्यन्दन्ते अस्मात् नादेयः शैल इति । भीत्रार्थादियोगोक्तमुपात्तविषयम्; यथा—कुक्षिं रक्षन्ति अस्मात् कौक्षेयकः कृपाणः, मुद्गा भवन्त्यस्मात् मौद्गीनं क्षेत्रं इति । अवधिमात्रार्थमपेक्षितक्रियम्, यथा—कर्णस्य मूलं कर्णजाहं, पक्षस्य मूलं पक्षतिः इति । अधिकरणं—वैषयिकं, औपश्लेषिकं, नैमित्तिकं च । तेषु विविधमनेकप्रकारं जातिक्रियागुणद्रव्यादिभिः सिनोतीति विषयः देशकालादिः; विषय एव वैषयिकः; यथा—गावः सन्त्यस्मिन् गोमान् देशः, पौषी पौर्णमास्यस्मिन् पौषो मास इति । उपश्लेषोऽवष्टम्भः, तस्मै प्रभवति औपश्लेषिकं; यथा—दण्डिनोऽस्यां सन्ति दण्डिमती शाला, विंशतिरिहाधिका विंशं शतमिति । निमित्तमेव नैमित्तिकं; यथा—पूर्णो मासोऽस्यां पौर्णमासी (ति), परिखात्रस्यात् परिखेयो देश इति । कारकं च अन्तरङ्गबहिरङ्गभेदाद् द्विरूपमपि प्रकृत्युपाधेः कारकविशिष्टं, अकारकविशिष्टं, संबन्धविशिष्टं, निपातविशिष्टं चेति चतुर्धा निर्धार्यते । तेषु कर्म कर्मविशिष्टं यथा—अयानयं नेय अयानयीनः शारः; करणविशिष्टं यथा—चक्षुषा गृह्यते चाक्षुषं रूपं; अधिकरणविशिष्टं यथा—स्रुघ्ने कृतो वा, लब्धो वा, क्रीतो वा स्रौघ्नः; अपादानविशिष्टं यथा—तन्त्रादचिरापहृतः तन्त्रकः पट इति; कर्तृविशिष्टं यथा—अश्वैरुह्यते आश्वो रथः; कर्तृविशेषणमपि कर्तैव; चतुर्भिरुह्यते चातुरं शकटं; अपिच—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कौमारो सा भवेद्भार्या यां कुमारः प्रपत्स्यते ।
प्रपद्यते कुमारी यं स कौमारो मतः पतिः ॥

संप्रदानविशिष्टं तु कारकं नास्ति । कर्ता कर्मविशिष्टो यथा—श्राद्धमनेनाद्य भुक्तं श्राद्धिकः; क्रियाविशेषणमितिशब्दोपसंहारं च कर्मैव ; तद्विशिष्टो यथा—प्रतिकूलं वर्तते प्रातिकूलिकं, माशब्द इत्याह माशब्दिक इति ; करणविशिष्टो यथा—अक्षैर्दीव्यति आक्षिकः ; अधिकरणविशिष्टो यथा—प्रावृषिकः, प्रावृषि भवः प्रावृषेण्यः ; अपादानविशिष्टो यथा—पितुरागतं पित्र्यं धनं इति । कर्तृविशिष्टः कर्ता नास्ति । करणं कर्मविशिष्टं यथा—ग्रीवाया भूषणं ग्रैवेयं रुक्मदाम । एवं संप्रदानमपि यथा—मांसमेभ्यो नियुक्तं दीयते मांसिकाः पितरः । अपादानं कर्तृविशिष्टं यथा—व्रीहयो भवन्त्यस्मात् व्रैहेयं क्षेत्रम् । एवमधिकरणमपि यथा—शर्कराः सन्ति अस्मिन् शर्करिलो देशः । तदेव कर्मविशिष्टं यथा—पदमस्मिन् दृश्यं पद्यः कर्दमः ; करणविशिष्टमपि यथा—दण्डः प्रहरणमस्यां दाण्डा क्रीडा इति । करणादयोऽस्य विशिष्टा न विद्यन्ते । कर्मकर्त्रोरेवाकारकसंबन्धिनिपातैर्विशेषणयोगः । स कर्मणोऽकारकेण यथा—मासाय भूतो मासिकः, संवत्सरमधीष्टः सांवत्सरिक इति ; कर्तुर्यथा—संतापाय प्रभवति सांतापिकः, वर्षं भूतो भावी वा वार्षिक इति । कर्मणः संबन्धिना यथा—वाक्यपदे अधिकृत्य कृतो ग्रन्थः वाक्यपदीयः, कलापिषु उह्यमानकलापेषु देयमृणं कालापकं इति ; कर्तुर्यथा—तित्तिरिणा प्रोक्तं विदन्ति अधीयते वा तैत्तिरीयाः, पूर्वं कृतं भुक्तं पीतं वा एभिः पूर्विण इति । कर्मणो निपातेन यथा—यथाकथाच क्रियते याथाकथ्यमिदं, बहिः दृश्यते बाह्यं इति ; कर्तुर्यथा—आराद्भवः आरातीयः, साक्षाद्द्रष्टा साक्षी इति ।

ननु क्रिययाऽपि कर्मणः कर्तुर्वा विशेषणयोगः संभवति ; तद्यथा—पाकेन निर्वृत्तं पाकिमं, अपमित्यापमित्यकं, याचितेन याचितकं इति ; यथा च सुस्नातं पृच्छति सौस्नातिकः, प्रभूतमाह प्राभूतिकः, कृतः (तं) पूर्वमनेन कटः कृतपूर्वी कटं इति । उच्यते—क्रियाऽपि प्राकृतं कर्मैव ; अतस्तद्विशिष्टयोरपि कर्मकर्त्रोः कर्म(कर्तृ)विशिष्टत्वमेव भवति । ननु च निर्वृत्तमित्येतस्य कथं कर्मता ? इदं ह्यनुद्रिक्तकर्मांशे कर्तरि (कर्तरि वा) प्रयुज्यमानं दृश्यते । नैवम् , अन्तर्भूतण्यर्थत्वेनास्य सकर्मकत्वमपि मन्यन्ते ; तथा च कात्यायनः—

'उत्तारणाय जगतः प्रपितामहेन तस्मात्पदात्त्वमसि रज्जुरिव प्रवृत्ता ।'

मल्लनागोऽप्याह —'नागरकवृत्तं वर्तेत' इति । अथ कृतपूर्वी कटं इति कथम् ? न ह्यनेन प्रयोगेणापि भवितव्यम् । किं कारणम् ? द्वितीयया तावत् नोत्पत्तव्यम् । तत् कुतः ? केनाभि-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

हितम् । प्रत्ययेनापि नोत्पत्तव्यम् । किं कारणम् ? असामर्थ्यात् । कथमसामर्थ्यम् ? सापेक्षमसमर्थं भवतीति । उच्यते—नायं कर्मणि क्तः ; अपि तु भावे । भावसाधनेन च कृतशब्देन योच्यते क्रिया तयेप्सितं कटादि कर्मानभिहितमेवेति । तत्र यथा ग्रामं गतो देवदत्त इति धातुनिष्ठाभ्यामभिधीयमानयोः क्रियाकर्त्रोः ग्रामादिकर्मभिरभिसंबन्धो भवति, एवं कृतपूर्वीति कृतशब्देन तद्धितेन वाऽभिधीयमानयोः क्रियाकर्त्रोः कटादिकर्मभिरभिसंबन्धो भवति ; तथा हि—कृतं पूर्वमनेनेत्यस्मिन्नर्थे कृतपूर्विशब्दस्तद्धितान्तो वर्तते ; तेन च पूर्वं कृतवानित्ययमर्थः संपद्यते ; एवं च सापेक्षत्वाभावान्नास्त्यसामर्थ्यम् ; अस्ति च करोतिवाच्यक्रियापेक्षं कटस्य कर्मत्वमिति तद्धितद्वितीयोत्पत्त्योर्नानुत्पत्तिः । तदुक्तम्—

अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।
संबध्यते क्रिया तद्वत् कृतपूर्वादिषु स्थिता ॥ इति ॥

यदा तु कृतः पूर्वं कटोऽनेनेति विग्रहः, तदाऽपि न दोषः ; यतः यद्यपि कृतादिशब्दाः कर्मणि व्युत्पाद्यमानाः सामानाधिकरण्यात् कटादिकर्मविशेषं निर्भुञ्जते, तथाऽपि नेत्थंभूता एव प्रत्ययमुत्पादयन्ति, वृत्तीनां विशेषप्रत्यायनासामर्थ्यात् ; अतो वृत्तिविषयेऽनपेक्षितविशेषकर्मान्तर्भूतकर्मसामान्योऽन्य एव कृतशब्दो भवति । अविवक्षितकर्माणोऽन्तर्भूतकर्माणश्चाकर्मका एव जायन्ते ; यथा—'तस्माद्दीक्षितो न ददाति न पचति न जुहोति' इति । एवमकर्मकत्वेऽन्तर्भावाभिधाय्येव ; तच्चानपेक्षत्वात् सामर्थ्ये सति प्रत्ययमुत्पादयति । प्रत्ययार्थश्च कर्ता क्रियया प्रकृत्यर्थेन यदीप्सति तत् कर्मानभिहितं प्रत्ययेन ; ततो द्वितीया भवति । तदुक्तं भाष्ये—'योऽसौ कृतकटयोरभिसंबन्धः स उत्पन्ने निवर्तते ; अस्ति च करोतेः कटेन सामर्थ्यमिति द्वितीया भविष्यति कृतपूर्वी कटमिति' । हरिरप्याह—

विशेषकर्मसंबन्धे विनिर्भुक्ते कटा (कृता) दिभिः ।
विशेषनिरपेक्षोऽन्यः कट (कृत) शब्दोऽवकल्पते ॥

अकर्मकत्वे सत्येवं क्तान्तं भावाभिधायि यत् ।
तेन क्रियावता कर्त्रा योगो भवति कर्मणाम् ॥ इति ॥

यदि वा शास्त्रप्रक्रियाभ्यासवाधितमतीनामेवायमभिमानः—वाक्यार्थे वृत्तयो भवन्तीति । परमार्थतस्तु—वृत्तिवाक्ययोरन्यत्वमेव मन्यन्ते, अर्थविप्रकर्षात् । यथा हि—वाक्ये यः कटादिकर्मसंबन्धः स वृत्तौ नास्ति, तस्यान्तर्भूतकर्मणः कृतशब्दस्य भावाभिधायित्वात् ; तदुक्तम्—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विशेषः श्रूयमाणोऽपि प्रधानेषु गुणेषु वा ।
शब्दान्तरत्वाद्वाक्येषु वृत्तौ नित्यं न विद्यते ॥

भाष्यकारोऽप्याह— 'नेदमुभयं युगपद्भवति वाक्यं च प्रत्ययश्च, यदा वाक्यं न तदा प्रत्ययः, यदा प्रत्ययः सामान्येन तदा वृत्तिः, तत्रावश्यं विशेषार्थिना विशेषणोऽनुप्रयोक्तव्यः कृतपूर्वी कटमिति' एवमधीतमनेन, अधीतं व्याकरणमनेन इति वा अधीती व्याकरणे इत्यपि व्याख्यातम् ।

संबन्धी द्विधा—प्रधानं गुणभूतश्च । तयोः प्रथमान्ताभिधेयः प्रधानम् ; स त्रिधा—द्रव्यरूपः, गुणरूपः, अभिन्नरूपश्च । तेषु 'तस्यापत्यम्' (पा. ४.१.९२.) इत्यादिराश्रयवचनो द्रव्यरूपः ; स द्विधा—निरपेक्षः, सापेक्षरूपश्च । तयोः निरपेक्षो यथा—वसिष्ठस्यापत्यं वासिष्ठः, पाणिनेः शिष्यः पाणिनीयः, पञ्चालानां राजा पाञ्चालः, पृथिव्याः ईश्वरः पार्थिवः, पाटलायाः पुष्पं पाटलं, जम्ब्वाः फलं जाम्बवम् इति । सापेक्षो यथा—पितुः पिता पितामहः, पितुर्भ्राता पितृव्यः, मातुर्भ्राता मातुलः, भ्रातुरपत्यं भ्रातृव्यः, स्वसुः स्वस्रीय इति । 'तस्येदं' (पा. ४.१.१२०) इत्यादिराश्रित[वचनः] गुणवचनो गुणरूपः ; स द्विधा—षष्ठीविशेष्यः, अषष्ठीविशेष्यश्च । तयोः षष्ठीविशेष्यो यथा—युष्माकमियं गौः यौष्माकी गौः, देवदत्तस्य भूतपूर्वो देवदत्तरूप्यः राजा, पुत्रस्य निमित्तं पुत्रीयः संयोगः, विदिशाया अदूरभवं वैदिशं नगरं, मूर्वायाः विकारः मौर्वं भस्म, दूर्वाया अवयवः दौर्वः काण्डः इति । अषष्ठीविशेष्यो यथा—वत्सेभ्यो हितो वत्सीयो गोधुक्, अङ्गारेभ्य इमानि अङ्गारीयाणि काष्ठानि, शरणे साधुः शरण्यो राजा, आकर्षे कुशलः आकर्षको धूर्तः, पुष्पैः वित्तः पुष्पचणः चम्पकः, सूर्येणैकदिक् सौरी बलाका इति । प्रकृत्यैकच्छायोऽभिन्नरूपः ; स द्विधा—लिङ्गसंख्यानुपग्राही, लिङ्गसंख्योपग्राही च । तयोर्लुगभिधेयो लिङ्गसंख्यानुपग्राही ; यथा—गर्गस्यापत्यानि गर्गाः, पञ्चालस्य राजानः पञ्चालाः, अत्रेः अपत्यानि अत्रयः, कुसुम्भ्याः पुष्पं कुसुम्भं, बदर्याः फलं बदरं, लवणेन संसृष्टः लवणः सूपः इति । लुबभिधेयो लिङ्गसंख्योपग्राही ; यथा—पञ्चालानां निवासः पञ्चाला जनपदः, वरणाः सन्त्यस्मिन् वरणा नगरी, शिरीषाणामदूरभवः शिरीषो ग्रामः । किंच गोदौ नाम ह्रदौ, तयोरदूरभवो ग्रामः गोदौः ; हरीतक्यादिषु पुनः व्यक्तिमेवोपगृह्णाति, न वचनम्—हरीतक्याः फलानि हरीतक्यः ; खलतिकादिषु वचनमेव, न व्यक्तिं—खलतिको नामाद्रिः, तस्यादूरभवानि खलतिकं वनानि इति । ननु च वसिष्ठस्यापत्यमित्यादौ भिन्नाधिकरणत्वात् द्वयमेवाश्रयते पितरं पुत्रं च ; तथाहि—उभयमपि संबन्धादभ्यधिकं प्रतीयते—पितुश्चामी पुत्राः स्वमिति ; तत् कथमेकस्मादेव षष्ठी तद्धितो वा ? उच्यते—यद्यप्ययमुभयाधिकरणः, तथाऽप्येक एव ; भेदे हि नोभयाधिकरण एकः स्यात्, संबन्धद्वयप्रसङ्गात् । सोऽयमेकोऽनेकाश्रयः, एकश्चैव विभक्त्योच्यते, एकस्मादेव तद्धितोत्पत्तिर्भवति । एवमपि पितुरेव

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

षष्ठीति नियमो न स्यात् । कः पुनराह नियम इति ; यावता मातुः पिता मातामह इत्यपि भवति । कुतः पुनरिदं यदेकदा तु स्वामिनोऽन्यदा तु स्वस्माद्विभक्तिः तद्धितो वेति ? संबन्धस्य पदन्यासातिरेकात् । नियोगतो हि पितापुत्रयोरेकस्य प्राधान्यमन्यस्योपसर्जनत्वं, तुल्यत्वे संबन्धाभावात् । तत्र न प्रधानं पुत्रादि गुणानुरोधेन प्रवर्तितुमर्हति ; उपसर्जनं तु पित्रादि यथा प्रधानानुग्रहः तथाऽऽत्मानं निर्वर्तयति, स्वरूपावस्थितौ प्रधानार्थासिद्धेः । अतोऽप्रधाने संबन्धस्याधिकः पदन्यासः । तत्र षष्ठी तद्धितोत्पत्तिर्वा भवति । सा चैकत्वात् संबन्धस्य पुत्रगतमप्येनमभिधत्ते । यदा तु मातुः पिता मातामहः इति विवक्षातः प्राधान्यविपर्ययः, तदा अपत्यादुत्पन्नया षष्ठ्या द्विष्ठोऽप्यसावभिहित इति न सा तद्धितो वा पितृशब्दात् ; तदुक्तम्—

द्विष्ठोऽप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानश्च प्रधानेऽप्युपयुज्यते ॥ इति ॥

एवं 'तेनैकदिक्' (पा. ४.३.११२) 'तदर्थं विकृतेः प्रकृतौ' (पा. ५.१.१२) 'तस्य निमित्तम्' (पा. ५.१.३८) 'तेन वित्तश्चुञ्चुप्चणपौ' (पा. ५.२.२६) 'तस्मै हितम्' वतुप्प्रकरणे 'युष्मदस्मद्भ्यां छन्दसि सादृश्य उपसंख्यानम्' इत्यादिषु सहार्थतादर्थ्यवित्तहितलक्षणोपपदपरिशेषादयः संबन्धविशेषाः षष्ठ्यन्ता अपि द्विष्ठत्वादेकविभक्तिवाच्यत्वेनावगन्तव्याः । ननु च तृतीयादीनां व्यतिरेकविभक्तित्वात् षष्ठीवदेव भवतु, संबन्धाभिधानसामर्थ्यात् ; प्रथमायाः पुनरव्यतिरिक्तप्रातिपदिकार्थाभिधायिन्याः कथमिवैतदुपपद्यते—त्वामिव त्वावान् , अहमिव मावान् इति । अत्रैके वर्णयन्ति—त्वावतः पुरुवसो, यज्ञं विप्रस्य मावतः, न त्वावानन्यो दिव्यो न पार्थिव इति प्रथमान्तायाः प्रकृतेः प्रधानभूतेऽपि संबन्धिनि प्रयोगदर्शनात् प्रत्ययोऽवगम्यते । अन्ये त्वाहुः—त्वमिव त्वावान् , अहमिव मावान् इत्युपमानमत्र प्रथमान्तं प्रकृत्यर्थः, उपमेयं प्रत्ययार्थः । न तत्र तावदवच्छेदकत्वादुपमानं प्रधानम् । अवच्छेदकादप्युपमानात् षष्ठी नोत्पद्यते, व्यतिरेकहेतोरसंभवात् ; इवशब्दो ह्यसत्त्वभूताभिधायित्वान्न व्यतिरेकाभिधायकः ; सादृश्यद्योतको ह्यसौ । अन्यश्च न कश्चिदिह व्यतिरेकहेतुः श्रूयते । अतश्च गौरिव गवयः इत्यादाविवात्र षष्ठ्या अभावः ; व्यतिरेकहेतौ तु सतीवशब्दप्रयोगे उपमानात् षष्ठ्युत्पद्यते—देवदत्तस्येव यज्ञदत्तस्य दन्ता इति । तदुक्तम्—

इवशब्दप्रयोगे तु बाह्यात् संबन्धिनो विना ।
नाधिक्यमुपमानेऽस्ति द्योतकः स प्रयुज्यते ॥

मा भूत् षष्ठी ; प्रथमयाऽपि न भवितव्यमेव, उपमानस्यावच्छेदकत्वेनाप्याधिक्यात् । कः पुनराह—अनधिक एव प्रातिपदिकार्थः प्रथमेति ; पाटलिपुत्राद्राजकं सप्त योजनानि, सप्तसु वा

CC-0. JK Sanskrit Academy, Jammu. Srinagar Circle, Jammu Collection. An eGangotri Initiative

योजनेषु इत्यध्वनः प्रथमा सप्तमी च स्मर्यते ; संबोधने च प्रथमैव विधीयते ; धिक् देवदत्तं, हा देवदत्तं, इति च द्वितीयाविषये प्रथमाप्रयोगो दृश्यते ; यथा—

'हा धिक्कष्टमनिष्टमस्तकरुणः कोऽयं विधेः प्रक्रमः ।'
'कन्यान्तःपुरमेव हा प्रविशति क्रुद्धो मुनिर्भार्गवः ॥' इति ॥

षष्ठ्यन्ताभिधेयो गुणभूतः ; स त्रिधा—भावविशिष्टः, कारकविशिष्टः, संबन्धिविशिष्टश्च । तेषु भावेनावच्छिन्नो भावविशिष्टः ; स द्विधा—मुख्येन, उपाधिना च । तयोर्मुख्येन यथा—कृषिरस्यास्तीति कृषीवलः, मायावी, आमयावी, दयालुः, श्रद्धालुः इति । उपाधिना यथा—मृदङ्गो वाद्यत इति शिल्पमस्य मार्दङ्गिकः, अपूपाः क्रियन्त इति शिल्पमस्य आपूपिकः, मासं ब्रह्मचर्यमस्य भिक्षोः मासिकः, अस्ति परलोक इति मतिरस्य साधोः आस्तिकः, नास्ति नरकादिकमिति मतिरस्यासाधोः स नास्तिकः, दिष्टमेव प्रभवतीति मतिरस्य जिगीषोः दैष्टिकः इति । कारकेणावच्छिन्नः कारकविशिष्टः ; स द्विधा—स्वतन्त्रेण, अस्वतन्त्रेण च । तयोः स्वतन्त्रेण यथा—धनमस्यास्तीति धनवान् वदान्यः, पञ्चमोऽस्य मासो जातस्य वर्तते पञ्चमो बालकः, प्रासादोऽस्य स्यात् प्रासादीयं दारु, तारकाः संजाता अस्य तारकितं नभः, समयः प्राप्तोऽस्य सामयिकं कर्म, एकमन्यत् कर्माध्ययने वृत्तमस्य ऐकान्यिकः इति । अस्वतन्त्रेण यथा—लवणं पण्यमस्य लावणिकः, वासुदेवे भक्तिरस्य वासुदेवकः, धनुः प्रहरणमस्य धानुष्कः, प्रस्थः परिमाणमस्य प्रास्थिकः, सलातुरोऽस्याभिजनः सालातुरीयः, ग्रामो निवासोऽस्य ग्रामीणः इति । संबन्धिनावच्छिन्नः संबन्धिविशिष्टः ; स द्विधा—विशेष्येण, विशेषणेन च । तयोः विशेष्येण यथा—अपूपा हिता एषां आपूपिकाः अवन्तयः, मूलमाबर्हि एषां मूल्या माषाः, बृहत्यादिरस्य बार्हतः प्रगाथः, कालः प्रकृष्टोऽस्य कालिकमृणम् ; किंच निशासंबन्धाध्ययनमपि निशा, तदस्य सोढं नैशः, एवं प्रादोषिक इति । विशेषणेन यथा—इन्द्रो देवता अस्य ऐन्द्रं हविः, संशप्तकाः योद्धारोऽस्य सांशप्तकः संग्रामः, विनयः प्रयोजनमस्यां वैनयिकी विद्या, देवदत्तो ग्रामणीरस्य दैवदत्तकः स[illegible]ः, पञ्च अवयवाः अस्यां पञ्चतयी गतिः, पञ्च अस्य भृतिर्वस्नो वा पञ्चकः पदार्थः इति । ननु च 'तस्यापत्यम्' इत्यादौ उपगोरपत्यं औपगवः इति 'समर्थानां प्रथमाद्वा' (पा. ४. १. ८२) इत्यधिकारात् षष्ठ्यन्ता प्रकृतिरपत्यवतो गुणभूतस्य वाचिका ; प्रथमान्तं तु प्रधानभूतमपत्यं प्रत्ययार्थ एव । 'तस्येदम्' (पा. ४.३.१२०) इत्यादावपि प्रधानं संबन्धि तद्धितवाच्यमित्युपपद्यते । 'साऽस्य देवता' (पा. ४.२.२४) इत्यादौ तु इन्द्रो देवता अस्य ऐन्द्रं हविः इति पूर्वोक्तादेवाधिकारात् सेति प्रथमान्ता प्रकृतिरिन्द्रादिदेवतावाचिका प्रधानम् ; गुणभूतस्तु संबन्धी पुरोडाशादिरस्येत्यनेनाप्रधानभूतसंबन्धिवाचकत्वेन निर्दिष्टः प्रत्ययार्थः । तत्कथमिवायं विपर्यस्तः प्रधानगुणभाव उच्यते ? उच्यते—गुणभूतोऽपि संबन्धी बुद्ध्यन्तरेणाप्रधानभावात् प्रत्या-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

व्यासादितप्रधानभावः प्रत्ययार्थत्वेन प्रदर्श्यते । अत एव इन्द्रो देवता अस्येत्येतावानेव विग्रहो न कार्यः ; वृत्तिसमानार्थेन हि तेन भवितव्यम् । न चैतावतो वृत्तिसमानार्थता ; वृत्तौ हि इन्द्रादिदेवतावच्छिन्नं पुरोडाशाद्यवगम्यते, वाक्ये तु पुरोडाशाद्यवच्छिन्नेन्द्रादिदेवतेति । अयं तु विग्रहो वृत्त्या समानार्थः—इन्द्रो देवता अस्य तदिदमिन्द्रस्वाम्यवच्छिन्नमैन्द्रं हविः इति । तदिदमुक्तम्—

अनन्तरोक्तः संबन्धी प्रतिपद्य प्रधानताम् ।
बुद्ध्यन्तरपरामर्शाद्वाच्यतां प्रतिपद्यते ॥
प्रकृत्यर्थविशिष्टो हि प्रत्ययार्थोऽभिधानभाक् ।
न्यायः स नतः[1] सास्येत्यधिकारसमाश्रयात् ॥

एवं 'सोऽस्यादिरिति छन्दसः प्रगाथेषु' इत्यादावपि गुणभूतः संबन्धी तद्धिताभिधेयो बोद्धव्यः । यत्र तु गुणभूतः संबन्धी प्रत्ययार्थः तत्र न प्रधानम् ; यत्र प्रधानं तत्र न गुणभूतः ; कुतः पुनरिदं ज्ञायते ? आचार्यप्रवृत्तिर्ज्ञापयति—यदयं निवासनिवासवत्संबन्धे उभयमाह—'तस्य निवासः' (पा. ४. २. ६९) 'सोऽस्य निवासः' (पा. ४. ३. ८९) इति ।

ननु च अपत्यापत्यवत्संबन्धेऽप्युभयं संभाव्यते—माता अपत्यमस्य मातामहः, पिताऽपत्यमस्य पितामहः इति । नैवम् ; पितुः पिता पितामहः, मातुः पिता मातामहः इति करिष्यते । तथाऽपि हृदयस्य बन्धनं शृङ्खलमस्य बन्धनं करभे, इति कथम् ? नान्योत्र बन्धनशब्दः संबन्धिवचनः—यथा हि बन्धनमित्यनेन दामोच्यते । नैवम् ; बन्धनमित्यनेन संज्ञाशब्दोपाश्रयः शृङ्खलकः करभ इति । एवं च निवासतद्वतोरपि शेषषष्ठ्यभ्युपगमत्वे कर्तृविशिष्टमधिकरणं वाच्यम्—शिबीनां निवासः शैबः इति ; अपरत्र अधिकरणविशिष्टः कर्ता—ग्रामो निवासोऽस्य सोऽयं ग्राम्यः इति । ननु च ग्रामशब्दोऽयं समूहवचनः ; तद्यथा— 'अश्वग्रामविधौ कृती न समरेष्वस्यास्ति तुल्यः पुमान्' 'न रुणत्सीन्द्रियग्रामम्' इति । किं चातः ? समूहश्च समूह्यपेक्ष इति सापेक्षत्वादसामर्थ्ये तद्धितोत्पत्तिर्न भवति । न च सामान्येन समूहाद्भविष्यतीति वाच्यम्, तावत्येवार्थे तस्यापरिसमाप्तेर्दुरधिगमाभिधाने च सामर्थ्याभावात् । न च यथा देवदत्तस्य मातुः पिता मातामहो देवदत्तस्य, विष्णुमित्रस्य गुरोः कुलं गुरुकुलं विष्णुमित्रस्येति सापेक्षस्यापि तद्धितः समासो वा भवति, एवमस्यापि भविष्यतीति वाच्यम् ; न ह्ययं संबन्धिशब्दः । संबन्धिशब्दानामेव च सापेक्षाणां वृत्तयो भवन्ति ; यदाह—

संबन्धिशब्दः सापेक्षो नित्यं सर्वः प्रवर्तते ।
स्वार्थवत् सा व्यपेक्षाऽस्य वृत्तावपि न हीयते ॥

---

[1] मूलमातृकाकोशेऽप्येवमेवात्र वर्णलोपः उपलभ्यते । परंतु, 'न्यायस्ससम्मतः सास्येत्यधिकारसमाश्रयात् ।' इति पाठेनात्र भवितव्यमिति प्रतिभाति ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अन्येषां तु सविशेषणानां न वृत्तिः, वृत्तानां वा न विशेषणमित्येव ; न हि भवति ऋद्धस्य राज्ञः पुरुषः ऋद्धराजपुरुष इति ; नापि ब्राह्मणानां ग्रामो निवासोऽस्य ब्राह्मणानां ग्राम्योऽयमिति। कथं तर्हि राज्ञः पुरुषः शोभनो राजपुरुषः शोभनः इति ? भवति वै प्रधानस्य सापेक्षस्यापि वृत्तिः। कथं तर्हि ग्रामो निवासोऽस्येति ग्रामस्य विशेष्यत्वात् प्राधान्ये सापेक्षस्यापि वृत्तिर्न भवति ? अनन्तरोक्तन्यायेनात्र षष्ठ्यर्थस्य प्राधान्यात् । ननु, अयमपि संबन्धिशब्दः कस्मान्न भवति ? समूहार्थमात्र एव वृत्त्यपरिसमाप्तेः । तर्हि न भवितव्यमेव ग्रामशब्दान्निवासनिवासवत्संबन्धे तद्धितेन ? न भवितव्यम् ; यथा—अव्युत्पन्नजनसमूहास्पदार्थोऽयमुपचारवृत्त्या भवति ; दृश्यते तात्स्थ्यात् तद्वदुपचारः, यथा मञ्चाः क्रोशन्तीति ; यदि वा ग्रामशब्दोयं बह्वर्थः ; यथा—अस्ति शालासमुदाये—ग्रामो दग्ध इति ; जनपदसमुदाये– ग्राम आगत इति ; अस्ति वाटपरिक्षेपे— ग्रामं प्रविष्ट इति ; सारण्यके ससीमके सस्थण्डिलके च भूप्रदेशे—ग्रामो लब्ध इति ; अस्ति अव्युत्पन्नजनसमूहास्पदे—'शूद्रकर्षकप्राये जनपदं निवेशयेत् ; तत्र अष्टशतग्राममध्ये प्रधानं स्थापनीयम् ; स नागराणां निवासो नगरमिति ।' तत्र अव्युत्पन्नजनसमूहास्पदे यो ग्रामशब्दो वर्तते, ततो भवितव्यं तद्धितेन—ग्रामो निवासः अस्येति सोऽयं ग्राम्यः ग्रामीणः इति ॥

अथ स्वार्थिकाः। तेऽपि द्विधा—असत्त्वभूतार्थाः, सत्त्वभूतार्थाश्च। उभयेऽपि प्रत्येकं षोढा- वाचकाः, द्योतकाः, विशेषकाः, सहाभिधायकाः, सार्थकाः, निरर्थकाश्चेति । तत्र असत्त्वभूतार्थेषु शक्तिमात्राभिधायिनो वाचकाः ; यथा—तत आगतः, तत्र वसति, पुरस्तादागतः, पुरस्ताद्वसति, देवत्रा गच्छति, मनुष्यत्रा तिष्ठति इति । पदार्थगतकुत्साप्रशंसाद्यभिव्यञ्जकाः द्योतकाः ; यथा— कुत्सितं पचति पचतकि, प्रशस्तं पचति पचतिरूपं, ईषदसमाप्तं पचति पचतिकल्पं, प्रकृष्टं पचति पचतितराम् ; एवं नितरां, अतीवतरां इति । वाचकत्वे द्योतकत्वे वा मङ्गलवीप्साद्यधिकार्थाभिधायिनो विशेषकाः ; यथा—बहुभ्यो देहि बहुशो देहि इति । अल्पं देहि अल्पशो देहि इति, द्वाभ्यां द्वाभ्यां देहि द्विशो देहि, माषं माषं देहि माषशो देहि, एवं कस्मिन् काले कदा, केन प्रकारेण कथमिति । अनुप्रयोगाद्यपेक्षिणः सहाभिधायकाः ; यथा—अनग्निरग्निः संपद्यते अग्निसात्संपद्यते, देवाय देयं करोति देवत्राकरोति । एवं तं भवन्तं ततो भवन्तं, एतेन दीर्घायुषा अत्र दीर्घायुषा, अस्मै आयुष्मते इहायुष्मते, कस्य देवानां प्रियस्य क देवानां प्रियस्य इति । गतिसंज्ञादिकार्यनिमित्तभूताः सार्थकाः ; यथा—शुक्लीकृत्य, पटपटायते, द्वेधाकारं, अभितो ग्रामं, विना देवदत्तेन, दक्षिणाहि ग्रामात् इति । शब्दोपचयादिमात्रहेतवो निरर्थकाः ; यथा—उरसि प्रत्येव प्रत्युरसं, आत्मन्यध्येव अध्यात्मं, गिरिमन्वेव अनुगिरं, उच्चैरेव उच्चकैः, त्वयैव त्वयका, अस्माभिरेव अस्माकाभिः इति । एवमन्येऽपि—देवा अर्जुनतोऽभवन् , पूर्वतो ग्रामस्य, ग्रामंपूर्वेण, पुरस्ताद्रमणीयं, ऐकध्यं करोति, पञ्चकृत्वः पचति इत्यादयः असत्त्वभूतार्थाः स्वार्थिकेषु यथायोगमवगन्तव्याः। अन्ये तु– वतिमपि शक्त्यभिधायिषु विशेषकस्वार्थिकेषु वर्णयन्ति ; यथा—राज्ञेव व्यवहृतमनेन

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

राजवत्, देवमिव भवन्तं पश्यामि देववत् इत्याद्युदाहृतं पुरस्तात्। एवं च सूत्रं व्याचक्षते— तेन तुल्यम् इत्येतस्मिन्नर्थे वतिर्भवति यत्तुल्यं क्रिया चेत् सा भवति। क्रियेत्यनेन क्रियानिमित्तभूताः शक्तय उच्यन्ते। न चैतद्वाच्यम्—एवं सति क्रिया न संगृहीता भवति; यतः क्रियाऽपि कारकमेव; यथोच्यते—

क्रियामन्ये तु मन्यन्ते क्वचिदप्यनपाश्रिताम्।
साधनैकार्थभावित्वे प्रवृत्तिमनपायिनीम्॥

सामान्यभूता सा पूर्वं धात्वर्थैः प्रविभज्यते।
ततो व्यापाररूपेण साध्ये च व्यवतिष्ठते॥

प्रकृतिः साधनानां सा प्रथमं तच्च कारकम्।
शक्तिरेवाधिकरणे स्रोतोवदुपकर्षति॥

अपूर्वं कालशक्तिं वा क्रियां वा कालमेव वा।
तमेवंलक्षणं भावं केचिदाहुः कथंचन॥ इति॥

तत्र तस्येवेत्यस्य च प्रयोजनमुपन्यस्तं पुरस्तात्–द्रव्यगुणयोस्तुल्ययोः प्रत्ययो न लभ्यत इति। नन्वेवं सति देवदत्त इव स्थूलः, यज्ञदत्त इव गोमान्, इत्यत्र प्रत्ययो न प्राप्नोति, सप्तमी षष्ठ्यन्तत्वयोरभावात्। अत्रापि क्रियाग्रहणाद्भविष्यति। कथं पुनः क्रियाशब्देन गुण उच्यते? क्रियापूर्वकत्वात्; स्थूलगुणयोगाद्धि स्थूलो भवति, गोसंबन्धाच्च गोमान् इति। नन्वेवं सति क्रियाग्रहणमपि न कर्तव्यम्; प्रवर्ततामविशेषेणैव तेन तुल्यं इत्येतस्मिन्नर्थे वतिः। 'तत्र तस्येव' इत्यनेन च नार्थः सूत्रारम्भेण। 'तदर्हम्' इत्येतदप्युपमानान्न व्यतिरिच्यते; यद्धि वृत्तं राजानमर्हति तद्राजसदृशमेव भवति। एवं च तेन तुल्यमित्येवावतिष्ठते। तथा चाह चन्द्रगोमी– 'इवे वतिः' इति। नन्वेवं सति गौरिव गवय इत्यत्रापि वतिः प्राप्नोति। नैवम्; उपमायां वतिः, नोपमाने। यद्यपि वतिशब्देनोभयमपि द्योत्यते, तथाऽप्यन्यदेवौपम्यम्, अन्यदेवोपमानम्; भूयोऽवयवसादृश्यस्य योगो ह्युपमा; यथा—चन्द्र इव मुखम्। सदृशात् सदृशप्रतिपत्तिरुपमानम्; यथा—गौरिव गवय इति॥

सत्त्वभूतार्थभेदेषु लिङ्गविशेषाद्यभिधायिनो वाचकाः; यथा—देव एव देवता, देवतैव दैवतं, उपधिरेव औपधेयं, भाग एव भागधेयं, उपाय एव औपयिकं, चत्वार एव वर्णाः चातुर्वर्ण्यं इति। कुत्साप्रशंसाद्यभिव्यंजका द्योतकाः; यथा—कुत्सितो वैयाकरणः वैयाकरणपाशः,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रशस्ता मृत् मृत्स्ना, तनुः उक्षा उक्षतरः, लघुः कुटी कुटीरकः, ईषदसमाप्तः आढ्यः आढ्यकल्पः, भूतपूर्वो राजा राजचरः इति। वाचकत्वे द्योतकत्वे वा व्याहतत्वाद्यर्थविशेषव्यक्तिहेतवः विशेषकाः; यथा—व्याहतार्था वागेव वाचिकम्, उपदेशरूपं कर्मैव कार्मणम्, असहाय एक एव एकाकी, अश्व इवायमश्वकः, कुशाग्रमिव कुशाग्रीया बुद्धिः, शिलेव शैलेयं दधि इति। प्रकृतिविशेषेभ्यो नित्यमुपजायमानाः सहाभिधायकाः; यथा—करीषगन्धेरपत्यं कारीषगन्ध्या, अभिजितोऽपत्यमाभिजित्यः, कुञ्जस्यापत्यं कौञ्जायन्यः, परस्परं विविध आक्रोशो व्याक्रोशी, समन्ताद्रावः सांराविणं, राज्ञामायत्तं राजाधीनम् इति। 'लुपि युक्तवद्व्यक्तिवचने' (पा. १.२.५१) इति कार्यार्थाः सार्थकाः; यथा—चञ्चा रमणीयम्, वर्धिका दर्शनीयः, वासुदेवः प्रतिमा, बलदेवश्चित्रं, देवपथः आकाशरेखा, हंसपथः क्रौञ्चं इति। शब्दोपचयादिमात्रहेतवः निरर्थकाः; यथा—प्रज्ञ एव प्राज्ञः, विनय एव वैनयिकः, मृदेव मृत्तिका, सूर एव सूर्यः, नामैव नामधेयं, देवानां राजैव देवराजः इति। एवं कतरः, कतमः, पटुतरः, पटुतमः, पटिष्ठः, पटीयान् इत्यादयोऽपि सत्त्वभूताः स्वार्थाः स्वार्थिकेषु यथायोगमवगन्तव्याः। किं पुनरमी पदप्रकृतयः प्रातिपदिकप्रकृतयो वा ? कुतस्ते संशयः ? उभयथोपलम्भात्; तथा ह्येषां युष्मकाभिः, कदा, तर्हीत्यादौ प्रातिपदिकप्रकृतित्वम्; भिन्दकि, त्वयकि, मयकि इत्यादौ पदप्रकृतित्वमुपलभ्यते। ततश्च यावकः, अश्वकः, उच्चकैः इत्यादौ संदेहः; न संदेहः; स्वार्थद्रव्यलिङ्गसंख्याशक्तिमात्राभिधानेन प्रातिपदिकात् स्वार्थादिनिमित्तकुत्साप्रशंसानुकम्पातिशयपरिसमाप्त्यधिकार्थद्योतनेन पदादेव स्वार्थिकोत्पत्तिर्भवतीति। स्वार्थाद्यभिधानेन हि परिसमाप्तार्थं पदं स्वार्थादिनिमित्तकैः कुत्सादिभिः संबन्धमुत्सहते; तदाह—

कुत्साप्रशंसातिशयैः समाप्तार्थं तु युज्यते।
पदं स्वार्थादयः सर्वे यस्मात्कुत्सादिहेतवः॥

यद्यपि स्वार्थाद्यन्यतमनिबन्धनाः क्वचित् कुत्सादयो भवेयुः, तथाऽपि तत्साकल्यार्थं पदादेव कादयः उत्पाद्याः। तत्र अन्यतमनिबन्धनाः कुत्सादयो यथा—

किं द्वारि दैवहतिके सहकारकेण संवर्धितेन विषवृक्षक एष पापः।
यस्मिन्मनागपि विकासविकारभाजि भीमा भवन्ति मदनज्वरसंनिपाताः॥

अत्र हि दैवहतशब्देन लब्धायां नीत्युपाधौ सर्वथैवानुकम्प्यमानतायां, सहकारसंवर्धननिबन्धनत्वमेवास्याः कपा द्योत्यते—एवं नाम त्वं दैवोपहताऽसि, यत् सहकारच्छद्मानं विषपादपं द्वारि संवर्धयसि इति। विषपादपशब्देन लब्धायां सहकारस्य सर्वथैव कुत्सायां, पादपविकासकाले कामिनामसह्यस्मरज्वरसंनिपातहेतुकत्वमेवास्याः कप्रत्ययेन प्रत्याय्यते। तदुक्तम्—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कुत्सितत्वेन कुत्स्यो वा न सम्यग्वा विकुत्सितः ।
स्वशब्दाभिहिते केन विशिष्टोऽर्थः प्रतीयते ॥

न च सांप्रतिकी कुत्सा शब्दाभेदे प्रतीयते ।
पूज्यते कुत्सितत्वेपि प्रशस्तत्वेऽपि कुत्स्यते ॥

तद्यथा—

एक इह जीवलोके जीवतिरूपं नृरूपपशुरूपः ।
यः प्रेमपाशपाशे मृग इव न मृगीदृशां पतति ॥

स्वार्थादिसाकल्यनिबन्धनाः कुत्सानुकम्पातिशयप्रशंसादयो यथा—कुत्सितकः, अनुकम्पितकः, प्रकृष्टतरः, प्रशस्यरूपः इति । अत्र हि—

देवदत्तादिकुत्सायां वर्तते कुत्सितश्रुतिः ।
कुत्सितस्था तु या कुत्सा तदर्थे को विधीयते ॥

प्रकृष्ट इति शुक्लादिप्रकर्षस्याभिधायकः ।
प्रकृष्टस्य प्रकर्षे तु तरबादिर्विधीयते ॥

एवमनुकम्पाप्रशंसयोरपि वाच्यमिति । अनुकाभिकाभीकादयोऽपि स्वार्थिकप्रत्ययान्ता एव । तेषामन्वादिभिर्हि क्रियाविशेषः कश्चिदाक्षिप्यते ; तत्र च कामयते इत्यादौ प्रत्ययो भवन् स्वार्थे एव भवति । ननु च 'अनुकाभिकाभीकः कमिता' इत्यत्र अनुकामयतेऽसौ इत्यनुकः, अभिकामयतेऽसौ इत्यभिकः, अभीको वेति वृत्तिसमानार्थवाक्यकल्पनायां धातोः पूर्वमुपसर्गेण संबन्धः, साधनेन वा ? किं चातः ? यद्युपसर्गेण, प्रकृत्यर्थो वक्तव्यः, अनुकामयते, अभिकामयते इत्यर्थे प्रत्ययस्यैवोत्पादात् । अथ साधनेन, पश्चादुपसर्गयोगो न घटते ; न ह्यसत्त्ववचना अन्वादयः सत्त्वभूतार्थवचनैः सह संबन्धमुत्सहन्ते । यथेच्छसि तथाऽस्तु । अस्तु तावत् कमेः प्रथममुपसर्गेणैव संबन्धः । ननु चोक्तं प्रकृत्यर्थो वक्तव्य इति । स नास्ति पृथक्, प्रत्ययार्थविशेषणभूतस्यैवान्वादेः प्रकृतिभावात्; यथा 'भृशादिभ्यो भुव्यच्वेः' इत्यत्र मनस्वी सुष्टु भवति सुमनायते, दुर्मनायते, अभि-अभिमनायते इति सुदुरभीनां प्रत्ययार्थभवने विशेषणत्वेऽपि प्रकृतिभावः । ननु असुमनाः सुमना भवतीति प्रकृत्यर्थविशेषणत्वमपि सुदुरभीनां कस्मान्न भवति ? तथा सति स्वमनायत, दुरमनायत, इत्यडागमः स्वादीनां पूर्वतः प्राप्नोति ; यथा—असंग्रामयतेति । तत्र संग्रामयतेः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सोपसर्गस्यैव चुरादिषु पाठ इति चेत्, इहापि तत् समानम्; भृशादिषु हि सुमनस्, दुर्मनस्, अभिमनस् इति प्रकृतयः पठ्यन्ते। यद्येवं, अन्वरुध्यतेतिवत् स भविष्यति। नैवम्; यद्यपि 'अनो रुध कामे' इति दिवादिषु पठ्यते, तथाऽपि यथा अरुध्यतेति दृश्यते नैवममनायतेति। तर्हि प्रत्ययार्थविशेषणपक्षे, यथा श्येन इवाचरति श्येनायते इत्यत्र आङः प्रयोग उक्तार्थत्वान्न भवति; एवं सुमनायत इत्यादौ स्वादीनामपि न भवेत्। नैवम्; तत्र हि आङर्थ एव प्रत्ययार्थविशेषणम्, इह तु तत्र स्वादीनामर्थाः; ततश्च मनायत इत्युक्ते न ज्ञायते सुष्ठु दुष्ठु अभि वा मनस्वी भवतीति स्वादयः प्रयुज्यन्ते; यथा 'पुच्छभाण्डचीवराण्णिङ्' (पा. ३. १. २०) इत्यत्र 'पुच्छादुदसने व्यसने पर्यसने च' इति पुच्छमुदस्यति उत्पुच्छयते, व्यस्यति विपुच्छयते, पर्यस्यति परिपुच्छयते इति, एवं अनुकामयते अनुकः, अभिकामयते अभिकः, अभीको वेति। अस्तु वा पूर्वं कमेः साधनेन संबन्धः। ननु चोक्तम्—पश्चादुपसर्गयोगो न घटत इति। निपाता अन्वादयो भविष्यन्ति—अनुरूपः कमिता अनुकः, अभिरूपः अभिकः, अभीको वेति। तथाऽपि, अनुकोऽनुकमिता, अभिकोऽभिकमिता इति वक्तव्यं स्यात्; यथा— 'उत्क उन्मनाः' इति। नैवम्, सामान्येनापि विशेषाभिधानं दृश्यते; तद्यथा— 'गम्लृ सृप्लृ गतौ' इत्यत्र हि गच्छतीति गौः, सर्पतीति सर्पः इति गमनसर्पणयोर्यद्यपि महान् विशेषः तथाऽपि गतावित्यविशेषेण निर्दिश्यते। एतेन 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' (पा. ५. २. ३१.) इत्याद्यपि व्याख्यातम्; अत्र हि नासिकायाः अवटीटनं, अवनमनं, अवभ्रंशः इति नतिविशेषा नते इत्यनेन सामान्यशब्देनाभिधीयन्त इति। उपसर्गतो वा न दोषः; अनुरूपं कामयते, अभिरूपं कामयत इति क्रियाभागमात्रेणैव संबन्धादन्वादयः प्रत्ययार्थं विशिंषन्तः प्रकृतिभावं लप्स्यन्ते; यथा—सुमनायते, विपुच्छयते इति। विषम उपन्यासः; तत्र हि मनःपुच्छादिकायाः प्रकृतेः श्रवणं विद्यते; इह तु तद्गन्धोऽपि नास्ति; यतः परः प्रत्ययः उत्पद्येत। नैवम्; इयान्, इयत्, अधुना इत्यादावपि प्रकृतेरश्रवणात्। तत्र प्रत्ययनिमित्ता प्रकृतेर्निवृत्तिः इति चेत्, इहापि निपातननिमित्ता भाविष्यति। कश्चैवमाह प्रकृतेः पर एव प्रत्ययो भवतीति? 'अव्ययसर्वनाम्नामकच् प्राक् टेः' 'विभाषा सुपो बहुच् पुरस्तात्तु पूर्वस्य' (पा. ५. ३. ७१, ६८) समासान्ताश्च सर्वे टजादयः भवन्ति। अपि च, प्रकृतिः प्रत्ययः इति रूपसिद्धिमात्रमेतत्। इदं तु अर्थवत्त्वम्—अयं शब्दोऽस्मिन्नर्थे साधुर्भवतीति। स च क्वचिदेवमुच्यते—'अनुकाभिकाभीकः कमिता' (पा. ५. २. ७४) इति; क्वचिद्वा 'नते नासिकायाः संज्ञायां टीटञ्नाटज्भ्रटचः' इति; क्वचिदुत्कर्षः 'अनुपद्यन्वेष्टा' (पा. ५. २. ९०) इति; क्वचित् 'श्रोत्रियश्छन्दोऽधीते' 'क्षेत्रियच् परक्षेत्रे चिकित्स्यते (स्यः)' (पा. ५.२.८४, ९२) इति; क्वचित् 'उपाधिभ्यां त्यकन्नासन्नारूढयोः' (पा. ५. २. ३४) 'अत्यभूतिलोमाभङ्गाभ्यो रजसि कटच्' इति; क्वचित् 'अवेः संघाते कटच्' 'दुग्धे सोढजूढमरीसचः' इति; क्वचित् 'पशुनामभ्यः स्थाने गोष्ठच्' 'द्वित्वे गोयुगच्, 'षट्त्वे षड्गवच्' इति; क्वचित् 'भवने क्षेत्रे शाकटशाकिनौ'

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

'स्नेहे तैलच्' इति ; क्वचित् 'निष्फलतिलात्पिञ्जपेजौ' 'वाचो व्याहृतार्थायां ठक्' इति ; क्वचित्, रूढितोऽर्थमनिर्दिश्यैव 'वेः शालच्छङ्कटचौ' 'संप्रोदश्च कटच्' 'अवात्कुटारच्च' 'नेर्बिडज्बिरीसचौ' 'इनच्पिटच्चिकचि च' (पा. ५. २. २८, २९, ३०, ३२, ३३) कचिकादेशश्च, इति । ननु च धातुः प्रथमं साधनेन संबध्यते, पश्चादुपसर्गेण ; तत्कथमुच्यते ? यथेच्छसि तथाऽस्तु, विशेष्यं हि पूर्वसिद्धं विशेषणसंबन्धमनुभवति ; विशेष्यश्च धात्वर्थः, क्रियारूप उपसर्गाणां, उक्तं च—'क्रियावचनो धातुः' इति ; क्रिया च साध्यमुच्यते ; साध्यं च साधनसंबन्धमन्तरेण न स्यात् । तदुक्तम्—

प्रयोगार्हेषु सिद्धस्सन्भेत्तव्योऽर्थो विशिष्यते । प्राक् च साधनसंबन्धात्क्रिया नैवोपजायते ॥

(वाक्यपदीयम्, २-१८५)

तन्न, भाविसंबन्धयोग्यतासमाश्रयणात् । इदं चावश्यमभ्युपगन्तव्यम् ; अन्यथा हि क्रिया-वचनो धातुः इत्यपि न स्यात् । न च 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' (पा. ३. १. ७) इति सन उत्पत्तिः ; तदाह—

धातोस्साधनयोगस्य भाविनः प्रक्रमाद्यथा । धातुत्वं कर्मभावश्च तथाऽन्यदपि दृश्यताम् ॥

(वाक्यपदीयम् २-१८६)

यदि च धातोः पूर्वमुपसर्गेण संबन्धो न स्यात्, कथमुच्यते 'विपराभ्यां जेः' (पा. १.३.१९) 'अधिशीङ्स्थासां कर्म' (पा. १.४.४६) इति ? ननु पूर्वमुपसर्गसंबन्धः क्वोपयुज्यते ? साधन-संबन्धमन्तरेण तद्विशेषानभिव्यक्तेः । नैवम्, फलकाले बीजसंस्कारस्येव तस्योपयोगात् ; तदुक्तं—

बीजकालेषु संबद्धा यथा लाक्षारसादयः । वर्णादिपरिणामेन फलानामुपकुर्वते ॥

बुद्धिस्थादभिसंबन्धात्तथा धातूपसर्गयोः । अभ्यन्तरीकृतो भेदः पदकाले प्रकाशते ॥

अडादीनां व्यवस्थार्थं पृथक्त्वेन प्रकल्पनम् । धातूपसर्गयोः शास्त्रे धातुरेव हि तादृशः ॥

क्रियाविशेषाः संघातैः प्रक्रम्यन्ते क्वचित्तयोः । तथा हि संग्रामयतेः सोपसर्गादटो विधिः ॥

(वाक्यपदीयम्.)

अतः अनुकामयते इत्यादौ धातोः प्रथममुपसर्गेण साधनेन वा संबन्धे न दोष इति । उप-सर्गाणां क्रियाविशेषणत्वे त्रयी गतिः—वाचकत्वं, द्योतकत्वं, सहाभिधायकत्वं च ; यथोच्यते—

स वाचको विशेषाणां संभवात् द्योतकोऽपि वा । शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्र यदा वाचकत्वं तदा धातोः प्रथममुपसर्गेण संबन्धः ; यथा—प्रतिष्ठते, निराकरोति इति। यदा द्योतकत्वं तदा साधनेन ; यथा—प्रपचति, निकर्षति इति। यदा सहाभिधायकत्वं तदा धातूपसर्गयोस्तुल्यकालं साधनेन संबन्धः ; यथा—अधीते, अध्येति इति। तदुक्तम्—

स्वादिभिः केवलैर्यत्र गमनादि न गम्यते। तत्रानुमानात् द्विविधात्तद्धर्मा प्रादिरुच्यते॥

क्वचित्संभाविनो भेदाः केवलैरभिदर्शिताः। उपसर्गेण संबन्धे व्यज्यन्ते प्रपरादिना॥

यदाऽभिधानसामर्थ्यं धातोर्नैकाकिनस्तदा। धातूपसर्गौ संभूय समर्थावर्थमाहतुः॥ इति॥

(वाक्यपदीयम्)

ननु च, प्रथमतः साधनसंबन्धे प्रपचतीत्यत्र प्रकृष्टः पचतीति स्यात्, न तु प्रकृष्टं पचतीति। तन्न, साधु पचतीत्यादावपि समानदोषत्वात् तत्र क्रियाविशेषणत्वात् क्रियामात्रेणैव संबन्ध इति चेत्, इहापि स एवार्थः। कथं च प्रादयश्चादिवदसत्त्ववचनाः क्रियाविशेषकाः कर्तृविशेषणं भवेयुः? 'उपसर्गाः क्रियायोगे' (पा. २. ४. ५९) इति वचनात्। कथं पुनरसत्त्ववचनाश्चादयो भवन्ति? उच्यते—

तेषामुच्चावचार्थत्वात् सर्वसंबन्धदर्शनात्। अन्यतन्त्रतयोद्भूतेरसत्त्वार्थत्वमुच्यते॥

अथ किममी वाचकाः, उत द्योतकाः इति। तत्रैके वर्णयन्ति—

'तत्प्रयोगावसेयत्वाद्वाच्यस्तेषां स गम्यते। समुच्चयादिरर्थात्मा यथाऽन्येषां गवादिकः॥'

अन्ये त्वाहुः—

'षष्ठ्यभावादसत्त्वोक्तेरेकानुक्तेः परस्थितेः। गुणभावात्स्मृतेश्चैषां द्योतकत्वं सुनिश्चितम्॥'

इति॥ तदेतदग्रतः प्रातिपदिकार्थनिर्णये निश्चेष्यत इति नेह प्रतन्यते॥

अथ पृथगर्थानामेकार्थीभावः समासः। स त्रिधा—प्राकृतः, वैकृतः, शेषश्च। तेषु समस्तपदानामव्ययीभावादिसंज्ञानिमित्तं पूर्वपदप्रधानादिका प्रकृतिः ; तत्र भवः प्राकृतः। स चतुर्धा—अव्ययीभावः, तत्पुरुषः, बहुव्रीहिः, द्वन्द्वः इति। तेषु पूर्वपदप्रधानोऽव्ययीभावः। स त्रिधा—अव्ययानां, अनव्ययानां, कर्मप्रवचनीयानां च। तत्र अव्ययानां यथा—अधिस्त्रि, उपकुम्भम्, अतितैसृकं, ससखि, यावदमत्रं, बहिर्ग्रामं इति। अनव्ययानां यथा—अग्रेवणं, मध्यन्दिनं, चतुर्दश, द्विमुनि, पारेगङ्गं, मध्येसमुद्रं इति। कर्मप्रवचनीयानां यथा—अपत्रिगर्तं, परित्रिगर्तं, आप्रपदं, आपाटलिपुत्रं, अनुवनं, अनुगङ्गं इति। उत्तरपदार्थप्रधानस्तत्पुरुषः। सोऽपि त्रिधा—व्यधिकरणः, समानाधिकरणः, द्विगुश्च ; तत्र व्यधिकरणो यथा—राजपुरुषः, कष्टश्रितः, शङ्कुला-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

खण्डः, धान्यार्थः, यूपदारु, वृकभयम्, कुम्भीपाकः इति ; समानाधिकरणो यथा—नीलोत्पलं, एकपुरुषः, केवलान्नम्, पापकुलालः, अब्राह्मणः, ईषत्कडारः इति ; द्विगुर्यथा—द्वैमातुरः, पाञ्चनापितिः, पञ्चगवधनः, त्रिलोकहर्म्यं, पञ्चपूली, चतुःपात्रं इति । अन्यपदार्थप्रधानो बहुव्रीहिः ; स त्रिधा—प्रधानसंबन्ध्यर्थः, अप्रधानसंबन्ध्यर्थः, कारकार्थश्च ; तेषु प्रधानसंबन्ध्यर्थो यथा—दक्षिणस्याश्च पूर्वस्याश्च दिशोर्यदन्तरालं सा दक्षिणपूर्वा, एवं दक्षिणापरा, सहाग्निना वर्तते साग्निः, सवंशपुत्रः, केशेषु केशेषु गृहीत्वेदं युद्धं प्रवर्तते केशाकेशि, दण्डैश्च दण्डैश्च प्रहृत्य दण्डादण्डि, इति । प्रथमान्तमिह प्रधानमन्यपदार्थः । अप्रधानसंबन्ध्यर्थो यथा—चित्रा गावः अस्य चित्रगुः, अर्धं तृतीयमेषां अर्धतृतीयाः, अविद्यमाना भार्या अस्य अभार्यः, उष्ट्रस्येव मुखमस्य उष्ट्रमुखः, कण्ठे स्थिताः कालाः अस्य कण्ठेकालः, केशसंहारः चूडा अस्य केशचूडः इति । षष्ठ्यन्तमिहाप्रधानमन्यपदार्थः । कारकार्थो यथा—आरूढो वानरो यं स आरूढवानरो वृक्षः, ऊढो रथोऽनेन ऊढरथोऽनड्वान्, एवं क्षुण्णव्रीहि मुसलम्, उपहृतपशू रुद्रः, उद्धृतौदना स्थाली, मत्तबहुमातङ्गं वनं इति । अत्र द्वितीयादिवाच्यं कर्मादिकारकं समासार्थः । उभयपदार्थप्रधानो द्वन्द्वः ; स त्रिधा—इतरेतरविषयः, समाहारविषयः, उभयविषयश्च ; तत्र भेदविवक्षायामितरेतरयोगः ; यथा—धवखदिरौ, मातापितरौ, दधिपयसी, शिववैश्रवणौ, गोऽश्वौ, दशेमे मार्दङ्गिकपाणविकाः इति । अभेदविवक्षायां समाहारः ; यथा—पाणिपादं, रथिकाश्वारोहं, तक्षायस्कारं, गवाश्वं, प्रत्यष्ठात् कठकौथुमं, उदगात् कठकालापं इति । विभाषितैकवद्भाव उभयविषयः ; यथा—अश्ववडवौ, अश्ववडवं, हंसचक्रवाकाः, हंसचक्रवाकम् । धवखदिरपलाशाः, धवखदिरपलाशं इति ।

प्रकृतेरन्यथात्वं विकृतिः, तत्र भवः वैकृतः । सोऽपि चतुर्धा—प्राधान्यविपरीतः, सामर्थ्यविपरीतः, वाक्याधिकारार्थः, अर्थान्तरगामी च । तेषु प्राधान्यविपर्ययस्त्रिधा—पूर्वपदार्थप्राधान्यविपर्ययः, उत्तरपदार्थप्राधान्यविपर्ययः, अन्यपदार्थप्राधान्यविपर्ययश्चेति । तत्र पूर्वपदार्थप्राधान्यविपर्ययोऽव्ययीभावो यथा—शाकप्रति, अक्षपरि, तिष्ठद्गु, उन्मत्तगङ्गं, पञ्चनदं, सप्तगोदावरं इति । उत्तरपदार्थप्राधान्यविपर्ययस्तत्पुरुषो यथा—राजदन्तः, पूर्वकायः, प्राप्तजीविकः, गोगर्भिणी, अश्वमतल्लिका, गोवृन्दारकः इति । अन्यपदार्थप्राधान्यविपर्ययो बहुव्रीहिर्यथा—द्वौ वा त्रयो वा द्वित्राः, एवं पञ्चषाः, आसन्ना दशानां आसन्नदशः, एवमदूरदशः, एवं द्विर्दश द्विदशाः, एवं त्रिदशा इति । सामर्थ्यविपर्ययस्त्रिधा—पदासामर्थ्यात्, वाक्यासामर्थ्यात्, वृत्त्यसामर्थ्यात् ; तत्र पदासामर्थ्यं सापेक्षत्वे यथा—देवदत्तस्य गुरुकुलं, ग्रामं गन्तुकामः, ज्ञातचित्तः कान्तया, निवेदितात्मा गुरुभ्यः, कृतप्रस्थानो नगरात्, निष्पन्नबुद्धिः शास्त्रेषु इति ; वाक्यासामर्थ्यमस्वपदविग्रहे यथा—ब्राह्मणेभ्योऽयं ब्राह्मणार्थः सूपः, ब्राह्मणार्था यवागूः, मासो जातस्य मासजातः, एवं संवत्सरजातः, द्वे अहनी जातस्य द्व्यहजातः, एवं द्व्यह्नजातः इति ; वृत्त्यसामर्थ्यं संबन्धे यथा—सूर्यमपि न पश्यन्ति असूर्यपश्या राजदाराः, पुनर्न गीयन्ते अपुनर्गेयाः श्लोकाः, श्राद्धं न भुङ्क्ते

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अश्राद्धभोजी ब्राह्मणः, एवमलवणभोजी भिक्षुः इति, तीर्थे ध्वांक्ष इव तीर्थध्वांक्षः, एवं तीर्थकाकः इति । अर्थाधिक्यं त्रिधा—विशेषणस्य, विशेष्यस्य, समुदायस्य च ; विशेषणस्य यथा—वर्षशतमायुरस्य शतायुः, जनसहस्रं बिभर्ति सहस्रंभरः, अश्रेणयः श्रेणयः कृताः श्रेणीकृताः, अपण्डितः पण्डित उक्तः पण्डितोक्तः, शस्त्रीव श्यामा शस्त्रीश्यामा, पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः इति ; विशेष्यस्य यथा—घृतेन पूर्णो घटः घृतघटः, अश्वैर्युक्तो रथः अश्वरथः, दध्नोपसिक्त ओदनः दध्योदनः, गुडेन मिश्रा धानाः गुडधानाः, अक्षेषु प्रसक्तो धूर्तः अक्षधूर्तः, शाकप्रधानः पार्थिवः शाकपार्थिवः इति ; समुदायस्य यथा—श्वभिः लेह्यः कूपः श्वलेह्यः कूपः, काकैः पेया नदी काकपेया नदी, खट्वायामारूढः खट्वारूढो जाल्मः, पात्र एव समिताः पात्रेसमिताः, एवं किंराजा यो न रक्षति, किंगौः यो न वहति इति ; अत्र पूर्वयोरतिशयः, शेषेषु क्षेपः समुदायस्य प्रतीयते । अर्थान्तरगमनं त्रिधा—पूर्वार्थस्य त्यागात्, अत्यागात्, त्यागात्यागाभ्यां च ; तत्र पूर्वार्थस्य त्यागो यथा—तैलपायिका, शक्रगोपः, अश्वकर्णः, पञ्चाङ्गुलः, करवीरः, पुंनागः इति ; अत्यागो यथा—कृष्णसर्पः, लोहितशाली, कालशाकः, गौरखरः, नरसिंहः, दन्तलेखः इति ; त्यागात्यागौ यथा—सप्त पर्णान्यस्य पर्वणि पर्वणि इति सप्तपर्णः, अष्ट पदानि अस्य पङ्क्तौ पङ्क्तौ इति अष्टापदम्, शतं पत्राणामस्याः पुष्पे पुष्पे इति शतपत्रिका, दर्शने दर्शने नवैव मालिका अस्या नवमालिका, नक्तमिव मालायामस्य नक्तमालः, कृता माला अस्य पुष्पैः इति कृतमालः इति ॥

उदाहृतप्रकाराभ्यामन्यः शेषः ; स चतुर्धा—सूत्रशेषः, असूत्रशेषः, ज्ञापकशेषः, एकशेषश्चेति। तेषु सूत्रशेषस्त्रिधा—गणोक्तः, वार्तिकोक्तः, सामान्योक्तश्च ; तत्र 'तिष्ठद्गुप्रभृतीनि' (पा. २.१.१७) 'पात्रे समितादयः' (पा. २.१.४८) 'मयूरव्यंसकादयः' (पा. २.१.७२) इति गणोक्तः ; यथा—आयतीगवं, समभूमि, उदुम्बरमशकम्, पिण्डीसूरः, अहंपूर्विका, आहोपुरुषिका इति ; 'निरादयः क्रान्ताद्यर्थे पञ्चम्या' गमिगाम्यादिकृतापकृतानामुपसंख्यानम्' 'अव्ययानां बहुव्रीहिः वक्तव्यः' इति वार्तिकोक्तः; यथा—निष्कौशाम्बिः, ओदनबुभुक्षुः, क्रयाक्रयिका, पुटापुटिका, उच्चैर्मुखः, अस्तिक्षीरा इति ; 'सुप्सुपा' (पा. २.१.४) 'पूर्वादिनिः' 'सपूर्वाच्च' (पा ५.२.८६, ८७) 'कुशाग्राच्छः' 'समासाच्च तद्विषयात्' (पा. ५.३.१०५, १०६) इति सामान्योक्तः ; यथा—परश्शता राजानः, परस्सहस्रा शरदः, पुनरुत्स्यूतं वासः, पुनर्नवं पयः, कृतपूर्वी कटं, काकतालीयो न्यायोऽयं इति । असूत्रशेषस्त्रिधा—नामविषयः, कृद्विषयः, तद्धितविषयश्च ; 'अपरस्पराः क्रियासातत्ये', 'पारस्करप्रभृतीनि च संज्ञायाम्' (पा. ६.१.१४४, १५७) 'पृषोदरादीनि यथोपदिष्टम्' (पा. ६.३.१०९) इत्यादिर्नामविषयः ; यथा—अपरस्पराः सार्था गच्छन्ति, आश्चर्यं वर्तते, पारस्करो मुनिः, कास्तीरं नगरं, पृषोदरः कश्चिन्मयूरः पक्षी इति ; 'उपपदमतिङ्' 'कुगतिप्रादयः' (पा. २.२.१९, १८) 'कर्तृकरणे कृता बहुलम्' (पा. २.१.३२) इत्यादिः कृद्विषयः ; यथा—कुम्भकारः, पङ्कजं, ऊरीकृत्य, प्रजवी, अश्वक्रीती ; 'द्विगोर्लुगनपत्ये' (पा. ४.१-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

८८) 'तिककितवादिभ्यो द्वन्द्वे' (पा. २.४.६८) 'समासान्ताः' (पा. ५.४.६८) इत्यादिस्तद्धितविषयः ; यथा—पञ्चसु कपालेषु संस्कृतः पञ्चकपालः, तैकायनयश्च कैतवायनयश्च तिककितवाः, उपशरदम्, देवराजः, महोक्षः, मृगनेत्रा रात्रयः इति । ज्ञापकशेषस्त्रिधा—विधिज्ञापितः, निषेधज्ञापितः, प्रयोगज्ञापितश्च । तत्र 'कोः कत्तत्पुरुषे', 'ईषदर्थेऽपि' (पा. ६.३.१०१, १०५) 'नञो नलोपस्तिङ्यवक्षेपे च' 'कारकेऽन्यस्य दुक्' 'व्यतिहारे सर्वादीनां सुब्बहुलम्' संख्याविसायपूर्वस्याह्नस्याहन्नन्यतरस्यां ङौ' (पा. ६. ३. ११०) 'दायाद्यं दायादे' (पा. ६. २.५) इत्यादिको विधिज्ञापितः ; यथा—कदुष्णं, अपचसि, अन्यत्कारकः, अन्योऽन्यम्, सायाह्नः, विद्यादायादः इति । 'अलुगुत्तरपदे', 'पञ्चम्याः स्तोकादिभ्यः', 'आत्मनः पूरणे तृतीयायाः' 'वैयाकरणाख्यायां पराच्चतुर्थ्याः' [पा. ६. ३. १, २, ६, ७] 'वाग्दिक्पश्यद्भ्यो युक्तिदण्डहरेषु यथासंख्यमलुग्वक्तव्यः', 'षष्ठ्याः अदसः फक्फिञोः', 'अपो योनियन्मतुपु सप्तम्याः' इत्यादिः निषेधज्ञापितः ; यथा—ब्राह्मणाच्छंसी, आत्मनातृतीयः, परस्मैपदम्, पश्यतोहरः, आमुष्यकुलिका, अप्सुयोनिः इति । 'जनिकर्तुः प्रकृतिः' 'तत्प्रयोजको हेतुः' [पा. १.४.३०, ५५] 'अपोनप्त्रपान्नप्तृभ्यां घः' [पा. ४.२.२७] 'यथातथाचान्तः', 'वर्तमानसामीप्ये वर्तमानवद्वा' [पा. ३. ३-१३१] 'अपरस्पराः क्रियासातत्ये' [पा. ६.१.१४४] इत्यादिः प्रयोगज्ञापितः; यथा—भूतहर्ता, दण्डनायकः, तनूनपात्, याथातथ्यं, यत्नगौरवं, क्रियासाफल्यं इति । एकशेषस्त्रिधा—सरूपाणां, असरूपाणां, सरूपासरूपाणां च । तत्र सरूपाणां भिन्नार्थानामभिन्नार्थानां भिन्नाभिन्नार्थानां च ; भिन्नार्थानां यथा—अक्षौ, माषौ, पक्षौ, पादौ, गावौ ; अभिन्नार्थानां यथा—वृक्षौ, प्लक्षौ इति ; भिन्नाभिन्नार्थानां यथा—अश्विनौ, पुष्पवन्तौ, गावौ, सारस्वतौ, युवां, यूयं इति । असरूपाणां सर्वनाम्नां, संबन्धिनां, सहचारिणां च ; सर्वनाम्नां यथा—स च देवदत्तश्च तौ, एतौ च यज्ञदत्तश्च एते, अयं च त्वं च युवाम्, अमू च त्वं च यूयं, त्वं चाहं च आवां, स च आवां च वयं इति ; संबन्धिनां यथा—माता च पिता च पितरौ, स्वसा च भ्राता च भ्रातरौ, पुत्रश्च दुहिता च पुत्रौ, पिता च मातामहादयश्च पितरः, भ्रातरौ च स्वसारश्च भ्रातरः, पुत्राश्च दुहितरौ च पुत्राः इति ; सहचारिणां यथा—दस्रश्च नासत्यश्च दस्रौ, देवदत्तश्च विष्णुमित्रश्च विष्णुमित्रौ, शौण्डश्च धूर्तादयश्च शौण्डाः, अर्धर्चश्च गोमयादयश्च अर्धर्चाः, पुरोडाशश्च धानादयश्च पुरोडाशाः, छत्री च पदात्यादयश्च छत्रिणः ; सरूपासरूपाणां भिन्नशब्दानां, भिन्नवचनानां, भिन्नलिङ्गानां च ; भिन्नशब्दानां यथा–गार्ग्यश्च गार्ग्यायणी च गार्ग्यौ, वात्स्यश्च वात्स्यायनश्च वात्स्यौ, प्रथमश्च प्रथमानन्तरश्च प्रथमौ, भीमश्च भीमसेनश्च भीमौ, वक्रदण्डश्च कुटिलदण्डश्च वक्रदण्डौ, श्रीमांश्च लक्ष्मीवांश्च श्रीमन्तौ इति ; भिन्नवचनानां यथा—देवश्च दत्तश्च देवदत्तौ, तौ च देवदत्तश्च देवदत्ताः ; एवं विष्णुमित्राः ; कृष्णश्च सारश्च कृष्णसारौ, तौ च सारश्च कृष्णसाराः ; एवं नीललोहिताः ; अपारश्च पारश्च अपारपारौ, तौ च पारपारश्च पारपाराः ; एवमपारपाराः इति ;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भिन्नलिङ्गानां यथा—कुक्कुटश्च कुक्कुटी च कुक्कुटौ, श्वशुरश्च श्वश्रूश्च श्वशुरौ, गावश्च गावश्च गावः इमाः, वत्सकाश्च वत्सिकाश्च वत्सिका इमे, अश्वाश्च अश्वाश्च अश्वा एते, शुक्लश्च शुक्ला च शुक्लं च तदिदं शुक्लम्, तानीमानि शुक्लानि इति। कथं पुनरेकशेषः समासविशेषो भवति? संक्षेपाभिधाने सति द्वन्द्वसमानार्थत्वात्; तथा हि—असरूपाणां द्वन्द्वः, सरूपासरूपाणामेकशेष इति। कोऽनयोः समानोऽर्थः? येयं युगपदधिकरणवचनता— पदार्थानां सहविवक्षेत्यर्थः; तदाह—

अनुस्यूतेव भेदाभ्यामेका प्रख्योपजायते। यस्यां सहविवक्षां तामाहुर्द्वन्द्वैकशेषयोः॥

इति। तत्र यदा प्रयोगैकतया बुद्धयाऽनेकमर्थमवगत्य यथावगतमेवाभिधातुमध्यवस्यते, तदैकज्ञानावच्छेदानिरूपितभेदस्यास्य भागशोऽभिधानासंभवादवयवशब्दाः संघातविषया विज्ञायन्ते; तद्यथा—धवखदिरौ वृक्षौ इति। यद्येवम्, यथा धवखदिरपलाशमिति द्वन्द्वस्य समूहार्थत्वादेकवचनम्, एवमेकशेषस्यापि प्राप्नोति। नैवम्; द्वन्द्वः समाहारेतरेतरयोगयोः, एकशेषः पुनरितरेतरयोग एव; तस्य हि समाहारपक्षे भिन्नार्थप्रतिपादकानेकशब्दनिवृत्तौ वचनमपि यद्यनेकार्थं न भवेत् केनानेकार्थः प्रतीयेत? न हि वृक्ष इत्युक्ते वृक्षश्च वृक्षश्च वृक्षश्चेति कश्चिदप्यवैति; तस्मादाम्नातोऽपि द्वन्द्वसमानार्थतया समाहार एकशेषोऽनभिधानादप्रयोगार्ह एवेति विज्ञायते। द्वन्द्वे तु यद्यपि एकवचनान्नानेकार्थावगतिः, तथाऽपि अनेकशब्दश्रुतिनिबन्धनाऽसौ भविष्यतीति समाहारेऽपि न दोषः। एकशेषेऽपि यत्रानेकाभिधानसामर्थ्यं कथंचिद्भवति, भवत्येव तत्र समाहारैकवचनम्; यथा—शुक्लं वस्त्रं शुक्ला शाटी शुक्लः पटः इति तदिदं शुक्लमिति। यथा तर्ह्येकस्यैव शब्दस्यानेकार्थाभिधानसामर्थ्यादेकशेषे शब्दान्तराणां निवृत्तिः, एवं द्वन्द्वेऽपि कस्मान्न भवति? यदि भवेत्, एकशेषादविशेषः प्रसज्येत। समाहार एकवचनं विशेष इति चेत् अनेकार्थो न गम्येत; न हि पलाशमित्युक्ते धवश्च खदिरश्च पलाशश्चेति कश्चिदप्यवैति। अथ, यथा पितरौ भ्रातरावित्यादिषु शब्दान्तरनिवृत्तावपि तदर्थोऽवगम्यते तथा प्लक्षन्यग्रोधौ धवखदिरावित्यादिषु द्वन्द्वेष्वपि कस्मान्न भवति? उच्यते—शब्दशक्तिरेषा भवति हि कश्चिदेकोऽपि शब्दो द्वयोरभिधायकः; यथा—रोदसीशब्दो द्यावापृथिव्योः; कौचित् पुनर्द्वावेवैकमर्थमभिदधाते; यथा—अधीते, अध्येति इति। अत एव शब्दशक्तिदर्शी मुनिः केषुचिदेवं विरूपेष्वेकशेषमारभते— 'भ्रातृपुत्रौ स्वसृदुहितृभ्याम्' (पा. १.२.६८) 'पिता मात्रा' (पा. १.२.७०) इति; अन्येषु तु द्वन्द्वमेवाभ्यनुजानाति॥

ननु च, 'चार्थे द्वन्द्वः' (पा. २.२.२९) स्मर्यते; स यथा समाहारेतरेतरयोगयोः, तथा समुच्चयान्वाचययोरपि प्राप्नोति। नैवम्, समुच्चयान्वाचययोः पदानामसामर्थ्यात्। कथमसामर्थ्यम्? सापेक्षमसमर्थं भवतीति; तथाहि—गौश्चाश्वश्च गच्छतीत्यादिरेकक्रियापेक्षः समुच्चयः, भिक्षामट गां चानयेत्यादिरनेकक्रियापेक्षः अन्वाचयः; एवं च बाह्यार्थापेक्षया पदानां परस्परमसामर्थ्यम्;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

समर्थश्च पदविधिर्भवति । समाहारेतरेतरयोगयोस्तु समूहत्वात् समूहस्य च समूहिरूपत्वादवयवानां सति सामर्थ्ये समासो भवत्येव ; यथा—धवखदिरपलाशं, धवखदिरपलाशाः इति । एवं तर्हि समूहस्यैकत्वात् समाहारवदितरेतरयोगेऽप्येकवचनमेव प्राप्नोति । नैवम्, समाहार एव परस्परानुप्रवेशादिव समधिगताभेदानामुपसर्जनीकृतावयवः समुदायोऽभ्यनुज्ञायते, यस्यानभिव्यक्तावयवत्वादेकवचनमिव नपुंसकत्वमपि प्राप्नोति ; इतरेतरयोगः पुनरवयवभेदानुयातः सङ्घातः, तस्य प्रत्येकवर्तिपदैरभिधीयमानत्वात् समुदायसंख्यानिबन्धनैकवचनमवयवेभ्यः प्रस्तूयते । तत्र यथा पचतीत्यादौ अधिश्रयणादिक्रियाकलापः प्रत्यवयवं परिसमाप्यते, तथा समुदायार्थोऽपि प्रतिपदं साकल्येन परिसमाप्यते । ततः एकैकस्य पदस्य समुदायनिबन्धनः संस्कारो भवति । कथं पुनः धवादयो निर्धारितार्थभेदाः पदान्तरस्यार्थमभिधातुं क्षमन्ते ? प्रवृत्तिनिवृत्तिसमारोपात् ; यथोक्तं—'यदि प्रक्षरतीति प्लक्षः, न्यग्रोधोऽप्येवम्, यदि न्यग्रोहतीति न्यग्रोधः प्लक्षोऽप्येवं' इति । साहचर्यादिवशेन वा परस्परूपापत्तिः ; यथा—'सप्तमी शौण्डैः', 'अर्धर्चाः पुंसि', ते विष्णुमित्राः, छत्रिणो गच्छन्तीति । तत्र यथा शौण्डार्धर्चादयः बहुवचनान्यथानुपपत्तिसमभिगम्यान् सहचारिणो भिन्नरूपान् धूर्तगोमयादीनुपाददते, तथा धवादिशब्दाः प्रतीतार्थभेदाः साहचर्यादिनिमित्तानुरोधेन खदिरादीनुपाददते । तथा हि—एकवृत्तिपदावरोधप्रतीतसाहचर्यौ धवखदिरौ ; अत एव तयोरेव प्रत्यवयवनिवेशाद्बहुवचनं न भवति । कथं पुनर्धवादीनामर्थान्तराभिधानं शक्यमध्यवसातुम् ? यावता लोकः पदसमुदायादर्थसमुदायमवैति, नावयवात् । यदप्युक्तम्—प्रवृत्तिनिवृत्तिसमारोपादिति, तदप्यसारम् ; न हि प्रक्षरतीति व्युत्पत्त्या न्यग्रोधः प्लक्षः, नापि न्यग्रोहतीति व्युत्पत्त्या प्लक्षो न्यग्रोधो भवति ; रूढानां हि धर्मनियमाय यथाकथंचित् व्युत्पत्तिः क्रियते, न तु व्युत्पत्तिवशेन रूढयोऽवतिष्ठन्ते । नापि प्रकृतिप्रत्ययवदन्वयव्यतिरेकसमधिगम्या धवादीनां समुदायार्थता । यदप्युच्यते—शौण्डार्धर्चादिवत् धवशब्दः साहचर्यादिलक्षणया खदिरमुपादत्ते इति, तदपि न सम्यक् ; सति श्रुत्यर्थसंभवे लक्षणाया अयोगात् ; न च खदिरार्थो धूर्तगोमयादिवल्लक्षयितव्यः, तस्य खदिरशब्देनैव साक्षादभिधानात् । एवं तर्हि, यदा धवखदिरादयः समुदायाः प्रविभागेनान्वाचिख्यासिताः, तदा तमेव समुदायं प्रत्याख्यतयाऽभिसंधायावयवा उपादीयन्ते, न त्ववयवार्थप्रतिपादनाभिप्रायेण । अतस्तस्यां युगपदधिकरणवचनतायां समीहितायां समुदायपरत्वादवयवप्रयोगस्य, तेषामवयवानां प्रत्येकमनेकार्थत्वमुच्यते । किं पुनः प्रयोक्तुरभिप्रायमनुरुध्यन्ते शब्दाः ? येन तदभिसंधानात् समुदायमभिदध्युः । नेत्याह ; अन्यत्राप्यवयवाभिधायिनां शब्दानामवयवमुखेन समुदायाभिधानसामर्थ्यं दृश्यते ; यथा—सुरभि कुवलयं, यन्मधुरं राजतनं इति ; यदि हि सुरभिमधुरशब्दौ गन्धरसमात्राभिधायिनावपि गन्धरसादिसमुदायान् कुसुमफलविशेषादीनवयवमुखेन नाचक्षते, कुवलयादिभिः सह सामानाधिकरण्यं विरुध्येत । सत्यमेतत् ; अस्ति समुदायाभिधानसामर्थ्यमवयवशब्दानाम्, किं तु सुरभि कुवलयं इत्यादौ सामानाधिकरण्येन तदवधार्यते ;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्वन्द्वे तु निबन्धनमशक्यमवधारयितुमिति तस्यानुपपत्तिः। नैवम्, समुदायाभिधानस्य प्रक्रान्तत्वात्। यद्येवं पट्वीमृद्व्याविति समानाधिकरणलक्षणः पुंवद्भावः प्राप्नोति। उच्यते; अथेह कस्मान्न भवति दर्शनीयाया माता दर्शनीयामाता? अथ मतमेतत्—प्राक् समासाद्यत्र सामानाधिकरण्यम्, इहापि न दोषो भवति; न हि प्राक् समासात् सामानाधिकरण्यमत्र विद्यते। ननु च वाक्येऽपि समुदायप्रक्रमेणैवावयवपदानां प्रयोगात्, कथमुच्यते प्राक् समासात् सामानाधिकरण्यं नास्तीति? समुदायप्रक्रमस्य निर्निबन्धनत्वेनाप्रतीयमानत्वात्; कुवलयादिशब्दसामानाधिकरण्यं हि सुरभिप्रभृतीनामसमासेऽपि समुदायतानिबन्धनम्; इह त्वेकार्थीभावः समुदायाभिधाने निमित्तमिति वाक्ये सामानाधिकरण्याप्रसिद्धिः। एवमपि, विप्रतिषिद्धेषु युगपदधिकरणवचनताया अनुपपत्तिः; यथा—सुखदुःखे, जननमरणे, शीतोष्णे इति; सुखादिप्रतिघातेन हि दुःखादयः, दुःखादिप्रतिघातेन च सुखादय इति। नैवम्; सर्व एव शब्दा विप्रतिषिद्धाः; प्लक्षन्यग्रोधावित्यत्रापि हि प्लक्षशब्दः प्रयुज्यमानः प्लक्षार्थं संप्रत्याययति, न्यग्रोधार्थं निवर्तयति; न्यग्रोधशब्दः प्रयुज्यमानो न्यग्रोधार्थं प्रत्याययति, प्लक्षार्थं निवर्तयति। तत्र चेद्युक्ता युगपदधिकरणवचनता दृश्यते, इहापि युक्तं दृश्यताम्। एवमपि शब्दपौर्वापर्यप्रयोगादर्थपौर्वापर्याभिधानं प्राप्नोति। ततः किम्? युगपदधिकरणवचनताया अनुपपत्तिः—प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधा इति; यथैव हि शब्दानां पौर्वापर्यं तद्वदर्थानामपि स्यात्। नैवम्; एवं सति, द्विवचनबहुवचनयोरप्यनुपपत्तिः; प्लक्षशब्दो हि सार्थको निवृत्तः, न्यग्रोधशब्द उपस्थितः; स चैक एकार्थ इति तस्मादेकवचनमेव प्राप्नोति। विग्रहे खल्वपि युगपदधिकरणवचनता दृश्यते, किं पुनः समासे; तद्यथा—'द्यावा ह क्षामा', 'द्यावा चिदस्मै पृथिवी सन्नमेते' (ऋ. ७.६.११, २.६.९) इति। समुदायात् सिद्धमिति चेत्, तन्न, समुदायस्यैकार्थत्वात्। एकार्था हि समुदाया भवन्ति; तद्यथा—शतं यूथं वनमिति। नायमेकार्थः; किं तर्हि? द्व्यर्थो बह्वर्थश्च; प्लक्षोऽपि द्व्यर्थः, न्यग्रोधोऽपि द्व्यर्थः। यद्येवमनेकार्थत्वात् 'बहुषु बहुवचनम्' (पा. १.४.२१) इति बहुवचनं प्राप्नोति। तन्न, बहुत्वाभावात्; याभ्यामेवात्रैको ह्यर्थस्ताभ्यामेवापरोऽपि। यद्येवमन्यवाचकेन शब्देनान्यस्य वचनं नोपपद्यते। एवं तर्हि प्लक्षस्य न्यग्रोधत्वात् न्यग्रोधस्य च प्लक्षत्वात् स्वशब्देनैवाभिधानं भविष्यतीति। कथं पुनः प्लक्षोऽपि न्यग्रोधः, न्यग्रोधोऽपि प्लक्षः स्यात्? यावता कारणाद्द्रव्ये शब्दसंनिवेशो भवति। कारणाद्द्रव्ये शब्दसंनिवेश इति चेत्, कारणमुक्तं पुरस्तात्– यदि प्रक्षरतीति प्लक्षः न्यग्रोधेऽप्येतद्भवति, यदि न्यङ्रोहतीति न्यग्रोधः, प्लक्षेप्येतद्भविष्यतीति। दर्शनं वै हेतुः, न च न्यग्रोधे प्लक्षशब्दो दृश्यते। दर्शनं हेतुरिति चेत्, तुल्यमेतद्भवति; प्लक्षेऽपि न्यग्रोधशब्दो दृश्यते। नन्वेतद्ब्रवीमि—नैष लोके संप्रत्ययोऽस्ति, न हि प्लक्ष आनीयतामित्युक्ते न्यग्रोध आनीयते। द्वन्द्वविषयमेवैतद्द्रष्टव्यम्; युक्तं पुनर्यन्नियतविषया नाम शब्दाः स्युः? बाढं युक्तम्, अन्यत्रापि दर्शनात्; तद्यथा—समानेऽपि रक्ते वर्णे गौर्लोहित इति भवति, अश्वः शोण इति; समाने शुक्ले

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वर्णे गौः श्वेत इति भवति, अश्वः कर्क इति। यदि तर्हि प्लक्षोऽपि न्यग्रोधः न्यग्रोधोऽपि प्लक्षः, एकेनैवोक्तत्वादपरस्य प्रयोगोऽनुपपन्नः। अनुक्तः प्लक्षेण न्यग्रोध इति कृत्वा न्यग्रोधशब्दः प्रयुज्यते। कथमनुक्तः? यदिदानीमेवोक्तं प्लक्षोऽपि न्यग्रोधः न्यग्रोधोऽपि प्लक्ष इति। सहभूतावन्योऽन्यस्यार्थमाहतुः, न पृथग्भूतौ। किं पुनः कारणम्? शब्दशक्तेः स्वभावः; प्रतिनियता हि वृत्तिवाक्ययोः शब्दानामभिधानशक्तिः; तद्यथा—शस्त्रीश्यामा देवदत्तेति। 'उपमानानि सामान्यवचनैः' (पा. २.१.५५) इति समासे शस्त्रीशब्देनावाच्छिद्यमानविशेषावरुद्धः श्यामाशब्दो यद्यपि न सामान्यवचनः, तथाऽप्यसौ देवदत्तायामुपमीयमानायां वर्तते शस्त्रीव श्यामा देवदत्तेति; तदिदमुक्तम्—'प्रागभिसंबन्धाद्यः सामान्यवचनः' इति समासमभिसंबन्धशब्देन दर्शयति; यतस्तत्र विनिवृत्तविशेषान्तराकांक्षाणि यथासमीहितविशेषावरुद्धानि पदानि। सोऽयं वृत्तिवाक्ययोर्विशेषः। किं च, निष्कौशाम्बिः, निर्वाराणसिरिति भेदे सति निरादीनां न क्रान्ताद्यर्थसंभवः। अपि च, गौरखरवदरण्यम्, लोहितशालिमान् ग्राम इति। 'प्राग्वृत्तेर्जातिवाचित्वं न च गौरखरादिषु।' यथा—स्निग्धकिसलयमरण्यं, मत्तमातङ्गं वनमिति। 'वृत्तिरन्यपदार्थे या तस्या वाक्येष्वसंभवः॥'

एवं च प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाः इति द्वन्द्वेऽपि सहभूतयोरेवान्यार्थाभिधानं भविष्यति, न पृथग्भूतयोरिति। अथवा, इह कौचित् प्लक्षन्यग्रोधौ प्राथमकल्पिकौ; कौचित् क्रियया गुणेन वा प्लक्ष इवायं प्लक्षः, न्यग्रोध इवायं न्यग्रोध इति। तत्र प्लक्षावित्युक्ते संदेहः स्यात्—किमिमौ प्लक्षावेव, आहोस्वित् न्यग्रोधावेव, अथवा प्लक्षन्यग्रोधाविति। तत्रासंदेहार्थो न्यग्रोधशब्दः प्रयुज्यते। सेयं युगपदधिकरणवचनता दुःखा दुरुपपादा च। यदपि चास्या ज्ञापकं 'द्यावा ह क्षामा' इति, तदपि छान्दसम्। इदं तर्हि ज्ञापकमस्तु 'परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः' 'पूर्ववदश्ववडवौ' (पा. २.४.२६, २७); यदि ह्यत्र कुक्कुटमयूर्यौ इत्यादिषु सहविवक्षा न स्यात्, अनर्थकः सूत्रारम्भः स्यात्। ननु च, तत्पुरुषस्योत्तरपदार्थप्रधानत्वात्तत्र परवल्लिङ्गतातिदेशोऽनर्थकः। नानर्थकः, तत्पुरुषस्य क्वचित् पूर्वपदार्थप्रधानत्वात्; यथा—अर्धं पिप्पल्याः अर्धपिप्पली, पूर्वं कायस्य पूर्वकायः, उत्तरं शरीरस्य उत्तरशरीरं इति। यद्येवं, प्राप्तो जीविकां प्राप्तजीविकः, निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः, अलं कुमार्यै अलंकुमारिः इत्यत्रापि परवल्लिङ्गता प्राप्नोति। एवं तर्हि, द्वन्द्वेन सह निर्देशाच्चार्थविषयोऽत्र तत्पुरुषो गृह्यते; यथा—क्रयाक्रयिका, पुटापुटिका, फलाफलिकेति, अश्वमतल्लिका, कुमारीतल्लजकः, गोप्रकाण्डं इति। अत्र हि, यथा धवश्च खदिरश्चेति युगपदधिकरणवचनतायां, तथा समानाधिकरणतायामपि विशेषणविशेष्यभावेन संमूर्छन्ताविवान्योन्यमर्थौ भवतः। तथा हि—प्रयोजनवत्तया महत्त्वाश्रयश्चासावल्पमूल्यत्वेन लघुत्वात् क्रयिका चेत्युपपद्यते, नीलोत्पलादिवद्विशेषणविशेष्यभावः। एवं फलाफलिका, पुटापुटिकेति। अश्वमतल्लिकेत्यत्राश्वशब्दः प्रवर्तमानः सर्वाश्वावग्रहरूपेण प्रवर्तते; मतल्लिकाशब्दः प्रशंसावचनः प्रवर्तमानो विशिष्टावग्रहरूपेणावच्छिनत्ति। यदि वा, मतल्लिकेत्येतत् प्रशंसावचनं न्यूनाधिकभावमनपेक्ष्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रवर्तमानमनेनैव धर्मेण सर्वयोग्यं सत् अश्व इत्यनेन विशिष्टायां योग्यतायां नियम्यते । ततो यथा—शुक्लः कृष्णश्चायं मृगः सारङ्गः शबल इति वा, तथा अश्वमतल्लिकेत्येतदुभयरूपोऽर्थ इत्युभयमुभयेन संनिवेश्यते । एवं कुमारीतल्लजकः, गोप्रकाण्डं इति । यद्येवं, अर्धपिप्पलीत्यादिषु षष्ठीसमासापवादेषु परवल्लिङ्गता न प्राप्नोति । नैवम्, तत्रापि अर्धं च तत् पिप्पली चार्धपिप्पलीति, पूर्वश्चासौ कायश्च पूर्वकाय इति सामानाधिकरण्यमेव परमार्थः । अत एव यत्र सामानाधिकरण्यस्यासंभवः, तत्र षष्ठीसमास एव भवति ; यथा—वेद्यर्थं दक्षिणं मेरोः, स्वरार्धं, चूडिकार्धं, पणार्धं इति । न च अर्धादीनामेवैष नियमः, यतोऽन्यत्रापि सामानाधिकरण्यस्य विवक्षाऽविवक्षाभ्यामुभयथा तत्पुरुषो भवति ; तद्यथा—अग्रहस्तः, हस्ताग्रं, तलपादः, पादतलं इति ॥

ननु च, 'चार्थे द्वन्द्वः' (पा. २.२.२९) इत्युच्यते ; चश्चाव्ययम्, तेन समासस्याव्ययसंज्ञा प्राप्नोति ; नैष दोषः; पाठेनाव्ययसंज्ञा क्रियते ; न च समासस्तत्र पठ्यते । मा भूदपाठे संज्ञा, तथाऽप्यभिधेयवल्लिङ्गवचनानि भवन्ति ; यश्चेहार्थोऽभिधीयते, न तस्य लिङ्गसंख्याभ्यां योगोऽस्ति। नेदं वाचनिकम्—अलिङ्गता, असंख्यता च । किं तर्हि ? स्वाभाविकमेतत् । तद्यथा—समानमीहमानानामधीयानानां च केचिदर्थेन युज्यन्ते, अपरे न ; न चेदानीं कश्चिदर्थवानिति कृत्वा सर्वैरर्थवद्भिश्शक्यं भवितुम्, कश्चिद्वाऽनर्थक इति सर्वैरनर्थकैः । तत्र किमस्माभिः शक्यं कर्तुम्; यत्प्राक् समासाच्चार्थस्य लिङ्गसंख्याभ्यां योगो नास्ति, समासे च भवति ; स्वाभाविकमेतत्। अथवा, आश्रयतो लिङ्गवचनानि भविष्यन्ति, यथा गुणवचनेषु । गुणवचनानां हि शब्दानामाश्रयतो लिङ्गवचनानि भवन्ति । तद्यथा, शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः कम्बलः, शुक्लौ कम्बलौ, शुक्लाः कम्बलाः इति । यदसौ द्रव्यं श्रितो भवति समासस्तस्य यल्लिङ्गं वचनं च तत्समासस्यापि भविष्यति । अथेह कस्मान्न भवति—याज्ञिकश्चायं वैयाकरणश्च, कठश्चायं बह्वृचश्च, औक्थिकश्चायं मीमांसकश्चेति ? शेष इति वर्तते, अशेषत्वान्न भविष्यति । यदि शेष इति वर्तते—" उपास्नातं स्थूलसिक्तं तूष्णींगङ्गं महाह्रदम् । द्रोणं चेदशको गन्तुं मा त्वा तासीं कृताकृते ॥ " इत्येतन्न सिध्यति । नैष दोषः ; अन्यद्धि कृतमन्यदकृतम् । चार्थे द्वन्द्ववचने असमासेऽपि चार्थसंप्रत्ययादनिष्टं प्राप्नोति — "अहरहर्नयमानो गामश्वं पुरुषं पशुम् । वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥ " 'इन्द्रस्त्वष्टा वरुणो वायुरादित्यः' इति । नैष दोषः ; इह 'चे द्वन्द्वः' इतीयता सिद्धम्; कथं पुनश्चे नायं वृत्तिः स्यात् ? शब्दो ह्येषः ; शब्देऽसंभवादर्थे कार्यं विज्ञास्यते । सोऽयमेवं सिद्धे सति यदर्थग्रहणं करोति, तस्यैतत्प्रयोजनम् ; यथैवं विज्ञायेत—चकृतेऽर्थे चार्थ इति । कः पुनः चकृतोऽर्थः ? समुच्चयः, अन्वाचयः, इतरेतरयोगः, समाहार इति । तत्र द्वयोः सापेक्षत्वात् समासो न भवति, द्वयोस्तु भवतीति प्रतिपादितं पुरस्तात् । ननु चैवम्, चकृतोऽर्थश्चार्थ इति पक्षे प्लक्षन्यग्रोधावित्यत्र प्लक्षश्च न्यग्रोधश्चेति विग्रहः प्राप्नोति ; यावता प्लक्षश्च न्यग्रोधश्चेदप्युक्ते गम्यत एतत्—प्लक्षोऽपि न्यग्रोधसहायः, न्यग्रोधोऽपि प्लक्षसहाय इति । तत्र को दोषः स्यात् ?

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्लक्षौ च न्यग्रोधौ चेति यदुक्तं तन्न घटते । युगपदधिकरणवचनताप्रदर्शनमात्रपरमेतत्, न त्वयमेव परमार्थः । एवं हि क्रियमाणे एकश्च विंशतिश्च एकविंशतिः, द्वौ च विंशतिश्च द्वाविंशतिरिति द्विवचनं बहुवचनं च प्राप्नोति । किं पुनरेकविंशतिरित्यादयो द्वन्द्वाः ? बाढम् । एकाधिका विंशतिरिति पक्षे हि संख्यास्वरो न प्राप्नोति ; स हि शतसहस्रमिति षष्ठीसमासे मा भूदिति द्वन्द्व एवाभ्यनुज्ञायते । यद्येवमितरेतरयोगपक्षे द्विवचनम्, समाहारपक्षे नपुंसकत्वं प्राप्नोति । नैवम् ; 'लिङ्गमशिष्यं लोकाश्रयत्वात्' इति समाहारेऽपि नपुंसकत्वं न भविष्यति । अथ द्वादशेत्यत्रापि समाहारः कस्मान्न भवति ? आ दशभ्यः संख्याः संख्येय एव वर्तन्ते ; अतः उद्भूतावयवसमुदायतायामितरेतरयोग एव प्राप्नोति ; यथा 'अधिकरणैतावत्त्वे च' (पा. २.४.१५) दशेमे मार्दङ्गिकपाणविका इति ॥

तदेतत् कृत्तद्धितसमासभेदाद्विभक्तावयवं त्रिधा प्रातिपदिकमभिहितम् । अथाविभक्तावयवमुच्यते । तदपि त्रिधा—नामरूपं, अव्ययरूपं, निपातरूपं च । तत्रानपेक्षितशब्दव्युत्पत्तीनि सत्त्वभूतार्थाभिधायीनि च नामानि । तानि त्रिधा—एकार्थानि, अनेकार्थानि, एकानेकार्थानि चेति ; तत्र, एकार्थानि यथा—वृक्षः, कुण्डम्, कुमारी, डित्थः, शुक्लः, शीघ्रः, इन्द्रः, शक्रः, पुरन्दरः, कोष्ठः, कुसूलः इति । अनेकार्थानि यथा—अक्षाः, माषाः, पादाः, अवयः, हरयः, गावः, भूतयः, पुण्डरीकं, पुष्करं, साम, ललाम इति । एकानेकार्थानि यथा—दस्रौ, नासत्यौ, पुष्पवन्तौ, उभौ, रोदसी, रोदस्यौ, दाराः, वर्षाः, आपः, वनं, पङ्क्तिः, सेना इति । प्रायेणालिङ्गसंख्याशक्तीन्यव्ययानि ; तान्यपि त्रिधा—द्रव्यवचनानि, गुणवचनानि, संबन्धवचनानि चेति ; तेषु द्रव्यवचनानि यथा—स्वः, प्रातर्, दिवा, दोषा, नक्तं, सायं, विहायसा, भूः, शम्, शंयोः, मयः इति ; गुणवचनानि यथा—उच्चैः, नीचैः, सुष्ठु, अपष्ठु, मुधा, अद्धा, मृषा, मिथ्या, अलं, बलवत्, पृथक्, विष्वक् इति । संबन्धवचनानि यथा—समया, निकषा, बहिः, अन्तः, अन्तरेण, ऋते, आरात्, युगपत् साकं, सार्धं, अमा, सह इति । असत्त्ववचनाश्चादयो निपाताः । तेऽपि त्रिधैव–स्वतन्त्राः, परतन्त्राः, विशेषपरतन्त्राश्च ; तेष्वस्त्यादयः स्वतन्त्राः ; यथा—अस्ति, असि, अस्मि, एहि, ब्रूहि, मृदुहि, मन्ये, जाने, पश्य, पश्यत, स्यात् इति । कर्मप्रवचनीयाश्चादयः परतन्त्राः—वृक्षमनु विद्योतते, उपार्जुनं योद्धारः, अप त्रिगर्तेभ्यो वृष्टो देवः, अभिमन्युरर्जुनतः प्रति, यदत्र मां प्रति स्यात्, अधि ब्रह्मदत्ते पञ्चालाः, अहं च त्वं च वृत्रहन्, (ऋ. ६.४.२३) 'वायुर्वा त्वा मनुर्वा त्वा' (तै. सं. १.७.७.२) 'अहमेव पशूनामीशे', सरोजमिव ते मुखम्, 'न नूनमस्ति नो श्वः' (ऋ. २.४.१०) 'कस्विदेकाकी चरति' (तै. सं. ७.४.१८.१) इति । गतिप्रादयो विशेषपरतन्त्राः ; यथा—प्रकरोति, पराकरोति, ऊरीकरोति, गुलुगुधाकरोति, कारिकाकरोति, खाट्करोति, पटपटाकरोति, तिरस्करोति, पुरस्करोति, श्रद्धा, अन्तर्धिः इति ॥

अथानुकरणम् । तदपि त्रिधैव–साध्वनुकरणं, असाध्वनुकरणं, अव्यक्तानुकरणं च । तत्र

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रथमं सार्थकं, निरर्थकं च । तयोः सार्थकं यथा—द्विः पचत्वित्याह, अग्नी इत्याह, पचतीत्याह; अत्र सार्थकत्वात् 'तिङ्ङतिङः', (पा. ८.१.२८) इति निघातः 'ईदूदेद्द्विवचनम्' (पा. १.१.११) इति प्रगृह्यत्वम्, 'तिङन्तत्वादप्रातिपदिकत्वे सुबुत्पत्तिश्च न भवतीति । निरर्थकं यथा—'सुः पूजायाम्' 'अपिः पदार्थसंभावनाऽन्ववसर्गगर्हासमुच्चयेषु', (पा. १.४.९४, ९६) 'चः समुच्चये'; अत्रार्थस्यानुकरणात् स्वस्वरूपत्वाच्च प्रातिपदिकत्वे सुपः श्रवणं भवतीति । द्वितीयम्—अशक्तिजं, अपभ्रंशश्च; तत्राशक्तिजं यथा—अहो ऋतक इति वक्तव्ये शक्तिवैकल्यात् अहो लतक इत्याह; अपभ्रंशो यथा—हेरयो हेरय इति वक्तव्ये, असुरा हेलयो हेलय इति वदन्तः पराबभूवुः । तृतीयं—निरुल्लेखं, सोल्लेखं च; तयोः निरुल्लेखं यथा—पटत्पटदिति करोति, पटपटायते । सोल्लेखं यथा—तदेतदेवैषा दैवी वागनुवदति स्तनयित्नुर्दाद इति; दास्यत, दत्त, दयध्वमिति तदेतत्त्रयं शिक्षेत्—दमं दानं दयामिति ॥

प्रत्ययविशेष एव शक्तिसंख्याविभागकृद्विभक्तिः । सा त्रिधा—तिङ्विभक्तिः, सुब्विभक्तिः, अव्ययविभक्तिश्च । तासु तिङ्विभक्तिः षोढा—परस्मैपदविभक्तिः, आत्मनेपदविभक्तिः, सार्वधातुकविभक्तिः, आर्धधातुकविभक्तिः, व्यक्तकालविभक्ति, अव्यक्तकालविभक्तिश्च; तासु परस्मैपदविभक्तिः यथा—पचति, पचतः, पचन्ति; आत्मनेपदविभक्तिर्यथा—पच्यते, पच्येते, पच्यन्ते; सार्वधातुकविभक्तिर्यथा—व्यपच्यत, व्यपच्येतां, व्यपच्यन्त; आर्धधातुकविभक्तिर्यथा—पपाच, पक्ता, पक्षीष्ट; व्यक्तकालविभक्तिर्यथा—अपाक्षीत्, अपचत्, पक्ष्यते; अव्यक्तकालविभक्तिर्यथा—पचतु, पचेत्, अपक्ष्यत इति । सुब्विभक्तिरपि षोढा—कारकविभक्तिः, संबन्धविभक्तिः, शेषविभक्तिः, उपपदविभक्तिः, प्रधानविभक्तिः, संबोधनविभक्तिश्च; तासु कारकविभक्तिर्यथा—कटं करोति, दात्रेण लुनाति, ब्राह्मणाय ददाति; संबन्धविभक्तिर्यथा—विद्यया यज्ञः, यूपाय दारु, गवां कृष्णा संपन्नक्षीरतमा इति; शेषविभक्तिर्यथा—मातुः स्मरति, वृक्षस्य पर्णं पतति, माणवकस्य पितरं पन्थानं पृच्छति; उपपदविभक्तिर्यथा—वृक्षं प्रति विद्योतते विद्युत्, नमो देवेभ्यः, ऋते देवदत्तात्; प्रधानविभक्तिर्यथा—देवदत्तः पचति, चैत्रेण पच्यते, वीरः पुरुषः इति; संबोधनविभक्तिर्यथा—हे देवदत्त, व्रजामि देवदत्त, आगच्छ देवदत्त इति । तद्धितप्रत्ययविशेषोऽव्ययविभक्तिः । सा द्विधा—विभक्तिकार्यवती, अविभक्तिकार्यवती च । विभक्तिकार्यवती 'प्राग्दिशो विभक्तिः' (पा. ५.३.१) इति । सा त्रिधा—विभक्त्यादेशरूपा, प्रत्ययादेशरूपा, प्रत्ययरूपा च; तासु विभक्त्यादेशरूपा यथा—'पञ्चम्यास्तसिल्' 'सप्तम्यास्त्रल्', 'इदमो हः', 'किमोऽत्', (पा. ५. ३. ७, १०, ११, १२) भवान्दीर्घायुरायुष्मान्देवानांप्रिय एतैर्योगे तेऽन्यासां चेति; यथा—सर्वस्मात्, सर्वतः, यस्मिन्, यत्र, तं भवन्तम्, ततो भवन्तं, एतेन दीर्घायुषा अत्र दीर्घायुषा, इहायुष्मते अस्मै आयुष्मते, कस्य देवानां प्रियस्य क्व देवानां प्रियस्य इति; प्रत्ययादेशरूपा 'तसेश्च' (पा. ५.३.८) तसिः । स च 'प्रतियोगे पञ्चम्यास्तसिः', 'अपादाने चाहीयरुहोः', 'अतिग्रहाव्यथनक्षेपेष्वकर्तरि

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तृतीयायाः', 'षष्ठ्या व्याश्रये (पा. ५.४.४४, ४५, ४६, ४८) 'आद्यादिभ्यश्च सर्वविभक्तिः', इति; यथा—अभिमन्युरर्जुनतः प्रति, शैलतोऽवतरति, शीलतोऽतिगृह्यते, देवा अर्जुनतोऽभवन्; आदौ आदितः, प्रमाणेन प्रमाणतः इति; प्रत्ययरूपा–'सर्वैकान्यकिंयत्तदः काले दा' 'इदमोर्हिल्', (पा. ५.३.१५, १६), 'प्रकारवचने थाल्' 'था हेतौ च च्छन्दसि', 'इदमस्थमुः', 'किमश्च' (पा. ५.३.२३, २६, २४, २५) इति; यथा—सर्वदा, एतर्हि; सर्वथा, प्रकथा, इत्थं, कथं इति। अविभक्तिकार्याऽपि त्रिधा—शब्दोक्ता, अर्थोक्ता, प्रयोगोक्ता च; तासु शब्दोक्ता यथा—'सप्तमीपञ्चमीप्रथमाभ्योऽस्तातिः', (पा. ५. ३. २७) 'देवमनुष्यपुरुषपुरुमर्त्येभ्यो द्वितीयासप्तम्योर्बहुलम्' (पा. ५.४.५६) इति; यथा—पुरस्ताद्वसति, पुरस्तादागतः, पुरस्ताद्रमणीयं, देवत्रा गच्छति, मनुष्यत्रा वसति, पुरुषत्राभिनिविशते इति; अर्थोक्ता 'बह्वल्पार्थाच्छस् कारकादन्यतरस्याम्', 'संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्' (पा. ५.४.४२, १७) इति; यथा—बहु देहि बहुशो देहि, बहुभ्यो देहि बहुशो देहि, द्वौ द्वौ देहि द्विशो देहि, द्वाभ्यां द्वाभ्यां देहि द्विशो देहि, माषं माषं देहि माषशो देहि, पञ्च वारान् देहि पञ्चकृत्वो देहि इति। प्रयोगोक्ता–'तेन तुल्यं क्रिया चेद्वतिः', 'तत्र तस्येव' (पा. ५.१.११५, ११६)। यथा—अग्निना तुल्यमयं वर्तते अग्निवत्, देवमिव भवन्तं पश्यामि देववत्, ब्राह्मणेन तुल्यमस्मै दीयते ब्राह्मणवत्, व्याघ्रेण तुल्यमस्माद्बिभेति व्याघ्रवत्, मधुरायामिव पाटलिपुत्रे प्रासादाः मधुरावत्, श्रोत्रियस्येवास्य शुक्ला दन्ता श्रोत्रियवत्। तद्धितविभक्तिरिति वक्तव्ये अव्ययग्रहणम्, अधिस्त्रि, प्रत्युरसं, पारेगङ्गं, पुरा, साक्षात् इत्येवमादीनामुपसंग्रहणार्थमिति॥

'प्रथमानिर्दिष्टं समास उपसर्जनम्' 'एकविभक्ति चापूर्वनिपाते' (पा. १.२.४३, ४४)। तत् त्रिधा—विशेष्यरूपं, विशेषणरूपं, तुल्यरूपं च; तत्र विशेष्यरूपं यथा—पुरुषोऽयं व्याघ्र इव पुरुषव्याघ्रः, पूजितोऽश्वः अश्वकुञ्जरः, गर्भिणी गौः गोगर्भिणी, स्तोकोऽग्निः अग्निस्तोकः, कायस्य पूर्वः पूर्वकायः, अर्धं पिप्पल्याः अर्धपिप्पली इति; विशेषणरूपं यथा—राज्ञः पुरुषः राजपुरुषः, दन्तानां राजा राजदन्तः, कष्टं श्रितः कष्टश्रितः, जीविकामापन्नः आपन्नजीविकः, नीलमुत्पलं नीलोत्पलं, उत्तमः पुरुषः पुरुषोत्तमः इति; तुल्यरूपं यथा—शस्त्रीव श्यामा शस्त्रीश्यामा, खञ्जश्चासौ कुब्जश्चेति खञ्जकुब्जः, निर्गतः कौशाम्ब्याः निष्कौशाम्बिः, चित्रा गावोऽस्य चित्रगुः, अर्धं तृतीयमेषां अर्धतृतीयाः, के सब्रह्मचारिणोऽस्य किंसब्रह्मचारी इति। ननु च, अर्धं तृतीयमेषामिति अन्यपदार्थो नोपपद्यते। स हि तत्र स्यात्, यत्र येषां पदानां समासः, ततोऽन्यस्य पदस्यार्थो भवति। नैष दोषः। अवयवेन विग्रहः, समुदायः समासार्थः। नन्वेवं सति, 'असिद्वितीयोऽनुससार पाण्डवम्' 'सङ्कर्षणद्वितीयस्य बलं कृष्णस्य वर्धताम्'। इत्यादिषु द्वयोर्द्विवचनमिति द्विवचनं प्राप्नोति। नैवम्, असिर्द्वितीयो यस्येत्यन्यपदार्थेनैक एवोच्यते। यथा–'जनार्दनस्त्वात्मचतुर्थ एव' इति। यदि वा, द्वितीयशब्दोऽयमस्ति तीयान्तः संख्यापूरणः; अस्ति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

चाव्युत्पन्नः सहायवाची, तस्येह ग्रहणम्—असिद्वितीयः असिसहाय इत्यर्थः । आत्मचतुर्थ इति कोऽयं समासः ? नन्वन्यपदार्थः–आत्मा चतुर्थः अस्येति । आत्मना चतुर्थ इति तत्पुरुषः कस्मान्न भवति ? 'आत्मनश्च पूरणे' (पा. ६.३.६) इति तृतीयाया अलुक्प्रसङ्गात् । यद्येवम्, अलुक् न वक्तव्यः ; आत्मना चतुर्थ इति वाक्यं भविष्यति ; आत्मचतुर्थ इति च वृत्तिः ; न चात्मचतुर्थ इत्युक्ते बहुव्रीहौ तत्पुरुषे वाऽर्थभेदो विद्यते, उभयथाऽपि चतुस्संख्योपलक्षितसमुदायप्रतीतेः । नैवम् ; एवं सति, राज्ञः सखा राजसखः इत्यप्युक्ते संबन्धादेतद्गन्तव्यम्—नूनं राजाऽस्य सखा ; राजसखेति चोक्ते गन्तव्यमेतत्—राज्ञस्सखाऽयमिति । ततश्च बहुव्रीहितत्पुरुषयोरन्यतरो न प्राप्नोति । नैवम् ; अस्त्यत्र विशेषः—तत्पुरुषे समासान्तो भवति ; यथा—'स्वस्ति सोमसखाय ते' बहुव्रीहौ न भवति ; यथा—'वृत्रं जहि मरुत्सखे' इति । इहापि तर्ह्यस्ति विशेषः—तत्पुरुषे आत्मनाचतुर्थसाध्यमेतत् ; बहुव्रीहावात्मचतुर्थसाध्यमेतदिति । अपि च, अन्यथाजातीयः प्रत्यक्षेणार्थसंप्रत्ययः, अन्यथाजातीयः खल्वनुमानेन भवति ; तत्रायं राज्ञस्सखा, आत्मना चतुर्थ इति प्रत्यक्षेण ; संबन्धस्योभयनिष्ठत्वात् नूनं राजाऽप्यस्य सखा, आत्माऽप्यस्य चतुर्थ इत्यनुमानेन । एवं बहुव्रीहावपि द्रष्टव्यम् । अथ यथाऽऽत्मचतुर्थ समुदायस्यैकार्थत्वादेकवचनम्, एवमर्धतृतीया इत्यत्रापि कस्मान्न भवति ? अन्येऽपि ह्येकार्था एव समुदाया भवन्ति ; तद्यथा—शतं, यूथं, वनमिति । विषम उपन्यासः ; आत्मचतुर्थ इत्यत्र हि बहुव्रीहिणोपसर्जनीकृतप्रतीयमानपरसंख्येयसमानाधिकरणात्मचतुर्थशब्दशक्त्यभिधेयो जनार्दन एकोऽस्येत्यन्यपदस्यार्थः प्रतिपाद्यते ; इह तु अर्धतृतीयशब्दशक्त्यभिधेयास्त्रयः संख्येयाः । तत्र यद्येकवचनं वाक्ये वृत्तौ वा भवति, केषां तदर्धं तृतीयं भवति ? नन्वेवमपि, अर्धतृतीया द्रोणा इति द्रोणशब्दः समुदाये वृत्तो नार्धे वर्तते । नैष दोषः ; समुदायेषु वृत्ताः शब्दाः अवयवेष्वपि वर्तन्ते ; तद्यथा—पूर्वे पञ्चालाः, उत्तराः कुरवः इति । अथ, द्वौ द्रोणावर्धाढकं च कर्तव्यमर्धतृतीया द्रोणा इति । न कर्तव्यम् । समुदाये शब्दाः प्रवृत्ताः तेष्ववयवेषु वर्तन्ते, योऽवयवस्तं समुदायं न व्यभिचरति ; यथा—द्रोणार्धे द्रोणं, आढकार्धमाढकमिति । यद्यर्धं तृतीयमनयोरिति विग्रहः क्रियते, को दोषः स्यात् ? षष्ठ्यर्थो नोपपद्यते ; किं हि द्वयोस्तृतीयमर्धं भवति ? भवानपि पृष्टो व्याचष्टाम् । अथेह देवदत्तस्य भ्रातेति कः संबन्धार्थः ? एकस्मात् प्रादुर्भाव इति चेत्, वार्त्तं तत् ; तद्यथा—सार्थिकानामेकप्रतिश्रयद्विजानां प्रातरुत्थाय विप्रतिष्ठमानानां न कश्चित्परस्परमभिसंबन्धो भवति एवंजातीयकं भ्रातृत्वं नाम ; तत्र चेद्युक्तः षष्ठ्यर्थो दृश्यते, इहापि युक्तो दृश्यताम् ; द्वयोर्ह्यनुजन्मा तृतीयो भवति । दृश्यते चान्यत्रापि द्वयोस्तृतीयेन संबन्धः ; तद्यथा—

निसर्गभिन्नास्पदमेकसंस्थमस्मिन्द्वयं श्रीश्च सरस्वती च ।
कान्त्या गिरा सूनृतया च योग्या त्वमेव कल्याणि तयोस्तृतीया ॥ इति ॥

नन्वेवम्, अर्धतृतीया आनीयतामित्युच्यमानं न प्राप्नोति, बहुवचनं च नोपपद्यते । नैष

CC-0. JK Sanskrit Academy, Jammu. Digitized by eGangotri Initiative

दोषः ; भवति हि बहुव्रीहौ तद्गुणसंविज्ञानमपि ; तद्यथा—शुक्लवाससमानय, लोहितोष्णीषाः ऋत्विजः प्रचरन्तीति तद्गुण आनीयते, तद्गुणाश्च प्रचरन्ति । बहुवचनं तु द्वित्रादिवदुपपद्यत इति ; तत्र यथा आनीयन्तामिति त्रयाणामिव द्वयोरप्यानयनपक्षे बहुवचनमुपपन्नं भवति, तथेहापि भविष्यति । विषम उपन्यासः ; तत्र हि द्वौ वेत्युक्ते त्रयो वेति गम्यते, त्रयो वेत्युक्ते द्वौ वेति गम्यते ; सैषा समानाधिकरणपदार्थपञ्चकाधिष्ठाना वाक् ; तत्र युक्तं बहुवचनम् ; इह त्वर्धं तृतीयमनयोरित्युक्ते यद्यपि गम्यते त्रयाणां पूरणस्तृतीयो भवतीति, तथाऽपि समासेऽन्यपदार्थ-परतया द्वयोरेवाभिधानाद्बहुवचनस्य नोत्पत्तिः । तद्गुणसंविज्ञानमपि समासाभिधानपक्ष एवोपपद्यते ; समासश्च सामर्थ्ये सति भवति ; सामर्थ्यं च वृत्तिवाक्ययोरैकार्थ्यम् ; तच्च तदोपजायते, यदि वृत्ताविव वाक्येऽपि समासार्थस्य बहुवचनं भवति ।

अथ किंसब्रह्मचारीति कोऽयं समासः ? के सब्रह्मचारिणोऽस्येति । कः सब्रह्मचारीति कर्मधारयः कस्मान्न भवति ? भवति, यदि क्षेपो गम्यते, यथा—किंराजा यो न रक्षति, किंगौः यो न वहति । केषां सब्रह्मचारीति तत्पुरुषस्तर्हि भवतु । कठ इति प्रतिवचनं नोपपद्यते ; न ह्यन्यत् पृष्टेनान्यदाख्येयम् ; अतः कठानामिति प्रतिवक्तव्यं भवति । बहुव्रीहावप्येतत्तुल्यमेव ; तत्रापि के सब्रह्मचारिणोऽस्येति बहुवचनप्रश्ने कठ इति नैकवचनेनोत्तरं भवति । नैष दोषः ; अग्नौ करवाणीति न्यायेन भविष्यति ; तद्यथा—कश्चिदाह—अग्नौ करवाणीति, तत्र कुर्विति तत्कर्तर्यनु-ज्ञाते कर्माप्यनुज्ञातं भवति ; अपर आह—अग्नौ करिष्ये ; तत्र क्रियतामिति कर्मण्यनुज्ञाते कर्ताप्यनुज्ञातो भवति । एवं तथैव के सब्रह्मचारिणोऽस्येत्युक्ते कठा इति प्रत्युक्ते संबन्धादेतद्गम्यते अयमपि कठः ; तथा कठ इत्यप्युक्ते संबन्धादेतदवगन्तव्यम्—तेऽपि कठाः । समासेन तु प्रति-निर्देष्टुमशक्यम्, उपसर्जनं हि तत्र ते भवन्तीति ॥

ऐकपद्यं समासः । स त्रिधा—उपश्लिष्टक्रियः, गमितक्रियः, अक्रियश्च । तेषूपश्लिष्टक्रियो द्विधा—उभयस्थक्रियः, अन्यतरस्थक्रियश्च ; तयोरुभयस्थक्रियो यथा—कृताकृतं, क्लिष्टाक्लिशितं, स्नातानुलिप्तः, भ्रष्टलुञ्चितः, कृष्टातिकृष्टं, क्रयाक्रयिका इति ; अन्यतरस्थक्रियो यथा—भोज्योष्णं, प्राप्तजीविकः, आहिताग्निः, कष्टश्रितः, काकपेया, इध्मप्रव्रश्चनः इति । गमितक्रियो द्विधा—उभयकारकः, अन्यतरकारकश्च । तयोरुभयकारको यथा—दध्नोपसृष्ट ओदनः दध्योदनः, गुडेन मिश्रा धाना गुडधानाः, शष्कुलया कृतः खण्डः शष्कुलाखण्डः, अक्षेषु प्रसक्तः शौण्डः अक्षशौण्डः, कण्ठे स्थितः कालो यस्य कण्ठेकालः, पञ्चसु कपालेषु संस्कृतः पञ्चकपालः इति । अन्यतरकारको यथा—प्रगत आचार्यः प्राचार्यः, अतिक्रान्तो मालामतिमालः, अवक्रुष्टः कोकिलया अवकोकिलः, परिग्लानोऽध्ययनाय पर्यध्ययनः, निष्क्रान्तः कौशाम्ब्याः निष्कौशाम्बिः, प्रपतितानि पलाशान्यस्य प्रपलाशः इति । अक्रियोद्विधा—वस्तुरूपः, अवस्तुरूपश्च । तयोर्वस्तुरूपो यथा—उपकुम्भं, त्रिभुवनं,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नीलोत्पलं, राजपुरुषः, चित्रगुः, धवखदिरौ इति। अवस्तुरूपो यथा—अधिस्त्रि, प्रत्युरसं, यथाशक्ति, यावदमत्रं, पारेगङ्गं, मध्येसमुद्रं इति। अयं तु उपश्लिष्टक्रियो गमितक्रियश्च भवति। यथा-

आयतीगवमागच्छत्यातिष्ठद्गूपतिष्ठते। निकुच्य कर्णे शार्दूलोऽपोह्य पुच्छी प्रधावति॥

यथा च—

शलाकापर्यभिद्यूतं चतुष्पर्यक्षपर्यपि। विपर्यस्ते विधौ पश्य तलादेरपि जायते॥

केशाकेशि, बाहूबाहवि, दण्डादण्डि, मुष्टीमुष्टि इत्यपि गमितक्रियमसत्त्वरूपं केचित्। यथा—

रोषावेशादाभिमुख्येन कौचिन्नासग्राहं रंहसैवोपजातौ।
भित्वा हेती मल्लवन्मुष्टिघातैर्घ्नन्तौ बाहूबाहवि व्यासजेताम्॥

केचित्पुनरस्य वस्तुरूपत्वं ब्रुवते। यथा—

दण्डादण्डि न कुर्वन्ति न कचाकचि कोकिलाः। तथाऽपि जितमेवाभिर्वाग्भिरेव जगत्त्रयम्॥

इति। कुतः पुनरेतत् यदेकदा दण्ड्यादण्ड्यादयः सत्त्वरूपाः, अन्यदा त्वसत्त्वरूपा इति? 'तत्र तेनेदमिति सरूपे' (पा. २.२.२७) सूत्रस्य व्याख्यानभेदात्। तत्रास्य सूत्रस्यायमर्थः—द्वे समानाकृती शब्दरूपे अन्यपदार्थे समस्येते—तत्रेति तेनेति च। कः पुनरिहान्यपदार्थः? केचिदाहुः—इतिशब्दस्य प्रकारवाचित्वादित्थमिति; केचित्पुनः—इदमित्थमिति। तत्र पूर्वस्मिन् पक्षेऽसत्त्वरूपता, इतिशब्दस्यासत्त्ववाचित्वात्; उत्तरस्मिन् सत्त्वरूपता, इदमिति सर्वनाम्ना वस्तुरूपपरामर्शात्। कः पुनः इहेतिशब्दार्थः? योऽसौ तत्रेत्यधिकरणे तेनेति करणे वा इदमर्थानुयायिनी इतिकर्तव्यतारूपा क्रिया, तत्र गृहीत्वा तेन प्रहृत्य इत्यादिकः सर्वनामार्थौ यत्तदिति तदिति व्यपदेशार्हग्रहणप्रहरणादिकायाः क्रियायाः साध्यं युद्धादि। तदाह चन्द्रगोमी— 'तत्र गृहीत्वा तेन प्रहृत्य युद्धे सरूपं सुप्सुपैकार्थं भवति' इति। किमेतद्वक्तव्यम्? न वक्तव्यम्। कथमनुच्यमानं गम्यते? 'सरूप' इत्येकशेषापवादेन द्वयोरधिकरणयोः करणयोश्च तुल्यकालनिर्देशात्। न हि द्वयोस्तुल्यबलयोः प्रतियोगिनोर्व्यापारमन्तरेण द्वयोरधिकरणयोः करणयोर्वा तुल्यकालनिर्देशो भवति। तथाऽपि युद्धादिनियमो न लभ्यते। कः पुनराह—नियम इति? युद्धग्रहणादेरन्यत्रापि प्रयोगात्। हस्ते हस्ते च गृहीत्वा मित्राय पुत्रं समर्पयति हस्ताहस्ति, गालिभिश्च गालिभिश्च निर्भर्त्स्य प्रवृत्तः परिहासो गालीगालि इति॥

ननु च, अन्यपदार्थे बहुव्रीहिरित्युच्यमाने विस्पष्टपटुर्वेट्टुः, पुनरुत्स्यूतं वासः, परश्शताः शरदः, इति सामान्यसमासानाम्; स्वयंधौतौ पादौ, सामिभुक्तमन्नं, श्रेणीकृताः पत्तयः, इति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विशेषसमासानाम् ; विनिकृत्तप्ररूढो वृक्षः, कृष्णपिङ्गलो ग्रावा, ईषत्कडारोऽश्मेति विशेषणसमासानां ; अवकोकिलं वनं, पर्यध्ययनश्छात्रः, निष्कौशाम्बिः सार्थः इति प्रादिसमासानाम् ; शस्त्रीश्यामा देवदत्ता, अवतप्तेनकुलस्थितं तवैतत्, कूपमण्डूको माणवकः इत्युपमानसमासानाम् ; राजवल्लभा वल्लभी, वरप्रदेया कन्या, मासो जातोऽस्येति षष्ठीसमासानाम् ; कष्टश्रितो रिपुः, वृकभीतो न्यङ्कुः, शङ्कुलाखण्डः पोगंडः इति कारकसमासानाम् ; अश्राद्धभोजी ब्राह्मणः, पुमाननेकः पदार्थः इति नञ्समासानां च बहुव्रीहिसंज्ञा प्राप्नोति । नैवम् ; नैषामन्यपदार्थत्वं समासेन क्रियते, अपि तु गुणवचनत्वेन । यदसौ द्रव्यं श्रितो भवति गुणः, तस्य यल्लिङ्गं वचनमर्थो वा स तस्यापि भवति ; तद्यथा शुक्लं वस्त्रं, शुक्ला शाटी, शुक्लः कंबलः, शुक्लौ पटौ, शुक्लाः पटाः इति । कथं पुनः विस्पष्टपटुप्रभृतीनां सामान्यसमासता ? 'विस्पष्टादीनि गुणवचनेषु' (पा. ६.२.२४) इति ज्ञापकैः समासावगमे विशेषसमाससंज्ञाभावे, 'सह सुपा' (पा. २.१.४) इति समासाभ्युपगमे च 'प्राक्कडारात्समासः' (पा. २.१.३) इति समासस्य समाससंज्ञाश्रयणात् । कथं स्वयंधौतादीनां विशेषसमासता ? 'स्वयं क्तेन' 'सामि' (पा. २.१.२५, २७) इति स्वयंसामीतिशब्दयोर्वृत्तिवाक्यविशेषेऽपि स्वरैकपद्यार्थमेव समासारम्भात् । 'श्रेण्यादयः कृतादिभिः' (पा. २.१.५९) 'च्व्यर्थे' इति च वृत्तावर्थविशेषात् । कथं छिन्नप्ररूढादीनां विशेषणसमासता ? छिन्नश्चासौ प्ररूढश्चेत्यादिप्रकारेण विशेषणविशेष्यभावात् । ननु च, यदा छिन्नो न तदा प्ररूढः, यदा प्ररूढो न तदा छिन्नः; तत्कथमर्थयोः परस्परमसंमूर्छनायां समानाधिकरणलक्षणो विशेषणविशेष्यभावो भवति ? य एव छिन्नः स एवायं प्ररूढः इत्यनुसंधानात् । अथेह कथं कृष्णपिङ्गल इति ? यो ह्यस्य कृष्णो भागः न स पिङ्गलः, यस्तु पिङ्गलः स न कृष्ण इति । समुदायेषु वृत्ताः शब्दा अवयवेषु वर्तन्ते ; यथा—पूर्वे पञ्चालाः, उत्तराः कुरव इति । यदि वा, कृष्णावयवयोगात्स एव कृष्णः, पिङ्गलावयवयोगात्स एव पिङ्गल इत्युपपद्यते सामानाधिकरण्यम् । अथ, ईषदित्यनेन किं विशेष्यम् ? कडारगुणयुक्तः पदार्थः । कथं पुनरव्ययानामसत्त्ववचनत्वे सत्त्वभूतार्थविशेषणत्वं भवति ? क्रियाविशेषणत्वात् । का पुनरत्र क्रिया ? कडारेण गुणेन योगः । यदि वा अव्ययानां केषांचित् सत्त्वगन्धित्वेन शक्तियोगादिः सत्त्वधर्मो दृश्यते ; तद्यथा—दोषामन्यमहः, दिवामन्या रात्रिः । 'दिवाकराद्रक्षति यो गुहासु लीनं दिवा भीतमिवान्धकारम्' इति । 'ग्रहवति मित्रहारिणि न त्वं योषाऽसि दोषाऽसि' इति । एवमयमपि सत्त्वगन्धित्वेन गुणं विशिंषन् द्रव्यं विशेषयिष्यति । ननु, कडारं द्रव्यमेव कस्मान्न विशेषयति ? यथा—ईषत्तन्त्रं कातन्त्रं इति । तथा सति गुणस्येषद्भावो न लभ्यते ; तदुक्तम्— 'ईषद्गुणवचनेन' इति । अथ कथं प्रादीनां द्रव्यवचनैः समासः ? यत्र हि कश्चित् क्रियावाची शब्दः प्रयुज्यते, तत्रैव प्रादीनां प्रयोगो भवति । उच्यते, प्रयोगादेवैतद्गन्तव्यं—नूनमत्र प्रयोगार्हः शब्दो न प्रयुज्यते, येन प्रादेः सामर्थ्यमिति । तद्यथा—धूमं दृष्ट्वाऽग्निरत्रेति गम्यते ; त्रिविष्टब्धकं च दृष्ट्वा परिव्राजक इति । के पुनरत्र प्रयोगार्हाः शब्दाः ? ये कृदन्ताः कर्मकर्तृवाचिनः ;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तद्यथा—अवक्रुष्टं कोकिलया अवकोकिलं, परिग्लानोऽध्ययनाय पर्यध्ययनः, निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः इति । अथ कथं शस्त्रीश्यामादय उपपन्नसमासा उपपद्यन्ते ? 'उपमानानि सामान्यवचनैः' (पा. २.१.५५.) इत्यादिभिः । यद्येवम्, 'इवेन विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च' इति न वक्तव्यम्, वाससी इव, कन्ये इव, इत्यादिप्रयोगाणां 'उपमानानि सामान्यवचनैः' इत्यनेनैव सिद्धेः ; विभक्त्यलोपमात्रं पुनरलुक्प्रकरणे वक्तव्यं भवति । उच्यते—नायमिव शब्दः सामान्यवाची, अपि तु सामान्यद्योतकः, तद्यथा—नेत्रे नीलोत्पले इत्युक्ते तदाकारकान्त्यादयः प्रतीयन्ते । शस्त्रीश्यामेत्यादिषु साक्षात् सामान्यवचनः श्यामाशब्दः प्रयुज्यते । अथ, अवतप्तेनकुलस्थितामित्यत्र कथम् ? न ह्ययमुपमायां, अपि तु क्षेपे । उपमानेनात्र क्षेपो गम्यते—अवतप्ते नकुलस्येव स्थितं तवैतच्चापलमिति ; यथाऽवतप्ते नकुलश्चिरस्थाता न भवति, तद्वत् कार्यमारभ्य यश्चिरं तत्र नावतिष्ठते स एवमुच्यते—अवतप्ते नकुलस्थितं तवैतदिति । एतेन कूपमण्डूक इत्यपि व्याख्यातम्, यथा कूपमण्डूकः कूपाद्बहिरनिस्सरन् देशान्तरव्यवहारं न जानाति, तथाऽयं स्वगेहाद्बहिरनिःसरन् न देशान्तरव्यवहारवेदी ; स एवमुच्यते—कूपमण्डूकोऽयमिति । अथ राजवल्लभेत्यादयः कथं षष्ठीसमासाः ? यतो राजवल्लभेत्ययं बहुव्रीहिः कस्मान्न भवति—राजा वल्लभोऽस्याः इति ? अचेतनत्वेन वल्लभ्या वाल्लभ्यायोगात् । राज्ञस्तु वल्लभेति भवति । तत्र राजा निर्ज्ञातस्वार्थः, स्वभावतः सामान्यात् प्रच्युतः, सामान्ये व्यवस्थितस्योपकर्तुमशक्तेः ; संबन्धिसामान्यापेक्षः, संबन्धिविशेषापेक्षो वा, संबन्ध्यन्तरस्य व्यवच्छेदार्थं प्रवृत्तेः, उभयाधिष्ठानत्वे सत्यपि संबन्धस्य परार्थमुपादानादुद्भूतसंबन्धप्रवृत्तिः, उपजातप्रातिपदिकार्थव्यतिरेकः, आत्मनि संबन्धोपभोगात् प्रधानेऽप्युपयुज्यमानसंबन्धषष्ठ्यन्त उपादीयते । प्रधानानि चानिर्ज्ञातार्थानि प्रथमयैव विभक्त्या युज्यन्ते ; तद्यथा—'क पुनरिदं पठितम् ? भ्राजा नाम श्लोकाः' इति । ततश्च वल्लभाशब्दोऽनिर्ज्ञातार्थत्वादात्मव्यपदेशाय स्वार्थादप्रच्युतः स्वभावतो विशेषवृत्तिः, सत्यप्यर्थित्वे गुणानामेवोपलम्भात् ; परत इदंकारं लिप्समानो निर्ज्ञातार्थेन संबन्धिना स्वार्थविशेषे नियम्यमान उपरतौत्सुक्यः औदासीन्येन प्रवर्तते । तत्र भेदाधिष्ठानस्य संबन्धस्य वाचिका षष्ठी, पदान्तराभिधेये संबन्धिन्याकांक्षावता गुणपदेन विशेष्यमाणा गुणपदस्था श्रूयते, विशेषविषयत्वात्समासस्य । गुणाश्च स्वार्थोपसर्जनप्रधानार्थोपपादिनो भेदे विनिवर्तमाने भेदाधिष्ठानं संबन्धमभ्यन्तरीकृत्य प्रवर्तन्ते । तत्र राजवल्लभेति संबन्धे प्रातिपदिकार्थतामापाद्यमाने तद्विषया षष्ठी, स्वभावतो निवृत्ता कार्यार्थं सामान्येन प्रसक्ता 'सुपो धातुप्रातिपदिकयोः' (पा. २.४.७१) इति शास्त्राद्विनिवर्तमाने वाऽन्वाख्यायते । अथ वरप्रदेया कन्येति कोऽयं समासः ? षष्ठीतत्पुरुष एव ; यथा—देवदेयं पुष्पं, ब्राह्मणदेयं धनमिति । नन्वेवम्, एते चतुर्थीसमासाः कस्मान्न भवन्ति ? 'चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः' (पा. २.१.३६) इति तदर्थादिष्वेव तत्समाम्नानात् । तादर्थ्य एव हि तर्हि समासा भवन्तु ; यद्धि यस्मै प्रदीयते तदर्थमेव तद्भवति । नैवम् । न तादर्थ्यमात्रे चतुर्थी समस्यते । यथा—अवहननायोलूखलम् । अपि तु प्रकृतिविकारभावे । यथा—यूपरूपाया विकृतेः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रकृतिभूतं दारु यूपदार्विति । ननु च नात्र प्रकृतिविकारग्रहणमस्ति ; दृश्यते चाप्रकृतिविकारभावेऽपि, अश्वघासः, श्वश्रूसुरं, 'अथातो धर्मजिज्ञासा' इति चतुर्थीसमासः ; तत्कथमुच्यते प्रकृतिविकारतादर्थ्ये एव चतुर्थ्यास्सामर्थ्यमिति ? आचार्यप्रवृत्तिर्ज्ञापयति यदयं बलिरक्षितग्रहणं करोति—यथाजातीयकानां च समासे बलिरक्षितग्रहणमपुनरुक्तं भवति, तथाजातीयकानां समासः। विकृतीनामेव चतुर्थ्यन्तानां प्रकृतिभिस्सह समासे बलिरक्षितग्रहणमपुनरुक्तं भवति, न तादर्थ्यमात्रे। अश्वघासादयस्तु षष्ठीसमासा भविष्यन्ति । यद्धि यदर्थं भवति, अयमपि तत्राभिसंबन्धः—तस्येदमिति । तद्यथा—गुरोरिदं यद्गुर्वर्थमिति । तादर्थ्यमपि संबन्धविशेषः ; विशेषे चावश्यमेव सामान्यं संभवति । न चैतत्कर्मादिष्वपि न दृश्यते—माषाणामश्नीयात्, श्रुतं ते सर्वमेवैतत् इति। ननु च वरप्रदेया कन्येति यदि ददातिप्रयोगेऽपि न संप्रदानम्, संप्रदानेऽपि न चतुर्थी, कोऽन्यः तयोर्विशेषो भविष्यति ? कः पुनराह—नात्र संप्रदानम् ; संप्रदान एवैषा चतुर्थ्यर्थे षष्ठी ; दृश्यते हि संप्रदानादौ षष्ठीचतुर्थ्योरविशेषेण प्रयोगः ; तद्यथा— 'हिमवतो हस्ती' 'पुरुषमृगश्चन्द्रमसे' (तै. सं. ५.५.११, १५) 'न वा अरे जायायै कामाय जाया प्रिया भवत्यात्मनस्तु कामाय जाया प्रिया भवति' (बृ. २.४.५) चिराय दृष्टः, चिररात्राय दृष्टः, 'रोचते मम घृतं सह मुद्गैः शालयो दधिशरं क्रमुकाश्च' 'शृतमेव ममापि रोचते शृतशीतं च सशर्करं पयः' इति। अथ मासजातोऽयमिति किंप्रधानोऽयं समासः ? उत्तरपदार्थप्रधानः। सधर्मणाऽनेनान्यैरुत्तरपदार्थप्रधानैर्भवितव्यम्। अन्येषु चोत्तरपदार्थप्रधानेषु यैवासावन्तर्वर्तिनी विभक्तिस्तस्याः समासेऽपि श्रवणं भवति ; तद्यथा—राज्ञः पुरुषो राजपुरुषः इति । इह पुनर्वाक्ये षष्ठी, समासे प्रथमा । केनैतदेवं भवति ? योऽसौ मासजातयोरभिसंबन्धः स समासे निवर्तते, अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति, तत्र 'प्रातिपदिकार्थे प्रथमा' इति प्रथमा भवति। न तर्हीदानीमिदं भवति—मासजातस्येति। बाह्यं संबन्धिनमपेक्ष्य भविष्यति। ननु च 'कालाः परिमाणिना' (पा. २.२.५) इत्यनेनायं समासः। न च जातस्य मासः परिमाणं, अपि तु त्रिंशद्रात्रस्य ; यथा—द्रोणो बदराणां देवदत्तस्येति न देवदत्तस्य द्रोणः परिमाणं, अपि तु बदराणाम् ; तदाह— 'कालस्य येन समासस्तस्यापरिमाणित्वादनिर्देशः' इति । किं पुनर्भवान् कालं मन्यते ? येन मूर्तीनामुपचया अपचयाश्च लक्ष्यन्ते। तस्यैव तर्हि कयाचित् क्रियया युक्तस्याहरिति भवति, रात्रिरिति च। कया क्रियया ? आदित्यगत्या। तयैवाऽसकृदावृत्तया मास इति च भवति, संवत्सर इति च भवति। यद्येवं भवति जातस्य मासः परिमाणं, किं तु मासो जातस्येतिवत् मासौ जातस्य मासा जातस्येति प्राप्नोति । नैवं, मासजातः इत्युक्ते द्वित्वादिसंख्याविशेषस्यानुपलम्भात् । यत्र तूपलब्धेर्निमित्तमस्ति तत्र भवत्येव ; यथा—द्वौ मासौ जातस्य द्विमासजातः, एवं त्रिमासजातः इति । कथं पुनः कारकाणां समास इत्युपपन्नं भवति ? तेषां हि क्रिययैवाभिसंबन्धः ; न च क्रियावाचिनः सुबन्तत्वमस्ति। सुबन्तयोरेवान्तर्भूतक्रियाविशेषयोर्भविष्यतीति चेत्, नैवम् ; द्रव्याणां क्रियोपजनितस्संबन्धः शेषविषयो भवति, न

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कारकविषयः । स्वभावसिद्धं हि द्रव्यं सिद्धवदभिधीयमानं द्रव्यान्तरं प्रत्यात्मप्रतिलम्भे निराकांक्षं न कर्मादिभावं भजते । न च समासप्रकरणे कारकाणि समस्यन्ते इति वचनमस्ति । उच्यते—मा भूद्वचनम् ; अर्थतस्तु गम्यते ; यदाह—द्वितीया श्रितादिभिः समस्यते ; कष्टं श्रितः कष्टश्रितः इति। तत्र श्रित इत्युपात्तक्रियाविशेषपरिच्छिन्नः कर्ता, अभ्यन्तरीकृतसाध्यसाधनसंबन्धक्रियान्तरसंबन्धार्हः स्वाश्रयविषयासु बाह्यासु क्रियासु शक्त्यन्तरैरपि विरुद्धैकार्थसमवायः कष्टादीन्युपसर्जनीभूतया श्रयतिक्रिययाऽपेक्षते । ततश्च श्रयतिक्रियया संबन्धात् कष्टे कर्मत्वमिति श्रयणक्रियापूर्वकः कष्टश्रितयोरभिसंबन्धो भवति । तस्मिन् स्ववृत्त्यवयवार्थशक्त्यनुगृहीतेऽर्थान्तरे प्रादुर्भूते तदभिधायी शब्दस्समाससंज्ञां लभते। एवं वृकाद्भीतो वृकभीत इत्यत्रापि 'पञ्चमी भयेन' (पा. २.१.३७) इति वृकस्य भये 'भीत्रार्थानां भयहेतुः' (पा. १.४.२५) इत्यपादानत्वात् सति सामर्थ्ये, अभ्यन्तरीकृत-क्रियाकारकसंबन्धः समुदायः समाससंज्ञां लभते । ननु च, न वृकस्य भीतं प्रत्यपादानत्वं, अपि तु भयं भीतिरित्येतानि । उच्यते—यथा मासो जातस्येति मासाख्यः क्रियाकलापः प्रथमकुक्षिगर्भ-वियोगाख्यस्य जन्मनोऽवधिभावेन परिच्छेदको भवति, जन्मप्रतिलब्धां वा सत्तां समावृत्य जातमपेक्षते, तथेहापि वृकादित्ययमपादानशब्दो भयमात्रस्यैवावच्छेदको भविष्यति, न भीतस्य। यदि वा, यथा कष्टश्रित इत्यत्रोपात्तश्रयतिक्रियासंबन्धात् कष्टे कर्मत्वमिति श्रयणक्रियापूर्वकं कष्टेन संबध्यते, तथेहाप्युपात्तभयक्रियावच्छिन्नः कर्ता भयक्रियासंबन्धाद्वृकस्यापादानत्वमिति भयक्रियापूर्वकं वृकेन संभत्स्यत इति । भवतु यत्रोपसर्जनीभूताया अपि क्रियायाः श्रवणम् ; यत्र तु क्रिया न श्रूयते तत्र कथं शङ्कुलाखण्ड इति ? प्रतीयमाना भविष्यति ; तथा हि—शङ्कुलाखण्डः इत्युक्ते कृत इति प्रतीयते ; तदेतद्द्योतयन्नाह—'तृतीया तत्कृतेन गुणवचनेन' इति । न्यायसिद्ध-त्वाद्वचनानर्थक्यमिति चेत्, न; वचनस्य नियमार्थत्वात्—यत्रैव कृत इत्यादि गम्यते तत्रैव समासः, अन्यत्र मा भूदिति । एवं च गम्यमानकरोतिक्रियोपगृहीतकरणकर्तृतृतीयान्तेन शङ्कुलादिना खण्डा-दीनां गुणमुक्तवतां मतुब्लोपादिना द्रव्यवचनानां तृतीयान्तार्थकृतत्वे सति सामर्थ्यमवसीयते ; न तूक्तवैपरीत्ये ; यथा—अक्ष्णा काणः, पादेन खञ्जः इति । तदेवमाक्षिप्तकरोतिक्रियावच्छिन्नः क्रियान्तरसंबन्धार्हः खण्डशब्दार्थो गम्यमानोपसर्जनीभूतया करोतिक्रियया शङ्कुलादीनपेक्षमाणः करणभूतैः कर्तृभूतैर्वा शङ्कुलादिभिस्संबध्यते । तद्वचनश्च समुदायोऽभ्यन्तरीभूतक्रियाकारकसंबन्धः समाससंज्ञो भवति । अथेह कस्मान्न भवति—दध्ना पटुः घृतेन पटुरिति ? असामर्थ्यात् । कथम-सामर्थ्यम् ? सापेक्षमसमर्थं भवति ; न हि दध्नः पटुना सामर्थ्यम् । किं तर्हि ? भुजिना—दध्ना भुङ्क्ते पटुरिति । इहापि तर्हि न प्राप्नोति—शङ्कुलया खण्ड इति ; अत्रापि न शङ्कुलायाः खण्डेन सामर्थ्यम् ? किं तर्हि ? करोतिना—शङ्कुलया कृतः खण्ड इति । तत्कृतेनेति वचनाद्भविष्यति । वचनादिति चेत्, अथेह गुणवचनेनेत्युच्यमाने कथं मतुब्लोपाद्द्रव्यवचनेन खण्डादिनेति प्रतीयते ? वचनग्रहणात् ; इह तृतीया तत्कृतेन गुणेनेति सिद्धे यद्वचनग्रहणं करोति तस्यैतत् प्रयोजनम्,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

एवं यथा विज्ञायेत—गुणमुक्तवान् गुणवचनः, खण्डगुणवान् खण्डः, पाण्डुगुणवान् पाण्डुः इति । यद्येवं, नार्थस्तत्कृतग्रहणेन भवति ; भवति हि शष्कुलायाः खण्डेन सामर्थ्यम् ; असामर्थ्यादिह न भविष्यति—दध्ना पटुरिति । इदं तर्हि तत्कृतस्य प्रयोजनं—द्रव्यवचनैः कारकसमासे तदनुरूपा क्रिया अध्याहर्तव्येति ; तद्यथा—अक्षेषु प्रसक्तः शौण्डः अक्षशौण्ड इति । अथ द्रव्यवचनैस्तत्कृत-समासे गुणवचनेनेत्यपि किमर्थम् ? इह मा भूत्—धान्येन धनवान्, गोभिर्वपावान् इति ॥

अथ, अश्राद्धभोजीति कोऽयं समासः ? असमर्थनञ्तत्पुरुषः । किं पुनरिहासामर्थ्यम् ? पूर्वोत्तरपदयोर्मिथोऽनपेक्षा ; तथा हि—अश्राद्धभोजीति भुजिक्रियया नञः संबन्धः, न श्राद्धेन ; न हि तस्यायं नियमः—नश्राद्धं भोक्तव्यमिति । अपि तु—श्राद्धं न भोक्तव्यमिति । यत्र हि वर्तिपदार्थ-समवायिनी क्रियाऽभिधीयमाना प्रतीयमाना वा स्वभावतो निवृत्ता नञा द्योत्यते—अपाचकः, अब्राह्मणः इति, तत्रैव सामर्थ्यम् । यत्र तु बाह्यक्रियया नञः संबन्धस्तत्रासामर्थ्यमेव ; यथा—सूर्यमपि न पश्यन्ति असूर्यपश्या राजदाराः, न पुनर्गीयन्ते अपुनर्गेयाः श्लोकाः, लवणं न भुङ्क्ते अलवणभोजी भिक्षुरिति । नन्वेवं, अवयवार्थव्यतिरिक्तसमुदायार्थाभावेऽर्थवत्त्वाभावात् कथं प्रातिपदिकसंज्ञा ? समासग्रहणादिति चेत्, अनर्थके कृतार्थत्वान्नियमानुपपत्तिः ; ततश्चार्थवतो वाक्यस्यापि प्रातिपदिकत्वप्रसङ्गः । ननु च, 'असूर्यललाटयोर्दृशितपोः' (पा. ३.२.३६) इत्यनेना-समर्थनञ्समासानां साधुत्वे ज्ञापिते, अ किंचित्कुर्वाणः, अ माषं हरमाणः, अ गाधादुत्सृष्टः इत्यादीनामपि मा भूत् समास इत्यसूर्यपश्यादयश्चत्वार एवासमर्थसमासाः परिगण्यन्ते ; परिगणन-सामर्थ्यादेव प्रातिपदिकसंज्ञाऽपि भविष्यति ; तथाऽप्यनर्थकत्वादाश्रयाभावे संख्याकर्माद्यभावे तेषां वाचिका द्योतिका वाऽपि विभक्तयो नोत्पद्येरन् । नैवम् ; समुदायस्तावदानर्थक्येऽपि 'न केवला प्रकृतिः प्रयोक्तव्या' इति नियमादवश्यमेवाव्ययादिवद्विभक्तिमात्रमपेक्षते ; अवयवस्त्वर्थ-वत्त्वात् संख्याकर्मादेराश्रयत्वेन तां विशिष्टामेवाङ्गीकरोति ; ततश्च यथाऽऽतुरानातुरयोरेकभोजन-प्रतिपत्तावातुराणां भोजनमनातुरोऽपि प्रतिपद्यते, तथाऽवयवार्थानुग्रहार्थकोऽपि समुदायो विभक्तिविशेषमेव प्रतिपत्स्यत इति न कश्चिद्दोषः । ननु, असत्येकार्थीभावे व्यपेक्षाधर्माः कथं न निवर्तन्ते ? के पुनस्ते ? विशेषणयोगः, समुच्चयः, संख्याविशेष इति । तत्र ब्राह्मणस्य शोभनं, श्राद्धं न भुङ्क्ते इति विशेषणयोगः, श्राद्धं न भुङ्क्ते बलिमामन्त्रणं चेति समुच्चयः, श्राद्धं श्राद्धानि वा भुङ्क्ते इति संख्याविशेषयोगः । ते च वाक्य एवोपलभ्यन्ते, न त्वश्राद्धभोजीति वृत्तौ ; नह्यश्राद्धभोजी ब्राह्मणस्य शोभनमित्यादि । तत्कथमुच्यते—नास्त्यत्रैकार्थीभाव इति ? नैवम् ; अश्राद्धशब्दो ह्यत्रा-समर्थः, न त्वश्राद्धभोजिशब्दः ; अश्राद्धभोजिविषयाश्चैते विशेषणायोगादयः प्रतीयन्ते, नाश्राद्ध-विषया इति । ननु च, यद्यश्राद्धशब्दः समुदायार्थाभावादनर्थकः, अश्राद्धभोजिशब्दोऽप्यर्थवदनर्थक-संघातत्वादनर्थकः प्राप्नोति । अस्त्वानर्थक्यम् । वाक्यविषयास्तु धर्मा भविष्यन्ति तच्चानर्थक्यमपि परिहर्तव्यम् ; इदं च परिह्रियते—शब्दशक्तिरेषा यदभिन्नेऽप्यर्थे केनचिच्छब्देनाभिधीयमाने

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विशेषणादियोगो भवति केनचिन्न भवति, तत्र वाक्येऽसमर्थसमासपदानामविद्यमानमपि वृत्तौ शब्दान्तरत्वादस्त्येकार्थाभिधायित्वमिति । ननु च, यद्यसामर्थ्येऽपि वचनात्समासः—किमद्य ते वस्त्रं नीलं उत्पलमालि कर्णे ; नेह कश्चित्पुरुषः व्याघ्रस्सरति पल्लीम् ; पश्य सखि कष्टं श्रितः प्रियो मे गुरुकुलम् ; किं ते शङ्कुलया खण्डो देवदत्त उपलेन ; गच्छ त्वं यूपाय दारु शोभनं शैले ; निवर्तस्व वृकात् भयं देवदत्तस्य यज्ञदत्तात् ; भार्या राज्ञः पुरुषो देवदत्तस्य ; सक्तः त्वमक्षेषु शौण्डः पिबति पानागारे इत्यादावपि समासः प्राप्नोति ; स तर्ह्यत्रापि वचनात् 'विशेषणं विशेष्येण', 'द्वितीया श्रितादिभिः', 'तृतीया तत्कृतेन', चतुर्थी तदर्थेन', 'पञ्चमी भयेन' 'षष्ठी सुबन्तेन', 'सप्तमी शौण्डादिभिः' समस्यत इति । विषम उपन्यासः ; परिगणनादीन्यसामर्थ्य एव समासार्थमारभ्यन्ते। यथा—कृतपूर्वी कटमित्याद्यर्थे 'पूर्वादिनिः' 'सपूर्वाच्च' (पा. ५.२.८६, ८७) इति । 'विशेषणं विशेष्येण' इत्येवमादीनि तु 'समर्थः पदविधिः' (पा. २.१.१.) इति सामर्थ्ये सत्युपादीयन्ते। सामर्थ्यविषयप्रदर्शनार्थमेव च 'विशेषणं विशेष्येण' इति प्रथमायां सामानाधिकरण्यम् , द्वितीयायां श्रितादिनियमः, तृतीयायां तत्कृतादिवचनं, चतुर्थ्यां प्रकृतिविकारभावः, पञ्चम्यां भयादिपरिगणनं, षष्ठ्यां पूरणादिनिषेधः, सप्तम्यां शौण्डादिनिर्देशः इत्युपपद्यते । तेन यत्र विशेषणादिषु सामानाधिकरण्यादेरभावः, तत्रासामर्थ्यात् समासो न भवति ॥

अब्राह्मणोऽयमिति कोऽयं समासः ? समर्थनञ्तत्पुरुषः । किंप्रधानोऽयम् ? उत्तरपदार्थप्रधानः । अब्राह्मणमानयेत्युक्ते ब्राह्मणमात्रस्यानयनं प्राप्नोति । नैष दोषः ; इदं तावदयं प्रष्टव्यः—अथेह राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं कस्मान्न भवति ? राजाऽत्र विशेषकः प्रयुज्यते, तेन राजविशिष्टस्यानयनं भविष्यति । इहापि नञ् विशेषकः प्रयुज्यते, तेन नञ् विशिष्टस्यानयनं भविष्यति । कः पुनरसौ ? निवृत्तपदार्थकः । यदा पुनरस्य पदार्थो निवर्तते, तदा किं स्वाभाविकी निवृत्तिः ? आहोस्विद्वाचनिकी ? किं चातः ? यदि स्वाभाविकी, किं नञ् प्रयुज्यमानः करोति। तर्हि वाचनिकी भविष्यति ; किंच प्रतिकीलवत् । तत्र यथा कील आहन्यमानः प्रतिकीलं निवर्तयति, एवं नञ् प्रयुज्यमानः पदार्थं निवर्तयति । यद्येतन्नञो माहात्म्यं स्यात् , न जातुचिद्राजानो हस्त्यश्वं बिभृयुः, नेत्येव ब्रूयुः । एवं तर्हि स्वाभाविकी निवृत्तिः, नञ्निमित्ता तूपलब्धिः । तद्यथा — संतमसान्धकारे द्रव्याणां प्रदीपनिमित्तं दर्शनं, न च तेषां प्रदीपो निवर्तको भवति । यदि पुनरयं निवृत्तपदार्थको नञ् , किमर्थं ब्राह्मणशब्दः प्रयुज्यते ? एवं यथा विज्ञायेत—अस्य पदस्यार्थो निवृत्त इति । नेति ह्युक्ते संदेहः स्यात्—कस्य पदार्थो निवर्तत इति ; तत्रासंदेहार्थं ब्राह्मणशब्दः प्रयुज्यते । यदि वा, सर्वे एते शब्दा अवयवेष्वपि वर्तन्ते—ब्राह्मणः, क्षत्रियः, वैश्यः, शूद्र इति ॥

'तपः श्रुतं च योनिश्च तत्र ब्राह्मणकारणम् ।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः ॥'

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तथा गौरः कपिलः पिङ्गलकेश इत्येतानप्यान्तरान् ब्राह्मण्ये गुणान् ब्रुवति । समुदायेषु च वृत्ताः शब्दा अवयवेष्वपि वर्तन्ते ; तद्यथा—पूर्वे पञ्चालाः, उत्तराः कुरव इति । एवमयं समुदाये ब्राह्मणशब्दो वृत्तोऽवयवेऽपि वर्तते गुणे जातौ च । गुणे तावत्—अब्राह्मणोऽयं यस्तिष्ठन् मूत्रयतीति, अब्राह्मणोऽयं गच्छन् भक्षयतीति । अपि च, कालं कल्माषं माषराशिवर्णमापण आसीनं दृष्ट्वाऽध्यवस्यति—नायं ब्राह्मणः ; अब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति ; गुणकृता चार्थस्य निवृत्तिः । अथ जातौ—जातिहीने संदेहाद्दुरुपदेशाद्वाऽन्यो ब्राह्मणशब्दः प्रवर्तते । संदेहात्तावत्—गौरमयं शुच्याचारं पिङ्गलं कपिलकेशं दृष्ट्वाऽध्यवस्यति—ब्राह्मणोऽयमिति ; ततः पश्चादुपलभते—नायं ब्राह्मणः ; अब्राह्मणोऽयमिति निर्ज्ञातं तस्य भवति । अत्र संदेहाच्च ब्राह्मणशब्दो वर्तते ; जातिकृता चार्थस्य निवृत्तिः । अथ दुरुपदेशात्—दुरुपदिष्टमस्य भवति—अमुष्मिन्नवकाशे ब्राह्मणमानयेति । स तत्र गत्वा यं पश्यति तमध्यवस्यति—ब्राह्मणोऽयमिति । ततः पश्चादुपलभते—नायं ब्राह्मणः, अब्राह्मणोऽयमिति । तत्र दुरुपदेशाच्च ब्राह्मणशब्दो वर्तते ; जातिकृता चार्थस्य निवृत्तिः । ननु च, नञ्व्यवच्छेदाय ब्राह्मणादिशब्दप्रयोगे समासस्य पूर्वपदप्रधानता प्राप्नोति ; नैवम्, अव्ययसंज्ञाप्रसङ्गात् ; अव्ययं ह्यस्य पूर्वपदम् । नैष दोषः ; पाठेनाव्ययसंज्ञा क्रियते । न च नञ्समासस्तत्र पठ्यते । मा भूदव्ययेषु पाठः । तथाऽप्यभिधेयवल्लिङ्गवचनानि भवन्ति ; यश्चेहार्थोऽभिधीयते न तस्य लिङ्गसङ्ख्याभ्यां योगोऽस्ति । नेदं वाचनिकम्—अलिङ्गता, असङ्ख्यता वा । किं तर्हि ? स्वाभाविकमेतत् । तत्र किमस्माभिश्शक्यं वक्तुं-यन्नञः प्राक् समासाल्लिङ्गसङ्ख्याभ्यां योगो नास्ति, समासे च भवति । यदि वा, गुणवचनानामाश्रयतो लिङ्गवचनानि भवन्ति । यदसौ द्रव्यं श्रितो भवति गुणः समासो वा, तस्य यल्लिङ्गं वचनं च तत् गुणस्येव समासस्यापि भवति । उच्यते ; इह त्रयी गतिः—कदाचिन्नञर्थेनोत्तरपदार्थो विशेष्यते, कदाचिन्नञर्थ उत्तरपदार्थेन, कदाचिन्नञर्थोत्तरपदार्थाभ्यामन्यः पदार्थ इति । तत्र यदा नञर्थोत्तरपदार्थाभ्यामन्यपदार्थो विशेष्यते तदा 'समानाधिकरणानां बहुव्रीहिः' । नञर्थश्च विशेष्यो भवतीति षट् समासार्थभेदा जायन्ते—अत्यन्ताभावः, अनत्यन्ताभावः, अन्यतराभावः, तादात्म्याभावः, संबन्धाभावः, प्रध्वंसाभावश्चेति । यथा—अरूपो वायुः, अनुदरा कन्या, अकिंचनः पुमान्, अपिशाचः कुड्यः, अघटं भूतलं, अनङ्गः कामः, इति । यदा तूत्तरपदार्थेन नञर्थो विशेष्यते, तदा पूर्वपदार्थप्रधानस्तत्पुरुषः ; नञर्थोपाधेश्च षट् समासार्थभेदा जायन्ते—प्रागभावः, सामर्थ्याभावः, आवश्यकताभावः, इतरेतराभावः, सत्ताभावः, भावाभावः, इति ; यथा—अनुत्पन्नो घटः, अप्रधृष्यस्सुभटः, अभूषितः कान्तः, अवर्षा हेमन्तः, असत् शशविषाणम्, अनुद्भिन्नः प्रवालः, इति । यदा तु नञर्थेनोत्तरपदार्थो विशेष्यते, तदा उत्तरपदार्थप्रधानस्तत्पुरुषः । पदार्थस्य च नञर्थोपाधेः षट् समासभेदा जायन्ते । यथा—तदभावः, तदन्यः, तत्सदृशः, तद्विरुद्धः, तदपकृष्टः, तदुत्कृष्टः, इति । यथा—अनन्यः, अनात्रिः, अब्राह्मणः, असितः, अमनुष्यः, अमानुषः, इति । ननु च, अन्यपदार्थतत्पुरुषयोरन्यत्रापि

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नञ्समासो दृश्यते ; यथा—मक्षिकाणामभावः अमक्षिकमिति । नायं नञ्समासः ; किं तर्हि ? 'अव्ययं विभक्ति' इत्यादिनाऽव्ययमभावार्थे समस्यते ; अव्ययीभावश्च समासो भवति ; यथा—निवातं, निशीतं, इति । किं पुनरमी नञ्समासार्था अन्यपदार्थादिषु व्यवतिष्ठन्ते उत संप्लवन्ते ? केचिद्व्यवतिष्ठन्ते प्रध्वंसाभावादयः ; तद्यथा—

भवेदभीष्ममद्रोणं धृतराष्ट्रबलं कथम् । यदि तत्तुल्यकक्ष्योऽत्र भवान् धुर्यो न युज्यते ॥

यथा च–अनुदरा कन्या, अलोमिका एडकेति । केचित्तु संप्लवन्ते प्रागभावादयः ; तद्यथा-

अजन्मा पुरुषस्तावदपुमान् पशुरेव वा । यावल्लीलावतीवक्त्रवीक्षितार्थं न बुध्यते ॥

यथा च—अनेके, अनेकः इति । ननु च, एकशब्दो बह्वर्थः ; तद्यथा—'एकः कोऽपि स कुम्भसंभवमुनिः' इत्युत्कर्षार्थः ; तत्रैके तावदाहुरिति पक्षान्तरार्थः ; एक एवायमावयोः स्वभावः इति तुल्यार्थः । नैकः शयीतेत्यसहायार्थः । एकमेवेदं शब्दब्रह्मेत्यभेदार्थः । एकः, द्वौ, बहव इति संख्यार्थः । तत्कस्येह ग्रहणम् ? संख्यार्थस्य । उत्कर्षादीनां कस्मान्न भवति ? अनभिधानात् ; तद्यथा—अमित्र इत्युक्ते पूर्वपदार्थप्रधानतत्पुरुषे शत्रुरेव प्रतीयते, न त्वसूर्यः । एवं अनेके इत्युक्ते बहव एव प्रतीयन्ते, न पुनरनुत्कर्षादिमन्तः । एतेन तत्पुरुषस्योत्तरपदप्राधान्ये सत्यनेक इत्यपि व्याख्यातम् । कथं पुनरेकस्य प्रतिषेधे बहूनां संप्रत्ययः स्यात् ? प्रसज्यायं क्रियागुणौ ततः पश्चान्निवृत्तिं करोति ; तद्यथा—आसय भोजय शायय अनेकं इति । स्यादेतत्, यत्र क्रियागुणौ प्रसज्येते ; यत्र तु खलु न प्रसज्येते तत्र तु कथम्—अनेकास्तिष्ठतीति ? भवत्येवंजातीयकेष्वपि एकस्य प्रतिषेधे बहूनां संप्रत्ययः ; तद्यथा—न न एकं प्रियम् , न न एकं सुखम् इति ॥

प्रकृतिप्रत्ययौ त्रेधा त्रिधोपस्कारभक्तयः । त्रिधैवोपपदप्रातिपदिकानां विभक्तयः ॥

त्रिधोपसर्जनं त्रेधा समास इति कीर्तितः । प्रतिपादकशब्दोऽयमथान्वाख्येय उच्यते ॥

पदमिह त्रिविधं प्रतिपाद्यते त्रिविधमेव हि वाक्यमथ त्रिधा ।
व्यवहृतिः खलु शब्दनिबन्धना यदनयोरुभयोः प्रतितिष्ठति ॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे प्रातिपदिकादिप्रकाशो नाम द्वितीयः प्रकाशः ॥



CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

# तृतीयः प्रकृत्यादिशब्दप्रकाशः



तत्र पद्यतेऽनेनार्थ इति पदम्। तत्त्रिधा—क्रियारूपं, कारकरूपं, उपस्काररूपं च। तेषु साध्यार्थाभिधायि क्रियारूपं, साधनार्थाभिधायि कारकरूपं, साध्यसाधनयोर्भूषणादिभूतमुपस्काररूपम्। तेषां प्रत्येकं षड्भेदत्वात्पदस्याष्टादश भेदा भवन्ति। तेषु भावपदं, कर्तृपदं, कर्मपदं, भावकर्मपदं, भावकर्तृपदं, कर्मकर्तृपदं चेति क्रियारूपपदभेदाः। तेषु भावपदं यथा—पच्यते, अपाचि, पक्ष्यते देवदत्तेन. आस्यते, आसि, आसिष्यते भवता. भिद्यते, अभेदि, भेत्स्यते कुसूलेन, श्रायते, अश्रायि, श्रायिष्यते यवाग्वा. एवं श्रायिषीष्ट, शश्रे, आश्रायिष्यतौदनेन। घानिषीष्ट, जघ्ने, अघानिष्यत हस्तिना. ग्राहिषीष्ट, जगृहे, अग्राहिष्यत ग्राहेण. दर्शिषीष्ट, ददृशे, अदर्शिष्यत प्रेयसेति। कर्मपदं यथा—पच्यते ओदनस्सूदेन, आस्यते मासो भृतकेन, गम्यते ग्रामः पान्थेन, सुप्यते क्रोशशिशुना, अकारि कटः कुशलेन, अरोधि गौर्गोपालकेन, अदोहि धेनुर्वल्लवेन, अतारि पृथिवी राज्ञा, अन्ववात्स कितवः कर्मणा, अनुबभूवे कम्बलः करेण, पक्ष्यते यवागूर्भिषजा, अलाप्सिष्ट भिक्षा तापसेन। एवं करिष्यते कारिता कारिषीष्ट कटः, घानिष्यते घानिता अघानिषीष्ट शत्रुः, ग्राहिष्यते ग्राहिता ग्राहिषीष्ट ग्रन्थः, दर्शिष्यते दर्शिता दर्शिषीष्ट प्रेयानिति। कर्तृपदं यथा—पचति चैत्रः, आस्ते मैत्रः, तपति सुवर्णं सुवर्णकारः, तप्यते तपस्तापसः, सृजति मालां मालिकः, सृजते धर्मं धार्मिकः, उदसर्जि स्वं वदान्यः, उदपादि सत्यं भूपः, पारिपारयन्ते वृक्षं कर्णकाः, शोषयते व्रीहीनातपः, संयुज्यते गृहमेधी भार्यया, पच्यते सलोहितं फलमुदुम्बरः, तथा अदीपि अदीपिष्ट वह्निः, अजनि अजनिष्ट धूमः, अबोधि अबुद्ध प्रसुप्तः, अपूरिष्ट कामः, अतायि अतायिष्ट धर्मः, आप्यायि आप्यायिष्ट लोकः, इति। भावकर्मपदं यथा—इच्छामि भुञ्जीत भवान्, इच्छामि भुक्तं भवान्, कामये यत् स भुञ्जीत, प्रार्थये यदि स भुञ्जीत, संभावयामि भुञ्जीत भवान्, समर्थयामि भोक्ष्यते भवान्, श्रद्दधे नाभुक्त भवान्, अवकल्पयामि नाभोक्ष्यते भवान्, न श्रद्दधे ननु भवान् वृषलं याजयेत्, नावकल्पयामि तत्रभवान् वृषलं याजयिष्यति, न मर्षयामि तत्रभवान् वृषलमयाजिष्यत्, विगर्हे अपि तत्रभवान् वृषलं याजयति, स्मरसि देवदत्त काश्मीरेषु वत्स्याम, अभिजानासि कलिङ्गेषु यदवसाम, अभिजानासि कलिङ्गेषु शश्वदवसाम, स्मरसि काश्मीरेषु वत्स्यामस्तत्रौदनं भोक्ष्यामहे, अभिजानासि कलिङ्गेष्ववसाम तत्रौदनमभुञ्ज्महि, स्मरसि यत् काश्मीरेषु वत्स्याम यत्तत्रौदनं भोक्ष्यामहे, अभिजानासि यत्कलिङ्गेष्ववसाम यत्तत्रौदनमभुञ्ज्महि, एहि मन्ये रथेन यास्यसि जाने सुप्तो विहायसा गच्छामि, पश्य मृगो धावति, इह पश्यामः, कर्मणि द्विवचनबहुवचनान्युदाह्रियन्ते इति। भावकर्तृपदं यथा—चोरस्य रुजति, चोरस्यामयति, चोरस्य बाधते, चोरस्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

पीडयति, चोरस्य दहति, चोरस्यातङ्कयति, चोरस्य स्पृशति, चोरस्य शोषयति, चोरस्य मर्दयति, चोरस्य मोटयति, चोरं ज्वरयति, चोरं संतापयति । तथा—भरति पचति पक्ष्यति, भरत्यपाक्षीत्, भवेदपि भवेत्, स्यात् अपि स्यात्, नास्ति रमे, अयूयुजस्त्वमसि, असि त्वमीशिषे, अस्ति गच्छामो वयम्, अस्त्यत्र कांचिद्वां पश्यति, असि भवतु गम्यते, भवतु साधयाम इति । कर्मकर्तृपदं यथा—रज्यति वस्त्रं स्वयमेव, कुक्ष्यति पादस्स्वयमेव, अवकिरते हस्ती, अवाकीर्ष्ट वा स्वयमेव, ग्रथ्नीते माला, अग्रथिष्ट वा स्वयमेव, चिकीर्षते कटः, अचिकीर्षत वा स्वयमेव, उच्छ्रयते दण्डः, उदशिश्रयत वा स्वयमेव, ब्रूते तथा अवोचत वा स्वयमेव, प्रस्नुते गौः प्रास्नोष्ट वा स्वयमेव, आहते गौः अवधिष्ट वा स्वयमेव, अनुरुद्ध गौस्स्वयमेव, अकृतकटः स्वयमेवेति ।

अन्ये पुनरमीषामपि कर्मकर्तृत्वं मन्यन्ते । भिद्यते कुसूलं स्वयमेव, भिद्यते रज्जुस्स्वयमेव, लूयते केदारस्स्वयमेव, पच्यते फलं स्वयमेव, भज्यते काष्ठं स्वयमेव, कुक्ष्यते पादस्स्वयमेव, अदोहि गौस्स्वयमेव, अरोधि गौस्स्वयमेव, अहावि हविस्स्वयमेव । तथा, भूषयते कन्या स्वयमेव, मण्डयते कन्या स्वयमेव, दोहयते गौस्स्वयमेव, आरोहयते हस्ती स्वयमेव, दधयते राजा स्वयमेव, अभिवादयते गुरुः स्वयमेव, लावयते केदारः स्वयमेव, पाचयते ओदनस्स्वयमेव, भेदयते कुसूलः स्वयमेव, गणयति गणः स्वयमेव, स्मरयति वनगुल्मः स्वयमेव, इति ।

आहुश्च 'कर्मवत् कर्मणा तुल्यक्रियः' (पा. ३.१.८७), कर्मवद्भावे यगात्मनेपदचिण् भावाः प्रयोजनं अचः कर्मकर्तरि चिण्वदाहुश्च 'नरुधः' (पा. ३.१.६४), 'नदुहस्नु नमां यक् चिणौ' (पा. ३.१.८९) 'यक् चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रुञामुपसंख्यानम्' (वा. १८८१) 'भूषाकर्म-किरादीति णिश्रन्थिग्रन्थिब्रूआत्मनेपदाकर्मकाणामुपसंख्यानम्' (वा. १८८२) । तत्तु सम्यक् तथा हि—भिद्यते कुसूलः स्वयमेव, अकारि कटः स्वयमेवेत्यादिषु कर्मण्येव यक् चिणौ स्वयं शब्दात्तु कर्मकर्तृकत्वप्रतीतिः, अरोधि गौः स्वयमेवेति । रुधेरपि कर्मविवक्षायां चिण् भवत्येव, अरोधि गौर्गोपालकेनेति । यदा तु गोरात्मनेपद एव कर्मकर्तृत्वं तदा अरोधि गौरात्मनैवेति भवति । य एवार्थ आत्मनैवेति स एव स्वयमेवेति । अरोधीति चोक्ते नाश्रुते कर्तृवाचिनि पदान्तरे कर्मकर्तृत्वं गम्यते । तस्मादिहापि कर्मण्येव णिच् । भूषयते कन्या स्वयमेवेत्यादिषु तु 'णेरणौ यत्कर्मणौ चेत् स कर्ता नाध्याने' (पा. १.३.६७) इति फलवति कर्तर्येवात्मनेपदम् । कुतस्त्या तर्ह्येतेषु कर्मकर्तृताप्रसिद्धिः । श्रूयतां कर्मपदेषु तावत्,

क्रियमाणं तु यत्कर्म स्वयमेव प्रसिध्यति ।
सुकरं स्वैर्गुणैः कर्तुः कर्मकर्तेति तं विदुः ॥

कर्तृपदेषु भूतपूर्वकत्वात् तद्वदुपचार इति । तथाहि, कन्यादयो लावण्यातिशयादिभिः आत्मभूषायै प्रसाधनादीन् प्रयुञ्जते न । मायादयो महाकवयः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

"अकुञ्चितप्रेमनिरूपितक्रमं करेणुरारोहयते निषादिनम् ।
ससंततं दर्शयते गतस्मयः कृताधिपत्यामिव साधुबन्धुताम् ॥"

इति फलमनयोः सुखासिकालोकरञ्जनं च । अन्यथैको हास्तिपकैः पीड्येत, द्वितीयो दुर्दर्श इति नाभिगम्येत अचेतनेष्वपि, क्रियाफलविवक्षायां तु दृश्यते—परिवारयन्ते वृक्षं कण्टकाः, शोषयते व्रीहीनातप इति । एतेन करणेन तुल्यक्रियः कर्ता कर्मवद्भवतीत्यपि न वक्तव्यं भवति । परिवारयन्ति कण्टकैर्वृक्षं मनुष्याः, परिवारयन्ते कण्टकाः स्वयमेवेति । तथा दुहिपच्योः सकर्मकयोः कर्ता बहुलं कर्मवद्भवतीति न वक्तव्यम् । दुग्धे गौः पयः स्वयमेव ; पयो मुञ्चतीति गम्यते । तस्मादुदुम्बरस्सलोहितं फलं पच्यते इति कर्मतैव क्रियाविशेषणविवक्षिता । उदुम्बर-शब्दोऽत्र फलवृत्तिः, उदुम्बरं तत् कालेन पच्यते सलोहितगुणं यथा भवति लोहितेन पाकेन संबध्यते इति यावत् ; कर्तृत्वविवक्षायां च पचत्यात्मानमिति । तथा युजेः ज्यत् कर्तरि च वक्तव्यम् । मासं युज्यते ब्रह्मचारीति । कर्तृत्वविवक्षायां दैवादिकत्वम् न सेत्स्यति । कर्मण्यविव-क्षायां तु कर्मत्वं, यथा कर्तृत्वं तु स्वयं शब्देन गम्यते । इत्यलमतिप्रसङ्गेन ।

कृदन्तमपि खलु क्रियारूपं विद्यते तत्र भावो यथा—इह तैः यातं, आसितं, इह तैर्भुक्तं, इह तैः पीतं, कृतं भवता, प्रसुप्तं भवता, सुकृतं भवता, सुसिक्तं भवता, भूतं भवता, भविष्यमाणं भवता, ह्वयमानं भवता, भवितव्यं भवता, भवनीयं भवता, भव्यं भवता, अवश्यं भाव्यं भवता, आदर्शितं भवं भवता, ईषदाढ्यं दुराढ्यं स्वाढ्यं भवं भवता, ईषदुत्थानं भवता, सुस्नावं भवता इति । कर्म यथा—प्रकृतः कटो भवता, कृतः क्रियमाणः करिष्यमाणो भवता, खलु कटः कर्तव्यः, कृत्यः करणीयः कार्यः ईषत्कार्यः ईषत्करः क्रियार्थो भवता, ईषदाढ्यंकरः स्वाढ्यंकरः ईषत्पानस्सोमो भवता, सुपानः दुष्पानः दुश्शासनोऽरिभिर्भवान्, सुयोधनः दुर्योधनः दुर्मर्षणः दुर्धर्षणः ईषल्लभ्यो जनैर्भवान्, सुलभः दुर्दर्श इति । कर्ता यथा—कृतवान् कटं, उपेयिवान् ग्रामं, विद्वान् व्याकरणं, अधीयन् पारायणं, धारयन्नुपनिषदं, द्विषन्नितिहासं, कुर्वन् कटं, कटं कुर्वाणः, विदिता जनापवादान्, प्रजागरितापररात्रान्, कन्यामलंकरिष्णुः, दिवमुत्पतिष्णुः, ग्राममाकामुकः, योषामाभिलाषुकः, ओदनं बुभुक्षुः, श्रियमाशंसुः, ददिर्गाः पविस्सोऽयमं, अवन्दायी, शतंदायी, ग्रामंगामी, ग्रामतां गामी, कटं कारको व्रजति, ओदनं पाचको व्रजतीति । भावकर्म यथा—क्रियाः क्रियन्ते, विधयो विधीयन्ते, उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्ते, अर्हति भवानिक्षुभक्षिकां, इक्षुभक्षिकां मे धारयसि, व्यावहासीं विदधते, सांकोटिनं कुर्वन्ति, उत्सवमामन्त्रये, समाजमामन्त्रयै, आमन्त्रणमामन्त्रयै, मन्त्रणं निमन्त्रयै, कां त्वं कारिमकार्षीः, कां कारिकां कां कृतिकां क्रियां कां कृत्यां, किं कृतं सर्वां कारिमकार्षं, सर्वां कारिकां सर्वां कृतिं सर्वां क्रियां सर्वां कृत्यां सर्वं कृतमिति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भावकर्ता यथा—ब्रह्मभूयं वर्तते, ब्रह्महत्या न भवति, पाको वर्तते, त्यागो भवति, सांराविणं वर्तते, आखूत्थो भवति, अन्वेषणा वर्तते, व्यावभाषी भवति, समजः पशूनां, उटजः पशूनां, गवामुपसरः, ऋतूनां पर्यायः, भवतः आसिका, भवतः शायिका, अभ्यूषखादिका वर्तते, इक्षुभक्षिका उदपादि, शिरोर्तिर्वर्तते, प्रवाहिका न भवति, शिरोरोगश्शिरो बाधते, अरोचको न भवति, निग्रहस्ते, अवग्रहस्ते, अजननिस्ते, अभवन्तिस्ते वृषल भूयादिति । कर्मकर्ता यथा–स्वयं धौतौ पादौ, स्वयं विलीनमाज्यं, अकृष्टपच्याश्शालयः, पचेलिमाः माषाः, भिदेलिमानि काष्ठानि, भिदुराभूः, भिदुराराश्मः, भङ्गुरं काष्ठं, आरोहयमाणो हस्ती, लूयमानः केदारः, ब्रुवाणा कथा, भूषमाणा कन्या, ग्रथ्नाना स्रक्, श्रद्ध्नाना स्रक्, चिकीर्षमाणः कटः, अवकिरमाणो हस्ती, नममाणो दण्डः, उच्छ्रायमाणो दण्डः, दुहाना धेनुः, प्रस्नुवाना धेनुः, रुन्धाना गौः, आघ्नाना गौः, रज्यद्वस्त्रं, कुष्यन् पाद इति ।

अन्ये पुनरमीषामपि कर्मकर्तृत्वं मन्यन्ते । प्रकृतः कटं भवान् प्रकृतः कटो भवता, यातः पन्थानं भवान् यातः पन्थानं भवता, आसीनो मासं भवान् आसीनो मासो भवता, भुङ्क्ते ओदनं भवान् भुङ्क्ते ओदनो भवता, अधिशयीत खट्वां भवान् अधिशयिता खट्वा भवता, आरूढो वृक्षं भवान् आरूढो वृक्षो भवता, आश्लिष्टः प्रियां भवान् आश्लिष्टा प्रिया भवता, उपस्थितस्सूर्यं भवान् उपस्थितस्सूर्यो भवता, उपासितोऽग्निं भवान् उपासितोऽग्निर्भवता, अनूषितो गुरुं भवान् अनूषितो गुरुर्भवता, अनुजातो माणवको माणविकां अनुजाता माणविका माणविकेन, अनुजीर्णो वृषलं देवदत्तः अनुजीर्णा वृषली देवदत्तेन इति तन्न सम्यग्वाक्यभेदात् । ननु च भवान् आक्षेपलब्धः कर्ता न तिङ् वाच्यः ; तत्कथमुच्यते कर्तृपदं, भावकर्तृपदं कर्मकर्तृपदंचेति । तथा हि, अवयवव्यतिरेकाभ्यां शब्दस्याभिधानशक्तिः कल्प्येत । भावनाक्षेपेण च प्रतीयते ; कर्तरि न तत्र प्रत्ययस्यान्वयव्यतिरेकौ कल्प्येते, यथा जात्याक्षेपेण व्यक्तेः प्रतीतौ न तां प्रति शब्दस्य वाचकशक्तिकल्पनोपपत्तिमती । कथं पुनः कर्तुरनभिधाने प्रत्ययस्य वचनपुरुषभेदो युज्येत ? यथैव नात्मनेपदेषु, जात्यभिधानपक्षे जातेरलिङ्गसङ्ख्यायाया अपि तदाधारव्यक्त्याश्रयाणि लिङ्गवचनानि प्रवर्तन्ते तथैव भावनायाः अभेदेऽपि तथा कर्त्राश्रयो वचनपुरुषभेदः प्रपत्स्यतीति ।

न च कर्तरि लकारः स्मर्यते इति वाच्यम् ; यतः 'कर्तरि कृत्' (पा. ३.४.६७) 'लः कर्मणि च भावेऽचाकर्मकेभ्यः' (पा. ३.४.६९) 'वर्तमाने लट्' (पा. ३.१.१२३) । लस्य तिवादयः । 'तिङस्त्रीणि त्रीणि प्रथममध्यमोत्तमाः', 'तान्येकवचनद्विवचनबहुवचनान्येकशः', 'युष्मदि .... .... .... मध्यमः', 'अस्मद्युत्तमः', 'शेषे प्रथमः' (पा. १.४.१०१, १०२, १०६, १०७, १०८) 'भावकर्मणोरात्मनेपदम्', 'शेषात्कर्तरि परस्मैपदम्' (पा. १.३.१३, ७८) इत्यादिवाक्यानां 'द्व्येकयोर्द्विवचनैकवचने', 'बहुषु बहुवचनम्' (पा. १.४.२२, २१) इति संख्याविधानेन

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सद्वैकार्थविवक्षयात्वेकवाक्यता व्याख्याता । एको हि पचतीत्यादिशब्दस्तैर्व्याक्रियते । तत्रैष वाक्यार्थो भवति । कर्तुरेकवचनत्वे एकवचनं क्विपित्यादि, कर्तृवचनं तिबित्यादि, कर्तुर्बहुवचनत्वे बहुवचनं झीत्यादि ; एवं च भावनाक्षिप्तकर्तृसंख्यायामेव लकारः स्मर्यते, न कर्तरि। उच्यते ; यदि भावनाक्षिप्तकर्तृसंख्या लकारेणोच्यते, देवदत्तेनास्यते इति भावाभिधायिनोऽपि कर्तृसंख्यायामेवाभिधानं प्राप्नोति ; उभयत्रापिकर्तृसद्भावात् । येनैव हि निमित्तेन पचतीत्यादौ कर्मसंख्याभिधेयमासादयति तेनैव प्रयोगान्तरेऽप्यासादयेत् । कथं च कर्तर्यभिधीयमाने तद्विशिष्टसंख्याभिधानं युक्तम् ।

अथ संख्यामात्रमभिधीयते न विशेषः ; तर्हि पुरुषादिभेदप्रतीतेरनुपपत्तिः तद्विशिष्टाभिधानं च तदभिधानपुरस्सरमेव न्याय्यं ; नागृहीतविशेषणे विशेष्यबुद्धिर्वर्तत इति न्यायात् । न च शब्देनासंस्पृश्यमानोऽपि कर्ता सन्निधिमात्रेण संख्यां विशेषयितुमुत्सहते संख्याया धर्मरूपत्वाद्धर्मिणा कर्तुरवच्छेदकत्वेन संस्पर्शो युज्यते । करणादीनामपि सान्निध्यधर्मित्वात् तथात्वोपपत्तेः । किञ्च लकारेणाभिहितयोर्भावनासंख्ययोरुत्तरः कालः भावनाक्षिप्तः कर्ता लभ्यते । ततोऽस्य पूर्वभावात् भावनासमकालमभिहितया संख्यया अविशेषात् सर्वकारकाणामवच्छेदः प्राप्नोति । पश्चाच्च कर्ताक्षिप्तः कथं भावनासमकालमभिहितां संख्यामात्मनि निरुन्ध्यात् । अथ संख्यावद्भावनाप्रतीतिसमकालमेव कर्ता प्रतीयते ; न तर्ह्याक्षेपलभ्यः । अपि तु संख्यावल्लकारेणाभिधीयत एवेति । किञ्च देवदत्तादिपदेन पचतीत्यादे स्सामानाधिकरण्यदर्शनात् । संख्यावान् कर्तैव लकारेणाभिधीयते । यदि पुनः कर्तुस्संख्यानमेकत्वादिकं लकारो ब्रूयात् तदा देवदत्तस्य पचतीत्येवं प्रयोगः स्यात् यथा देवदत्तस्यैकत्वमिति । अथ न संख्यानमुच्यते लकारेण, किन्तु संख्येय एव देवदत्तादिरभिधीयते । देवदत्तः पचतीत्येकत्वसंख्यावच्छिन्नः पाकं करोतीत्यर्थः । एवं च, संख्येयेऽभिधीयमाने कर्तैवाभिहितो भवति ।

न च कर्त्रभिधानेऽपि शक्तेः कारकत्वात् समानाधिकरणानुपपत्तिरिति वाच्यम् । शक्तिर्हि लकारेणाप्यभिधीयमाना गुणद्रव्यपरतन्त्रैवाभिधीयते । यथा—शुक्लः पटः, शुक्ला शाटीति । अपिच भवन्तोऽपि कर्मलकारवाच्यत्वं मन्यन्ते । तदनुपपन्नम् । यथैव द्विभावनाक्षेपलभ्यत्वात् कर्तुरवाच्यत्वं तथा कर्मणोऽपि भवितुमर्हति । अथानाक्षेपात्कर्मणो वाच्यत्वम् । एवं च सति कर्तुरपि तथात्वोपपत्तिः । न हि क्रियाक्षेपे कर्तृकर्मणोर्विशेषमुपलभामहे । यथैव हि कर्त्रा विना क्रिया न प्रतीयते एवं कर्मणाऽपि । न सर्वत्र कर्मसंबन्ध इति चेत्, तत्रास्ति । तत्र कथम् । अथ कर्मणोऽपि क्रियाक्षेपलभ्यत्वात् तद्गताऽपि संख्यैवोच्यते लकारेण । कथमिदानीं कर्तृकर्मानभिधायको लकारः क्वचित् कर्तृगतां संख्यामभिधत्ते ; क्वचित्कर्मगतामिति विशेषो भवति । न च विशेषणं नास्तीति वाच्यम् । यतः पचतीत्यत्र उल्लसितेन कर्तृरूपत्वेन पच्यत इत्यत्र रूपगृहीतकर्मनिष्ठत्वेन प्रतीतिरुत्पद्यते । किञ्च लकारेण कर्तृकर्मणोरनभिधाने देवदत्तः पचतीत्यनभिहिते

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कर्तरि तृतीया । ओदनः पच्यत इति कर्मणि द्वितीया प्राप्नोति । अथैवमुच्यते कर्तृकर्मसंख्ययोरभिहितत्वान्न भविष्यतो विभक्ती कृदन्तेषु तर्ह्यनिष्टप्राप्तिः संख्यायाः कृत्यभिधानात्। तत्र पक्व ओदन इति द्वितीया, पक्ता देवदत्त इति तृतीया प्राप्नोति ।

ननु चोभयं विभक्त्यर्थः संख्याकर्मादयश्च । तत्र यथा आख्यातेषु सङ्ख्याया अभिहितत्वात् कर्तृकर्मणोर्द्वितीयातृतीये न भवतः, तथा कृदन्तेषु कारकस्याभिहितत्वात् सङ्ख्या सङ्ख्याया द्वितीयादयो न भविष्यन्ति । स्यादेतत् । यद्यभिहिते प्रतिषेधस्स्यात्, अनभिहिते त्वयं विधिः सामर्थ्यैकवाक्यताभ्यां पर्युदासाश्रयणात् । तत्र तिङन्तेषु संख्याभिधानेऽप्यनभिहितत्वात् सङ्ख्यायाः कारकविभक्तयः प्राप्नुवन्ति । अपिच देवदत्तः पचन्, देवदत्तः पचमानः इति शतृशानचोः कर्तरि च सङ्ख्याया अप्यनभिधानात् तृतीया न प्राप्नोति । अथ शतृशानज्यं कर्तुरनभिधानमाश्रियते तिङः किमपराद्धम् ? तस्याऽपि लादेशत्वाच्छतृशानचोः छत्वात्कर्तरिकृदिति (पा. ३.४.६७) वचनात् कर्तुरभिधानादिति चेत् कर्मणः कथमोदनं पच्यमान इति । अथ स्थानिनो लकारस्य कर्मणि विधानात् तदादेशत्वाच्च शानचः कर्माभिधानं भविष्यति । तथाहि । 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९) इति 'भावकर्मणोरात्मनेपदं' (१.३.१३) इतिवा कर्मणि लकारो विधीयते । एवं सति यत्रापि तिङोऽपि विधीयते तत्रापि कर्मणि प्राप्नोति । ततश्च कर्तर्यपि केनापवार्यते तत्राऽपि कर्तरि कृत्। 'शेषात् कर्तरि परस्मैपदं' (१.३.७८) इति कर्तरि लकारोऽपि विधीयते । तदुक्तम्—

आत्मनेपदरूपेण सर्वत्रैव हि कर्मणि । लकारस्स्यात् तथैवाऽयं कर्तर्यपि भवेन्नकिम् ॥

नच कर्तरि या कर्मणि या सङ्ख्या तत्र तिङो भवन्तीत्याश्रयितुमुचितम् । न हि 'लः कर्मणि च भावे चाकर्मकेभ्यः' (३.४.६९) इत्यस्य 'द्व्येकयोर्द्विवचनैकवचने', 'बहुषु बहुवचनं' (१.४.२२, २१) इत्यनेनैकवाक्यत्वं विद्यते, भावेऽपि लकारस्य विधानात् । न च भावस्य साध्यत्वेन संख्यायोगोऽस्ति । नापि स्वौजसित्यादेर्विभक्तिविधानस्य संख्याविधानेन सहैकवाक्यत्वं असंख्येभ्योऽप्यव्ययेभ्यस्सुबुत्पत्तेः । आह च महावार्तिककारः—सुप्तिङोरविशेषविधानात् दृष्टविप्रयोगत्वाच्च नियमार्थं वचनम् ।

महाभाष्यकारोऽप्याह—सुप्तिङोऽविशेषेणोत्पद्यन्ते ; उत्पन्नानां नियम इति । तस्मान्न कर्तृकर्मसंख्यायां लकारविधिः, अपितु कर्तृकर्मणोरेवेत्यभ्युपगन्तव्यम् । कथं पुनस्सर्वकारकसन्निधाने लकारेण कर्तृकर्मणोरेवाभिधानम् । उच्यते, तयोरेव प्राधान्यात् तत्र कर्तुः प्राधान्यं करणादीनां तदधीनवृत्तित्वात् कर्मणस्तु तदर्थत्वमेव तत्प्रवृत्तेः । यदिवा कर्तृकर्मव्यापाराभिधायिनो धातोः पर उपजायमानो लकारः कर्तृकर्मणी एवाभिदधाति । अथ कथं कर्तृकर्मवत् कालादिकमपि नाभिदधाति विषयभेदात् । तथाहि ; षडर्थाः तिङन्तेन प्रतीयन्ते—क्रिया, कालः,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

उपग्रहः, कारकं, पुरुषः, संख्येति । तेषु क्रियाकालात्मनेपदनिमित्तानि प्रकृतिरभिधत्ते ; प्रत्ययः साधनं संख्यां पुरुषं च । तत्र प्रकृत्यभिधेयेषु क्रिया प्रधानं, कालोपग्रहौ विशेषणम् । प्रत्ययाभिधेयेषु साधनं प्रधानं, संख्यापुरुषौ विशेषणम् । कथं पुनः संख्या कारकस्यैव विशेषणं, न क्रियाकालोपग्रहपुरुषाणाम् ।

उच्यते क्रियायास्साध्यत्वेनापरिनिष्पन्नत्वात् कालस्य च क्रियातो व्यतिरेकात् व्यतिरेकेऽपि वा क्रियावच्छेदकत्वेनोपसर्जनत्वात् । उपग्रहस्यापि गन्धनादेः क्रियाकर्मत्वेनापरिनिष्ठितत्वे अनिदन्तानिर्देश्यत्वादसंबन्धस्संख्यायाः पुरुषस्तु प्रथमादिसाधनमेव, नान्यः कश्चित् । अतः कारकेणैव संख्याभिसंबध्यते, न क्रियादिभिरिति । तदेवं तिङ्वाच्यत्वेन कर्तुः कर्तृपदं, भावकर्तृपदं, कर्मकर्तृपदं चेति यदुक्तं, तदनुपपन्नमेवेति । कर्तृपदं, कर्मपदं, करणपदं, संप्रदानपदं, अपादानपदं, अधिकरणपदश्चेति कारकरूपभेदाः । तत्र कर्त्रादयः कारकप्रस्तावेऽग्रतः प्रपञ्चयिष्यन्ते ; इह तु संबन्धाविच्छेदाय लेशत उदाह्रियन्ते । तेषां कर्ता त्रिधा—स्वतन्त्रोऽस्वतन्त्रः कर्मकर्ताचेति । तत्र क्रियायां स्वेच्छया यः करणादिकारकाणि प्रयुङ्क्ते नतु तैः प्रयुज्यते सः स्वतन्त्रः । स द्विधा—स्वविभक्तिवाच्यः, परविभक्तिवाच्यश्चेति । तयोस्स्वविभक्तिवाच्यो यथा—

मानभङ्गपटुना सुरतेच्छां तन्वता प्रथयता दृशि रागम् ।
लेभिरे सपदि भावयतान्तर्योषितः प्रणयिनेव मदेन ॥

परविभक्तिवाच्यो यथा—

चारुता वपुरभूषयदासां तामनूननवयौवनयोगः ।
तं पुनर्मकरकेतनलक्ष्मीस्तां मदो दयितसङ्गमभूषः ॥

योऽन्यप्रयुक्तः क्रियासु व्याप्रियते सोऽस्वतन्त्रः । सोऽपि द्विधा—उद्भूतव्यापारोऽनुद्भूतव्यापारश्च । तयोरुद्भूतव्यापारो यथा—

गुणानुरक्तामनुरक्तसाधनः कुलाभिमानी कुलजां जनाधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्मवधूमिव श्रियम् ॥

अनुद्भूतव्यापारो यथा—

चित्तनिर्वृति विधायि विविक्तं मन्मथो मधुमदश्शशिभासः ।
सङ्गतं च दयितै स्स्म नयन्ति प्रेम काममपि भुवं प्रमदानाम् ॥

कर्मकर्ताऽपि द्विधैव । उद्रिक्तकर्मांशः; अनुद्रिक्तकर्मांशश्च । तयोरुद्रिक्तकर्मांशो यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्तदुच्छ्वसितपीतमैन्दवं सोढुमक्षममिव प्रभारसम् ।
मुक्तषट्पदविरावमञ्जसा भिद्यते कुमुदमानिबन्धनात् ॥

अनुद्रिक्तकर्मांशो यथा—

उदारकीर्तेरुदयं दयावतः प्रशान्तबाधं दिशतोऽभिरक्षया ।
स्वयं प्रदुग्धेऽस्य गुणैरुपस्नुता वसूपमानस्य वसूनि मेदिनी ॥

कर्तुः क्रिययाऽनन्यार्थया यदाप्यते तत्कर्म । तदपि त्रिधा—निर्वर्त्यं, विकार्यं, प्राप्यञ्च । तेषु निर्वर्त्यं द्विधा— "यदसज्जायते सद्वा जन्मना तत्प्रकाश्यते ॥" तयोः प्रथमं यथा-

अयमान्दोलितप्रौढचन्दनद्रुमपल्लवः । उत्पादयति लोकस्य प्रीतिं मलयमारुतः ॥

द्वितीयं यथा—

सन्तमेव चिरमप्रकृतत्वादप्रकाशितमदिद्युतदङ्गे ।
विभ्रमो मधुमदः प्रमदानां धातुलीनमुपसर्ग इवार्थम् ॥

विकार्यमपि द्विधा । प्रकृत्युच्छेदात् गुणान्तराधानाच्च । तत्र प्रथमं यथा—

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत् स वह्निः भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥

द्वितीयं यथा—

तां पुलोमतनयालकोचितैः पारिजातकुसुमैः प्रसाधयन् ।
नन्दने चिरमयुग्मलोचन स्सस्पृहं सुरवधूभिरैक्ष्यत ॥

प्राप्यमपि द्विधैव । कथितमकथितञ्च । तत्र यत्कृत्यक्तखलर्थादिभिराभिधीयते तत्कथितं, यत्तैर्नाभिधीयते तदकथितं । तयोराद्यं यथा—

निपीयमानस्तबका शिलीमुखैरशोकयष्टिश्चलबालपल्लवा ।
विडम्बयन्ती ददृशे वधूजनैरमन्ददष्टोष्टकरावधूननम् ॥

द्वितीयं यथा—

तामस्मदर्थे युष्माभिर्याचितव्यो हिमाचलः ।
विक्रियायै न कल्पन्ते सम्बन्धास्सदनुष्ठिताः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियासिद्धौ साधकतमत्वेन यदव्यवहितं व्याप्रियते तत्करणम् । तदपि त्रिधा—बाह्यमाभ्यन्तरं बाह्याभ्यन्तरञ्च । तेषु बाह्यं द्विधा—व्यवधायकमव्यवधायकञ्च । तयोराद्यं यथा—

धूपोष्मणा त्याजितमार्द्रभावं केशान्तमन्तःकुसुमं तदीयम् ।
पर्यक्षिपत्काचिदुदारबन्धं दूर्वावता पाण्डुमधूकदाम्ना ॥

द्वितीयं यथा—

वैदर्भनिर्दिष्टमसौ कुमारः क्लृप्तेन सोपानपथेन मञ्चम् ।
शिलाविभङ्गैर्मृगराजशाब स्तुङ्गं नगोत्सङ्गमिवारुरोह ॥

आभ्यन्तरमपि द्विधा-कर्तुर्भिन्नमभिन्नञ्च । तयोर्भिन्नं यथा—

शिलाघनैर्नाकसदामुरस्थलैः बृहन्निवेशैश्च वधूपयोधरैः ।
तटान्तनीतेन विभिन्नवीचिना रुषेव भेजे कलुषत्वमम्भसा ॥

द्वितीयं यथा—

प्रयुक्तसत्कारविशेषमात्मना नमां परं संप्रतिपत्तुमर्हसि ।
यतस्सतां सन्नतगात्रि सङ्गतं मनीषिभिः स्साप्तपदीनमुच्यते ॥

बाह्याभ्यन्तरमपि द्विधा—बहिर्मुखमन्तर्मुखञ्च । तयोराद्यं यथा—

गतया पुनः प्रतिगवाक्षगवं दधती रतेन भृशमुत्सुकताम् ।
मुहुरन्तरालभवमस्तगिरेः स्सवितुश्च योषिदमिमीत दृशा ॥

द्वितीयं यथा—

बिभ्रतौ मधुरतामतिमात्रं राशिभिर्युगपदेव पपाते ।
आननैर्मधुरसो विकसद्भिर्नासिकाभिरसितोत्पलगन्धः ॥

क्रियाकार्यत्वेनावधीरितं कर्मणा क्रियया वा संयोगः यदनुभवति तत्संप्रदानम् । तत्त्रिधा—ददातिकर्मव्याप्यं, कर्ममात्रव्याप्यं, क्रियाव्याप्यं चेति । तेषु ददातिकर्मव्याप्यं द्विधा—स्वत्वस्याऽनिवृत्तौ निवृत्तौ च । तयोराद्यं यथा—

चुम्बनादलकचूर्णरूषितं शंकरोऽपि नयनं ललाटजम् ।
उच्छ्वसत्कमलगन्धये ददौ पार्वतीवदनगन्धवाहिने ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्वितीयं यथा—

दातुं वा प्रभवसि मामन्यस्मै हर्तुमेव वा दासम् ।
नाऽहं पुनस्तथात्वं यथाहि मां शङ्कसे भीरु ॥

क्रियाकर्मव्याप्यं द्विधा—ददात्यर्थविषयं च । तत्र प्रथमं यथा—

श्रीमल्लताभवनमोषधयः प्रदीपा श्शय्या नवानि हरिचन्दनपल्लवानि ।
अस्मिन्नतिश्रमनुदश्च सरोजवातारस्मर्तुं दिशन्ति न दिवस्सुरसुन्दरीभ्यः ॥

द्वितीयं यथा—

शशंस तस्मै प्रणिपत्य नन्दी शुश्रूषया शैलसुतामुपेताम् ।
प्रवेशयामास च भर्तुरेनां भ्रूक्षेपमात्रानुमतप्रवेशाम् ॥

क्रियाव्याप्यमपि द्विधैव । पारिभाषिकमपारिभाषिकञ्च । तयोः प्रथमं यथा—

न स्रजो रुरुचिरे रमणीभ्यश्चन्दनानि विरहे मदिरा वा ।
साधनेष्वभिरतेरुपधत्ते रम्यतां प्रियसमागम एव ॥

द्वितीयं यथा—

इत्थं विधिज्ञेन पुरोहितेन प्रयुक्तपाणिग्रहणोपचारौ ।
प्रणेमतुस्तौ पितरौ प्रजानां पद्मासनस्थाय पितामहाय ॥

तत्र कर्त्रा कर्मणा वा क्रियाजन्यमेव ध्रौव्येण यद्विगाहमवगाहते तदपादानम् । तत्त्रिधा— निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियञ्च । तेषु निर्दिष्टविषयं यथा— उज्झितं अनुज्झितं च । तयोराद्यं यथा—

स्वेदानुविद्धार्द्रनखक्षताङ्के सन्दष्टभूयिष्ठशिखाकपोले ।
च्युतं न कर्णादपि कामिनीनां शिरीषपुष्पं सहसा पपात ॥

द्वितीयं यथा—

औषसातपभयादपलीनं वासरच्छविविरामपटीयः ।
सन्निपत्य शनकैरिव निम्नादन्धकारमुदवाप समानि ॥

उपात्तविषयमपि द्विधा । हेयमुपादेयञ्च । तयोराद्यं यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

करौ धुनाना नवपल्लवाकृती वृथा कृथा मानिनि मापरिश्रमम् ।
उपेयुषी कल्पलताभिशङ्कया कथं नु वित्रस्यति षट्पदावली ॥

द्वितीयं यथा—

अतिथिं नाम काकुत्स्थात् पुत्रमाप कुमुद्वती ।
पश्चिमाद्यामिनीयामात् प्रसादमिव चेतना ॥

अपेक्षितक्रियमपि द्विधैव । सामान्यापेक्षं विशेषापेक्षं च । तयोराद्यं यथा–

मा पुनस्तमभिसारसरमागस्कारिणं मदविमोहितचेताः ।
योषिदित्यभिललाष न हालां दुस्त्यजः खलु सुखादपि मानः ॥

द्वितीयं यथा–

कुतो भवानध्वनि चित्रकूटात् दृष्टस्त्वया श्रीललितप्रभावः ।
किं तेन मुग्धे मदनोत्सवेऽस्मिन् कामं त्वया वेश्मनि लेखयामि ॥

कर्त्रा कर्मणा व्यवहितं क्रियाधारोऽधिकरणम् । तत्त्रिधा—वैषयिकं, औपश्लेषिकं नैमित्तिकं च । तेषु वैषयिकं द्विधा । तयोराद्यं यथा–

कदलीप्रकाण्डरुचिरोरु तरौ जघनस्थलीपरिसरे महती ।
रशनाकलापगुणेन वधू र्मकरध्वजद्विरदमाकलयन् ॥

द्वितीयं यथा—

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिः व्यसनं श्रुतेः प्रकृतिसिद्धमिदं हि महात्मनाम् ॥

औपश्लेषिकमपि द्विधा–एकदेशिकमभिव्यापकं च । तयोराद्यं यथा—

स्पर्शभाजि विगदच्छविचारौ कल्पिते मृगदृशां सुरताय ।
सन्नतिं दधति पेतुरजस्रं दृष्टयः प्रियतमे शयने च ॥

द्वितीयं यथा—

रागकान्तनयनेषु नितान्तं विद्रुमारुणकपोलतलेषु ।
सर्वथाऽपि ददृशे वनितानां दर्पणेष्विव मुखेषु मदश्रीः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नैमित्तिकमपि द्विधैव शुद्धं सङ्कीर्णं च । तयोराद्यं यथा—

क....एधूमंधारे अरे अब्भुत्तणमग्गिणो समप्पिहिइ ।
मुहकमळ चुम्बणाळेह धम्मि पासंठिएदि अरे ॥

द्वितीयं यथा—

इहाधीतो पूर्वं धृतधरणिभारः कमठराडपांनाथेनास्माद्गिरिशितशरण्येन पठिताः ।
ततः प्राप्ता दूरीकृततपनतापैर्जलधरैरसतां दुःखोपज्ञं सततमुपकारोपनिषदः ॥

प्रवृत्तप्रयोजकस्तु निमित्तविशेषो हेतुः कर्ता च भवति । सोऽपि त्रिधा-प्रेरकोऽनुकूलः प्रत्यायकश्च । तत्र प्रेरको द्विधा—व्यवहितोऽव्यवहितश्च । तयोर्व्यवहितो यथा—

सा चूर्णगौरं रघुनन्दनस्य धात्रीकराभ्यां करभोपमोरूः ।
आसञ्जयामास यथाप्रदेशं कण्ठे गुणं मूर्तमिवानुरागम् ॥

अव्यवहितो यथा—

सावशेषपदमुक्तमुपेक्षा स्रस्तमाल्यवसनाभरणेषु ।
गन्तुमुत्थितमकारणतस्स द्योतयन्ति मदविभ्रमभासाम् ॥

अनुकूलोऽपि द्विधा—सिद्धः साध्यश्च । सिद्धो यथा—

गेहाजिरेषु नवशालिकणावपातगन्धानुभावसुभगेषु कृषीवलानाम् ।
आनन्दयन्ति मुसलोल्लसनावधूतपाणिस्खलद्वलयपद्धतयो वधूट्यः § ॥

साध्यो यथा—

सुण्णम्मि गिरिं गामे वणमहि सविता अभङ्ग वइवेढे ।
गहवइ धूआदं सण मणोहरो मंप सा वेइ ॥

प्रत्यायको द्विधा । अदृष्टप्रयोज्यक्रियो दृष्टप्रयोज्यक्रियश्च । तयोः कंसं घातयति, पुष्पेण चन्द्रं योजयतीत्यादिरदृष्टप्रयोजनक्रियः । स यथा—

शैलैस्सन्धयति स्म वानरहतैर्वाल्मीकिरम्भोनिधिं ।
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते ॥
वागर्थौ च तुलाधृताविव तथाप्यस्मत्प्रबन्धानयं ।
लोको दूषयितुं प्रसारितमुखस्तुभ्यं प्रतिष्ठे नमः ॥

---

§ वधूभ्यः इति पाठभेदः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वाराणस्यां रात्रीः विवासयति, माहिष्मत्यां सूर्यमुद्गमयति, इत्यादिर्दृष्टप्रयोज्यक्रियः।

स यथा—

विपुलतरनितम्बाभोगरुद्धेरमण्या शयितुमनधिगच्छञ्जीवितेशोऽवकाशम्।
रतिपरिचयनश्यन्नैद्रतन्द्रः कथंचिद्गमयति शयनीये शर्वरीं किं करोतु॥

कथं पुनः कंसं घातयति कथकः, बलिं बन्धयति गाथक इत्यादौ प्रयोजकव्यापारेण णिज्युत्पत्तिरुच्यते।

शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्।
प्रत्यक्षमिव कंसादीन् साधकत्वेन मन्यते॥

तेषां चोत्पत्तिप्रभृत्याविनाशात् समृद्धिमाचक्षाणः परानपि तथैव प्रत्याययति। तथा हि। वक्तारो भवन्ति, गच्छ हन्यते कंसः, किं गतेन हतः कंस इति। एवं रात्रिं विवासयतीत्यादावपि तथा प्रत्यायनमवगन्तव्यम्। अयं च सूत्राणामारम्भपक्षे न्यायः; सूत्रारम्भपक्षे तु आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकमित्युदाहृतं पुरस्तात्।

अथायं णिजर्थो धात्वर्थत्वेनावाच्छिद्यमानः किं साक्षादवच्छिद्यते? एवं भवितुमर्हति। न ह्यन्यदिहोपलभ्यते तदनुपपन्नम्। क्रियोऽसाध्यत्वेन स्वसाधनापेक्षया परस्परेण सम्बन्धः। अस्तु तर्हि कर्तुर्व्यवधानेनायुक्तं चैतत्। धात्वर्थो हि कर्तृव्यापाररूपः, सोऽनुपलभ्यमानमपि कर्तारमाक्षिप्य तद्द्वारेण प्रत्ययार्थं विशेषयति।

न चैवं सति प्रेरणानर्थक्यं यतो विच्छेदमाशङ्कमानः क्रियायां प्रवृत्तमपि प्रेरयति। यत्राप्यप्रवृत्त एव प्रवर्त्यते तत्रापि योग्यत्वाद्बुद्धिस्थं क्रियासम्बन्धं गृहीत्वा प्रयुङ्क्ते। अबुद्धिनिबन्धनोऽपि क्रियाकर्त्रोस्सम्बन्ध उपपद्यते। तदाप्याख्यानात् कृतस्तदाचष्ट इत्याद्युपसंख्यानेन वा सामान्यम्। कृतत्वाद्धेतुतोह्यविशिष्टमिति बुद्धिनिबन्धनत्वेनैव प्रत्याख्यातः। तदा च बुद्धिसोबुद्धि वासुदेवेन हन्यत इत्येवंभूतबुद्धिविषयं प्रयोजकव्यापारमाश्रित्य पुनर्बौद्ध एव प्रयोजकव्यापारोऽङ्गीकृतः। अथोऽर्थाक्षिप्तकर्तृसङ्गताया धात्वभिहितायाः क्रियायाः प्रत्ययार्थत्वेन प्रेरणादिना सम्बन्ध इति। अत एव प्रवृत्तोऽपि प्रेष्यमाणे लोडादिप्रत्ययोत्पत्तेः कर्तृत्वस्यापायात्। ननु कथमप्रवृत्तबाह्ययोगः कर्तृत्वमुपेयात्। प्रैषसाध्यं च कर्तृत्वं कथं नाम? ततः प्रागेव भवेत्। उच्यते; नेदं बाह्यप्रयोगप्रवृत्त्यधीनं कर्तृत्वमभिधीयते। क्रियायां तु सम्बध्यमानत्वेन विवक्षितायां तत्साध्यता। नान्तरीयकः सामर्थ्यप्रापितसन्निधानः कर्ता स्थित एव प्रयोजकव्यापारेण बाह्यप्रयोगसिद्ध्यर्थमेव विषयीक्रियते। अन्यथा प्रयोजकव्यापारापेक्षकर्तृत्वे प्रयोजकोत्तरकालमेवास्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कर्तृत्वं भवेदिति न संप्रति कर्तृत्वाभावे तन्निबन्धनो लोडादिरुपपद्यते। तस्मात्पचतीत्यादिना यः पचति सः पाकं प्रति प्रवर्तयत्विति कथितं भवति। क्रियासामर्थ्यादेनं निर्ज्ञातं कर्तारं प्रैष्यतयाभिधेयभावेन लकारोभिनिविशते । तथाहि ; सोऽयं पाकादिधात्वर्थसामर्थ्यादवगतः कर्ता साधनत्वार्थस्य बाह्यप्रयोगसंपत्त्यर्थं प्रेषणादिव्यापारविषयीकृतः प्रत्ययेनाभिधीयत इत्यामनन्ति ।

भवतु नाम क्रियाप्रापितसन्निधानः कर्ता । सतु नियत एव पुरुषः कथं ज्ञायते? येनैवमुच्यते यस्त्वं पचसि स पाकं प्रवर्तयेति । अत एव भाष्ये सक्रियस्य कर्तुः प्रयोगे णिचमभिधाय द्रव्यमात्रस्य प्रयोगे लोट उत्पत्तिरभिहिता—पृच्छतु मा भवान्, अनुयुङ्क्तां मा भवान् इति । उच्यते द्रव्यमात्रमपि प्रेष्यमाणं क्रियासाधनयोग्यमेव प्रेष्यते, न काष्ठकुड्यादि। नन्वेवं णिचो लोटश्च विषयसङ्करः प्राप्नोति, नास्ति सङ्करः ; यस्यावगतमसकृत् प्रमाणान्तरेण क्रियाकर्तृत्वमसावेव सम्भावितक्रियो णिज्विषयः । अदृष्टक्रियासामर्थ्यं तु योग्यमेव । द्रव्यमात्रं लोड्विषय इति तेन पचेत्यसमर्थः यस्त्वं पचसि पाकार्हः पाके शक्तः स त्वं प्रवर्तय पाकमिति। एवं च क्रियाकर्तृत्वेन योग्यतया ज्ञायमानस्य प्रयोगे प्रवर्त्यमानत्वात् कर्तुरेवाधिकार इत्युक्तं भवति।

विद्वच्छूराभिजातकर्तृके राज्ये भवानधिकृत इत्यादिवचनभङ्गिभिरयमेवार्थस्समर्थ्यते । यदि तर्हि न कर्ताधिक्रियते नाऽयं मतिमान् विशिष्टमेव पुरुषमेवंप्रकारेऽधिकारेनुरुन्धीत यमेव कञ्चित्पुरुषमुपाददीत । अथवा एते लोडादिविषयाः प्रैषादिविषयाः । ते कस्य धर्मभूताः, तत्रैव ते वर्णयन्ति प्रयोक्तुः ; प्रयोक्ता हि प्रेषणादिभिरभिहितसिद्धयेऽभिलाषान् पुरुषं प्रवर्तयति ; सतु क्वचित्प्रेषयन्, क्वचिदध्येषयन्, क्वचिदामन्त्रयमाण इति शब्दस्यैते व्यापारा इत्यपरे । प्रेषणा हि सर्वविध्यादिसाधारणरूपा । साच शब्दव्यापारः निमन्त्रणादयस्तु प्रमाणादिनिबन्धनास्तद्विशेषाः। तथाहि, इदं निमन्त्रणं, इयमनुज्ञा, अयं प्राप्तकाल इति प्रकरणादेरवगम्यते । अन्यन्मतं प्रयोज्य-व्यापारविशेषः ; ते चासंविदिताः । सतु पुरुषो लिङादिप्रयोगात् भोजनादिक्रियासु निमन्त्रणाद्य-वस्थान्तरमात्मानं मन्यते निमन्त्रितोऽहमध्येषितोऽहमिति ।

अन्येत्वाहुः—विधिरेक एवार्थः प्रत्ययस्य । सच यजेतेत्यादेर्यथारूपोऽवगम्यते तथारूप एव। कटं कुरु, इह करोत्यर्थात्मके विधिवद्धात्वर्थानुयायीति कारकाणामभिसंबन्धः । यतः करोत्यर्था-त्मकव्यापारेण कारकाणां विशेष उपजायमान उपलभ्यते कुर्वद्धि कारको भवति । अन्येत्वाहुः—योऽयं पाकादिको विशेष इतरेतरवैलक्षण्येनोपलभ्यमानः प्रतिनियतफलजनकः । यत्रैव फलसाधकत्वात् करणानि प्रवर्तन्ते तस्यैव तु व्यापारात्मकत्वात् क्रियारूपताऽपि संपन्नैवेति। अपरमतं तन्नविवेक्तुं इह कारकाणि व्याप्रियन्ते न व्याप्रियन्त इति । उभयात्मके वस्तुनि विशिष्टोपाधिरूपस्य निर्धारितत्वादेकत्राऽपि प्रवृत्तिमुपयत् कारकमितरत्रापि प्रवृत्तमिवोपलभ्यते। अथापरे ब्रुवते उभयात्मकमेव हि क्रियारूपं वस्तु कारकैस्संपद्यते । अत एव कारकाणां प्रवृत्ति-विशेषः क्रियेत्येतद्[illegible] ...नुयायिकरोत्यर्थरूपा भावना

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अङ्गीक्रियते ; यदित्थमध्यगीषत कृभ्वस्तयः क्रियासामान्यवचनाः क्रियाविशेषवचनाः पच्यादयः इति । किंतु प्रत्ययवाच्यत्वमस्या अनुकृष्यते ।

ननु च भावनापक्षे कारकाणामिति बहुवचनानुपपत्तिः कर्तुरेव हि व्यापारो भावना, न कारकाणामुच्यते । कर्तैव कारकशब्देनोक्तः, न पुनरितरकरणादि । कर्तॄणां तु क्रियाभेदेन बहुवचनम् । कथं पुनरिदं ज्ञायते । यतो भुजिक्रियामूरीकृत्येदमभिधत्ते । अन्यथा कारकाणि शुष्कौदने प्रवर्तन्ते अन्यथा मांसौदन इति । कर्तैव शुष्कौदने मन्दप्रस्थानेन प्रवर्तते, मांसौदने संरम्भेणातः कर्तुर्मन्दतासंरंभप्रदर्शनं ज्ञायते । कर्तैव परिगृहीता, यस्य बुद्ध्यानुषङ्गात्तथा-प्रवृत्तिः । ननु च शुष्कौदनमांसौदनयोः करणाधिकरणादीनामपि तद्भेदनिमित्तं बहुवचनं भविष्यति । नैवम् ; विद्यमानमपि कारकान्तरं कांस्यपात्रादिशुष्कमांसौदनयोर्मन्दतया संरंभेण वा प्रवर्तते । यदापि सकलकारकव्यापारः क्रियेति पक्षस्तदापि प्रधानत्वात् कर्तैव कारकशब्देनोच्यते, तस्य च सर्वक्रियाविशेषविषयत्वेनानपायात् प्रयोगप्रवृत्तिहेतुत्वाच्च । कर्म पुनः यद्यपि तदर्थत्वात् प्रवृत्तेः प्रधानं तथापि तस्यासर्वविषयत्वान्नकारकाणामिति बहुवचनेन सङ्ग्रहः । यद्येवं कर्तृशब्द एव कस्मान्न कृतः कर्मणि लकाराणां तस्य व्युदासो माभूत् ? तेन यत्र संभवति कर्म तत्राङ्गीकृतमेव तु तदपेक्षया बहुवचनम् । ननु च संरंभादिप्रदर्शनाच्चेतनाव्यापारस्य क्रियात्वं न प्राप्नोति । नैवम् ; संरंभादेः कर्तृविलक्षणत्वात् । अतः कर्तृव्यापारः क्रियेति सिद्धम् । नन्वेवं सति भाष्यं न संगच्छते कः पचेः प्रधानार्थः, याऽसौ तण्डुलानां विक्लितिरिति अर्थं प्राधान्यमाश्रित्य तद्भाष्यमित्यविरोधः । यत्तदर्थं प्रेषणं, अध्येषणं वा ससर्वः पच्यर्थ इति । एवं च पचतीत्या-ख्यातस्य विक्लित्युपसर्जनं विक्लेदनमर्थो भवति ।

अन्ये तु कारकाणामिति बहुवचनं सर्वकारकव्यापारत्वेन व्याचक्षते यस्मात्सर्वकारक-व्यापाराभिधायित्वं धातूनां दृश्यते । तथाच देवदत्तस्य काष्ठैः स्थाल्यामोदनस्य च पाचकः इत्यादौ सर्वाण्येव कारकाणि धात्वर्थस्य विशेषणं ; नात्र कस्यचिद्गुणभावः प्रधानभावो वा अवगम्यते । आख्यातास्तर्हि सर्वकारकव्यापाराः किमिति नावगम्यन्ते ? प्राधान्यात्कर्तृकर्मणोरेव लकारोत्पत्तेः तद्व्यापार एवाख्यातात्प्रतीयते । किं पुनस्सर्वेषां कारकाणामेका प्रवृत्तिः ? आहोस्वित् प्रतिकारकं भिन्नाः प्रवृत्तयः क्रियेति । न तावदाद्यः पक्षः, सर्वेषामेकस्याः प्रवृत्तेरसंभवात् । नहि यैव काष्ठानां प्रवृत्तिस्सैव देवदत्तस्य स्थाल्यादेश्च संभवति तस्मात्प्रतिकारकं भिन्नाः प्रवृत्तयः धातुना युगपदभिधीयमानाः क्रियेत्युच्यन्ते । अथवा पुनरस्त्वेकैव सर्वकारकाणां प्रवृत्तिः क्रिया । तथाहि ; सर्वैरेव कारकैरेका प्रवृत्तिरुपजन्यते सर्वाण्येव हि फलजननाय प्रवर्तन्ते । किञ्चित्तु केनचिद्रूपेण जनयतीत्यवान्तरभेदात्करणादिव्यपदेश एकश्चानेकत्र वृत्तिर्जातिवदुपपद्यते । विशेषाद्वास्याः फलजननरूपत्वं, न पुनरधिश्रयणादिरूपतेति विशेषणादिरूपतेति । विशेषणादिरूपं निपातादिरूपं, आख्यातादिरूपं, संबोधनादिरूपं, संबन्धादिरूपं, हेत्वादिरूपं चेत्युपस्कारूपाः ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

एते चाग्रत उपस्कारार्थप्रस्तावे प्रपञ्चतो वर्णयिष्यन्त इति नेह प्रतन्यन्ते । संबन्धाविच्छेदार्थं तु लेशत उदाह्रियन्ते ।

तत्र विशेषणादयः क्रियाविशेषणं, कारकविशेषणं, उपसर्गश्च । यथा—साधु पचति, भीष्ममुदारं दर्शनीयं कटं करोति, एवमन्ये रथेन यास्यतीति । निपाताः कर्मप्रवचनीयाः अव्ययानि च यथा—अहं च त्वं च वृत्रहन् असांप्रतं जेतुमित्याख्यादयः आख्यातानि । कृतस्तद्धिताश्च यथा—स्मरसि देवदत्त काश्मीरेषु वत्स्यामः, रैपोषं पुष्यति, ब्राह्मणवद्ब्रवीति । सम्बोधनादयः आमन्त्रणमवधि भावलिङ्गं च यथा—हे देवदत्त भुक्त्वा व्रजतीति, स इति, संबन्धादयश्शेष इति उपपदम् । सहार्थश्च यथा—राज्ञः पुरुषः, कुशलं देवदत्तायेति, पुत्रेण सहायात इति । हेत्वादयो हेतुर्लक्षणं तादर्थ्यं च यथा-विद्यया यशः, कमण्डलुना छात्रः, यूपाय दार्विति । कथं पुनरयं हेतुः कारकाद्विशिष्यते ? 'द्रव्यादिविषयो हेतुः कारकं नियतक्रियम् ॥' यथा—बीजेन सस्यं, तपसा कृशः, अन्नेन वसति, व्रतेन ब्राह्मण्यं, कारकं यथा—देवदत्तः श्रद्धया तीर्थे हेमशतं निष्कं ब्राह्मणाय ददाति । यद्येवं द्रव्यादिविषयत्वेन क्रियायामनियत एव भवति । यथा-पुत्रेण सह गोमान्, पुत्रेण सह स्थूलः, पुत्रेण सह ब्राह्मण इति । नैवम् ; न हि सहार्थस्य द्रव्यादीन् प्रति निर्वर्तनभावश्शब्देनोच्यते । हेतोः पुनराश्रितव्यापारस्याऽपि तृतीयादिभिस्स विधीयत इति क्रियाविषयः करणात्कथं भिद्यत इति चेत्,

क्रिया यैः करणं तस्य दृष्टः प्रतिनिधिस्तथा । हेत्वर्थोऽपि क्रियाहेतुर्नच प्रतिनिधीयते ॥

तर्हि तादर्थ्यादभेदः । किमिदं तादर्थ्यं नाम ? कार्यस्य कारणं प्रति प्रयोजकत्वं तादर्थ्यं; विशिष्टः कार्यकारणभाव इति यावत् । यद्धि यदर्थं तन्नियोगतस्तस्य करणम् । यथा—अङ्गुलीयाय कनकमिति कथं तर्हि हेतोर्न भिद्यते ? यतः कारणस्य कार्यप्रस्तावयोग्यताहेतुत्वं कार्यस्य कारणं प्रति प्रयोजकं तादर्थ्यमिति । अयं च विशेषः कार्यवाचिन एव तादर्थ्ये चतुर्थी; कार्यवाचिनो निमित्तवाचिनश्च हेतोस्तु तृतीयेति । यद्येवं हेतुलक्षणयोर्हेतुलक्षणा तृतीया कनका त्प्राप्नोति । न च तादर्थ्यचतुर्थ्या बाध्यते विषयभेदात् ; कार्यवाचिनो तृतीया, चतुर्थी कारण-वाचिन इति कथं च संबन्धे विधीयमाना चतुर्थी कार्यशब्दादेव, न कारणशब्दात् । अपिच भिन्नकारणत्वात्संबन्धस्य यथा राज्ञः पुरुष इति द्विष्ठमपि संबन्धं राजशब्दादुत्पाद्यमाना चतुर्थ्युभयमपि संबन्ध उत्पत्स्यते, इति । नैवम् ; तस्मै तदर्थमिति सर्वनाम्ना योऽर्थः प्रतिपद्यते स एव स्वकारणापेक्षया प्रापितव्यतिरेकश्चतुर्थ्या संबध्यते । यथा—यदर्थमस्य मन्त्रः तदनेनाधि-गतमिति सर्वनामार्थ एव कार्ययोगि, तथेहापि तच्छब्दोपात्त एवार्थः प्रयोजनतया विपरिणतः; तदर्थं शब्दो नाभिधीयते । भावप्रत्ययान्तोऽप्यसौ कार्यगतमेव रूढविशेषाण्याचष्टे कार्यस्य कारणं प्रति प्रयोजकत्वं तादर्थ्यमिति । तत्कथं कारकस्य तादर्थ्यविभक्तिराशङ्क्येत ? कार्य-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

स्थयाऽपि चतुर्थ्योभयगतस्यापि संबन्धस्यावगतत्वात् अव्यतिरिक्तप्रातिपदिकार्थाभिन्नः कारणशब्दाद्भवति, न तु व्यतिरेकलक्षणा तृतीयेति। अयं च हेतुतादर्थ्ययोर्विषयः।

प्रातिलोम्यानुलोमाभ्यां हेतुरर्थस्य साधकः। तादर्थ्यमानुलोम्येन हेतुत्वानुगतं तु तत्॥

वासेनाधीते, अध्ययनेन वसतीति, या च यूपाय दारु, अध्ययनाय वसतीति। यस्तु मन्यते तदर्थतान्तविषयस्य पारार्थ्यरूपा कार्यप्रसवयोग्यता हेतोरनन्यार्थस्य तादर्थ्यं, तस्य तद्विषयस्येति अनन्यार्थस्येति विशेषणद्वयमपार्थं उभयत्राविशेषात्। यदि तावदर्थस्यानन्यार्थता तादर्थ्यं तदसत्। कनकस्य वलयादावपि सामर्थ्यं सङ्गातादथोक्तिधर्मेण तद्धेतावपि समानम्। न हि विद्याया यशोहेतुतां मुक्त्वा कार्यान्तरयोग्यतां ब्रूते; पारार्थ्यरूपेत्यपि न वचनीयं कार्यप्रसवयोग्यतेत्यनेनैव गतार्थत्वात्। ननु च नटस्य शृणोतीत्यादौ कार्यप्रसवयोग्यस्यापि नटादेः पारार्थ्येण विवक्षायां मा भूद्धेतुत्वमिति विशेषणं क्रियते। नैवम्; यथा उपाध्यायादधीत इति उपाध्यायादेः परार्थत्वेन कारकत्वं प्रयोजकत्वमेव तादर्थ्यमिति।

अथ लक्षणस्य का वार्ता? लक्षणमपि तादर्थ्यवद्धेतुविशेष एव। सिद्धो हि हेतुः कारको ज्ञापकश्च। तत्र कारकस्य स्वव्यापारानाश्रयणे हेतुरित्याख्या, ज्ञापकस्य लक्षणमिति पदार्थान्तरपरिच्छेदहेतुता हि लक्षणार्थः।

अनाश्रितेषु (तु) व्यापारे निमित्तं हेतुरिष्यते। आश्रयावधि भावं तु लक्षणे लक्षणं विदुः॥

क्वचित्तु हेतुरपि लक्षणम्। जटाभिस्तापस इति इत्थंभूतलक्षणं, अक्ष्णा काण इति विकारलक्षणं, कपिला विद्युदित्युत्पातलक्षणं, गोषु दुह्यमानासु गत इति भावलक्षणं, पचन्नास्त इति क्रियालक्षणं च व्याख्यातमिति। एकार्थपरः पदसमूहो वाक्यम्। तत्त्रिधा—संस्कृतं प्राकृतमपभ्रंशश्च। तत्र संस्कृतं श्रौतमार्षं लौकिकञ्च। तेषु श्रौतं द्विधा—मन्त्रब्राह्मणभेदात्। तत्र मन्त्रो यथा— तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चन्द्रमाः। तदेव शुक्रममृतं तद्ब्रह्म तदापस्स प्रजापतिः॥ ब्राह्मणं यथा— शंयो मनुष्याणां रागद्वस्समृद्धो भवति। तत्रान्येषामधिपतिः सर्वेषां मनुष्यकैः कामैस्संपन्नमतः। स मनुष्याणां परम आनन्दः।

आर्षं द्विधा। स्मृतिः पुराणं च। तयोस्स्मृतिर्यथा—

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते।
ते च स्वा चैव राज्ञस्तु ताश्च स्वा चाग्रजन्मनः॥

पुराणं यथा—

हिरण्यकशिपुर्दैत्यो यां यां दिशमुदैक्षत। भयभ्रान्तैस्सुरैश्चक्रे तस्यै तस्यै दिशे नमः॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

लौकिकं द्विविधं, काव्यं शास्त्रं च । तयोः काव्यं यथा—

कस्य नो कुरुते मुग्धे पिपासाकुलितं मनः । अयं ते विद्रुमच्छायो मरुमार्ग इवाधरः ॥

शास्त्रं यथा—

प्रकामधवलं यस्याश्चक्षुः पर्यन्तपक्ष्मलम् । नवनीतोपमं तस्या भवति स्मरमन्दिरम् ॥

प्राकृतं त्रिधा, सहजं, लक्षितं, श्लिष्टं च । तेषु सहजं द्विधा—संस्कृतसमं देश्यं च । तयोस्संस्कृतसमं यथा—

सरले साहसरागं परिहर रंभोरु मुञ्च संरम्भम् ।
विरसं विरहायासं वोढुं तव चित्तमसहं मे ॥

देश्यं यथा—

विप्प अपि आपु आणुणाहं षडरसमं परिहसन्तेई ।
वासअर विणडिओ विसं ललंख णावेसि ॥

लक्षितं द्विधा, महाराष्ट्रं शौरसेनं च । तयोर्महाराष्ट्रं यथा—

णमह अवड्ढिअतुंगं अविसारिअवित्थअं अणोणअगहिरं ।
अप्पळहुअपरिसळ्हं अणाअप्ररमन्थपाअडं महुमहणं ॥

शौरसेनं यथा— . . . . . . . . . .

श्लिष्टं द्विधा, पैशाचं मागधं च । तयोः पैशाचं यथा—

फनमथ चन अप्पकुवि अकाधी चरणकिपटि अपटि ।
पिप्पंतसु नखतप्पनेसु एतासतनुततरं रुतं ॥

मागधं यथा—

हदमाणुशमंशभोयणं कुंभशहाशवशाहिशच्छिदं ।
अणिशंअ पिबामि शोणिदं वलिशशदं शमलेण भोयदु ॥

अपभ्रंशस्त्रिधा । उत्तमो मध्यमः कनिष्ठश्च । तेष्वावन्त्यलाटीयादिरुत्तमः । तत्रावन्त्यो यथा—

एकदू असळोणी अळ आहरणसुसंठवी अच्छि उपलंपटं वीवडकहिम्मळं भट्टएवटपि अमइए ।
उणजाणिउं विरहातुरणजुरि अपमज्झ हरोदावणुदिण्णुवहिणे विण्णूरि अ ए ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

लाटीयो यथा—

हिरउ हरन्त हो चोरहोए भुजिदन्दुहले जप्पिउपणव्र सच्छिले विलोइ अउगणे ।
पह्लुपुणपिण गणत्थणि संथहउक्कपणु जव्चन्दाणभेदिज्जइ अहरहोदन्तपणा ॥

आभीरगौर्जरादिर्मध्यमः । तयोराभीरो यथा—

लवियव्फउ बीउदुद्धडाकउ हहाण एच्छसि पुतहोमत्थजिभु ।
जळद्हिडां उजं मे पि जवि आआसि ॥

गौर्जरो यथा—

अव अख्खो ञ्ची समुद्रुतरि सिलदुहि गरुकाणि ।
मन्दो हि प पिलहि अउउजंपरुच्चइतें व अणि ॥

काश्मीरपौरस्त्यादिः कनिष्ठः । तयोः काश्मीरो यथा—

कंवळि आळ एकं ते कुदुच्छलदन्तहि विठि सुद्धि एमं इवि आलसीलंति ।
सव अंगापिदुसरासहि खवाचि दुं फलिनन्तेकी आआसण अईदसि ॥

पौरस्त्यो यथा—

महणाहि अकुटुंबि सामइन्दीहिरेरेभाउ जपिहुरि । विण्णउजाएतां वव्इरिवामेक्केरेधूजे वासां ह्यावाथि ।
आंखीजणुकणांसहुंकाजाथितेहाथेश्चित उदूकराए । वळ आच्छइणी जीव उपाथरूस
अणइ भवणाँइ वाच्छरं ॥

तदेतत् समस्तमपि वाक्यजातमाख्यातोपाधेरेकादशप्रकारं विप्रथते । तद्यथा—एकाख्यातमनेकाख्यातमावृत्ताख्यातमनुवृत्ताख्यातं विपरिणताख्यातमेकार्थाख्यातं समुच्चिताख्यातं क्रमिकहिताख्यातमपेक्षिताख्यातमेकान्तराख्यातं निरन्तराख्यातमिति । तेष्वेकाख्यातं यथा—

वागर्थाविव संपृक्तौ वागर्थप्रतिपत्तये । जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ ॥

अनेकाख्यातं यथा—

यदेव रोचते मह्यं तदेव कुरुते प्रिया । इति वेत्ति न जानाति तत्प्रियं यत्करोति सा ॥

आवृत्ताख्यातं यथा—

जयत्यमलकौस्तुभस्तबकितांसपीठो हरिर्जयन्ति मृगलोचनाचलदपाङ्गदृष्टिक्रमाः ।
ततो जयति मल्लिका तदनु सर्वसंवेदनाविनाशकरणक्षमो जयति पञ्चमस्य ध्वनिः ॥

अनुवृत्ताख्यातं यथा—

चरन्ति चतुरम्भोधिवेलोद्यानेषु दन्तिनः । चक्रवालादिकुञ्जेषु कुन्दभासो गुणाश्च ते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विपरीताख्यातं यथा—

सोऽस्मिञ्जयति जीवातुः पञ्चेषोः पञ्चमध्वनिः । तेच चैत्रे विकीर्णेवा तक्कोलीकेलयोऽनिलाः ॥

एकार्थाख्यातं यथा—

विकसन्ति कदम्बानि स्फुटन्ति कुटजोद्गमाः । उन्मीलन्तिच कन्दल्यो दलन्ति ककुभानिच ॥

समुच्चिताख्यातं यथा—

तामवातारयत्पत्नीं रथादवततार च ॥

कृदभिहिताख्यातं यथा—

ततःकुमुदनाथेन कामिनोगण्डपांडुना । नेत्रानन्देन चन्द्रेण माहेन्द्री दिगलङ्कृता ॥

अध्याहृताख्यातं यथा—

यश्च निम्बं परशुना यश्चैनं मधुसर्पिषा । यश्चैनं गन्धमाल्याभ्यां सर्वत्र कटुरेव सः ॥

अनपेक्षिताख्यातं यथा—

कियन्मात्रं जलं विप्र जानुदघ्नं नराधिप । तथापीयमवस्था ते न हि सर्वे भवादृशाः ॥

एकान्तराख्यातं यथा—

तेनाद्रिबन्धो ववृधे पयोधिस्तुतोष रामो मुमुदे कपीन्द्रः ।
तत्रास शत्रुर्ददृशे सुवेलः प्रोचे जलान्तो जहृषुः सुधाशाः ॥

निरन्तराख्यातं यथा—

भ्रेमुर्ववल्गुः ननृतुर्जहर्षुर्जगुस्समुत्पुप्लुविरे निषेदुः ।
आस्फोटयांचक्रुरभिप्रणेदू रेजुर्ननन्दुः प्रययुस्समीयुः ॥

ननु च निरन्तराख्यातं समुच्चिताख्यातमेकार्थाख्यातमावृत्ताख्यातमित्यादयो वाक्यविकल्पा नोपपद्यन्ते, वाक्यकारो हि मन्यते । नास्त्येव तिङन्तयोस्संबन्धः । तथाच 'तिङ्ङ तिङः' (पा. ८.१.२८) इत्यत्रातिङ्वचनमनर्थकं समानवाक्याधिकारादित्यतिङ्वचनं प्रत्याचष्टे । नह्येकत्र वाक्ये द्वे तिङन्ते स्त इति, एवं लक्षणं करोति ; आख्यातं साव्ययकारकविशेषणं वाक्यम् । तत्राख्यातग्रहणं न कर्तव्यम् ; नह्यव्ययकारकविशेषणपदानि निबन्धनमन्तरेणावतिष्ठन्ते । आख्यातमेवैषां निबन्धनमिति लब्धे व्याख्याने पुनराख्यातग्रहणं आश्रितसङ्ख्याख्यातपदपरिग्रहार्थम् । यत्रैकमाख्यातपदमव्ययकारकविशेषणपदानि सन्निपतन्ति, तद्वाक्यं यथा स्यात्! अनेकाख्यातपदप्रयोगे तु [illegible] शकानिरासार्थमेकातिङ्वाक्य-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मिति वचनान्तरमारभते । तत्रेदं विचार्यते ; किमेकस्मिन् वाक्ये द्वयोस्तिङन्तयोस्संबन्ध एव नास्ति, उत सत्यपि संबन्धे द्वितीयं न प्रयुज्यते ? एकतिङ्वाक्यमिति पूर्वाचार्यसमथादनु । किञ्चिदाह । सत्यपि तिङन्तयोस्संबन्धे तिङन्तामन्त्रितयुष्मदस्मदादेशप्लुतादिकार्यव्यवस्थार्थमेकतिङ्वाक्यमिति पारिभाषिकमेव वाक्यलक्षणं क्रियते । किं कारणम् ? समानवाक्यार्थात् पदादुत्तरयोस्तिङामन्त्रितयोर्निघातस्स्मर्यते । 'युष्मदस्मदोः षष्ठीचतुर्थीद्वितीयास्थयोर्वा नावौ' (पा. ८.१.२०) वादयः आदेशा विधीयन्ते । 'वाक्यस्य टेः प्लुत उदात्तः' (पा. ८.२.८२) इति वाक्याचामन्त्यस्य प्लुतश्शिष्यते इति । तच्च तदोपपद्यते यदेकतिङ्वाक्यमिति पारिभाषिकं वाक्यलक्षणं क्रियते । अन्यथा 'समर्थः पदविधि' (पा. २.१.१.) रिति पदानां परस्परासामर्थ्ये वाक्यस्य चापरिसमाप्तौ सर्वथा न प्राप्नोति । तथाहि ; नद्यास्तिष्ठन्ति कूले वृक्षस्य लम्बते शाखायां, कः प्रिये मयि कोपः ? का सुभग प्रिया ते ? शालीनां ओदनं दास्यामीति मे माता ब्रवीति । आगच्छ भो देवदत्त कुग्रामं गच्छावः, ग्रामं यदि यासि रे न मामपि प्रतीक्षस्व । अत्र तिष्ठति नाकूलमभिसंबन्धान्न नदी, लम्बनेन शाखा न वृक्षः, क इत्यनेन कोपेन प्रिया, केत्यनेन तु प्रिया न सुभगा ते इति युष्मदस्मदर्थेन दानं न शालयः मे इत्यस्मदर्थे न मातावचनम् । आगच्छ देवदत्त ग्रामं यदि यासि रे इत्येतावति वाक्ययोः परिसमाप्तिः । किं तर्हि गच्छावो मामपि प्रतीक्षस्वेति ततश्च निघातादिकार्याणामप्राप्तिः । एकातिङ्परस्य तु पदसमुदायस्य वाक्यत्वे परंपरया यथाकथञ्चिदभिसंबन्धे निघातयुष्मदस्मदादेशा युज्यन्ते। 'युक्तयुक्ते चोपसङ्ख्यान' मिति युक्तेन वक्तव्यं भवति । एवं साकांक्षस्याऽपि पदकदम्बकस्य एकतिङवच्छेदेन वाक्यत्वप्रतीतौ वाक्यस्य टेः प्लुत इति वाक्याचामन्त्यस्योदात्तः प्लुत इति सिद्धो भवति ।

कश्चित्तु ब्रूते–नास्त्येव तिङन्तयोस्संबन्धः । स हि तिङन्तेषूपकल्प्यमानः षोढैवावकल्पते । विशेषणविशेष्यसंबन्धः, साध्यसाधनसंबन्धः, लक्ष्यलक्षणसंबन्धः, हेतुहेतुमत्संबन्धः, अवध्यवधिसंबन्धः, समुच्चयादिसंबन्धश्चेति । तत्र विशेषणविशेष्यसंबन्धस्सामानाधिकरण्येन वा स्यात् वैयधिकरण्येन वा । न तावत्सामानाधिकरण्येन पचति पठतीत्येतयोरत्यन्तमर्थभेदात् ; न हि पदार्थयोरत्यन्तभेदेऽभेदे वा विशेषणविशेष्यभाव उपपद्यते । न हि भवति आम्रश्चूतोऽश्वत्थ इति, यत्र तु नात्यन्तभेदो वा तत्रोपपद्यते यथा नीलमुत्पलमिति ।

ननु यथा प्रपचति स्तोकं पचति इत्यादावुपसर्गेण स्तोकादिना वाऽऽख्यातं विशेष्यते, तथाऽऽख्यातान्तरेणापि कस्मान्न विशेष्यते ? नैवम् ; अत्र यथा नीलवीरशब्दौ नीलत्ववीरत्वे विशेषणरूपेणाभिदधतौ उत्पलं पुरुषं च सामान्येनोपगृह्णीतः । न रूपपुरुषसामान्ययोर्वा नियतौ भवतः, उत्पलपुरुषशब्दावप्युत्पलपुरुषौ विशेष्यरूपेणाभिदधतौ नीलत्वं वीरत्वं च सामान्येनोपगृह्णीतः ; न तु सामान्ययोस्तद्विशेषणयोर्वात्मानं नियमयतः । परस्परोपश्लेषकृतयोर्विशेषणविशेष्य-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भावो भवति । नचैतत् पचति पठतीत्येतयोरुपपद्यते ; न हि नीलोत्पलादिवत् पचतिः पठतिः पचति वा पठतिरुपगृहीतुं शक्नोति ।

ननु चात्यन्तमभिन्नार्थश्च दृश्यते विशेषणविशेष्यभावः । अभिन्नार्थयोर्यथा—अधीते, अध्येति, भिन्नार्थयोर्यथा—प्रतिष्ठते, प्रस्सरति । नैवं, अधीते, अध्येतीत्येतयोर्यद्यपि धातुरुपसर्गं न व्यभिचरति ; व्यभिचरत्येवोपसर्गो धातुम् । अतश्शक्यतेऽन्वयव्यतिरेकाभ्यामर्थभेदः कल्पयितुं, यदर्थोऽयमधिरन्यत्र दृष्टस्तदर्थ इहापि भवितुमर्हति । अयंचाधिरन्यत्रोपरिभावार्थो दृष्टः, यथा- अध्यास्ते, अधिरोहतीति ते मन्यामहेऽप्यस्य स एवार्थ इति तस्मादधीङेव शब्दक्रियो ज्ञानक्रियश्चेति। अधिशब्दस्त्वेतमेवार्थमुपरिभावेन विशिनष्टि विशिष्टार्थक्रियश्चार्थवतां शब्दानां विधिपूर्वं विशब्दं तथाधीतार्थविषयविज्ञानमिति एतावानेवार्थोऽधिना विभज्यते ; इह तर्हि कथं प्रतिष्ठते, प्रस्सरति इति । नह्यत्र सत्यपि केवलप्रयोगे तिष्ठतेः स्मरतेर्वा पचतिवत्सामान्याभिधायित्वं, किं तर्हि विरोधिन्येव क्रिया गम्यते ? व्रजिक्रियास्मरणनिवृत्तिश्च व्यक्तंच प्रतिष्ठत इत्यनेन स्थानप्रारंभो नोच्यते । किं तर्हि गमनमेव स्मरतीत्यनेनापि स्मरणात् प्रारंभो नोच्यते ; पितुस्स्मरणारंभ एवेति नैष दोषः । शब्दोऽयं प्रपचतीत्यादिकर्मवचनत्वेन निर्ज्ञातोऽस्य विशेषतोदृष्टादनुमानादादिकर्म- वचनत्वमनुमीयते । तिष्ठतिश्च देवदत्तस्तिष्ठतीत्यादौ क्रियावचनाद्धातुत्वेन निर्ज्ञातः ; अतोऽस्य सामान्यतो दृष्टादनुमानाद्गमनार्थत्वमपि विज्ञायते । बह्वर्था अपि धातवो भवन्ति, 'वपिः प्रकरणे दृष्टश्छेदेऽपि प्रवर्तते' केशान्वपतीति । 'ईडतिश्च गतौ दृष्टः प्रेरणेऽपि प्रवर्तते । अग्निर्वा इतोपर्वमीहे ॥' करोतिरपूर्वप्रादुर्भावे दृष्टो निर्मलीकरणेऽपि वर्तते । पादौ कुरु, पृष्ठं कुरु, मा कुरु, उदरं स्नेहो हीयते, उन्मृदा न मृदोन्मृदा नेति गम्यते । तथा कटे कुरु, अश्मना नमितः कुरु, निक्षिपावक्षिपेति गम्यते । अयमपि च धातुत्वादनेकार्थो भवितुमर्हति ; एतेन स्मरतिरपि व्याख्यातः । न चैतन्न दृष्टं विरुद्धार्थावर्थौ तुल्यरूपेण शब्देनाभिधीयेते । तद्यथा— सन्निकर्षविप्रकर्षयोर्दृष्टमाराच्छब्देनाभिधानं—आराच्छत्रुमपबाधस्व दूरं, दूराद्दवीयो अपसेध शत्रून् । अतस्तिष्ठतिरेव गमनार्थः, स्मरतिरेव स्मरणनिवृत्तिक्रियः ; तद्विशेषश्चोपसर्ग इति युक्तमुक्तं वस्तुनोरत्यन्तभेदेऽभेदे वा विशेषणविशेष्यभाव इति यदाह—

"सम्भवे व्यभिचारे च विशेषणमर्थवद्भवति" इति ।

नापि वैयधिकरण्येनाख्यातस्य विशेषणं भवति प्राधान्ये सत्यधात्वर्थभूतार्थत्वात् । इह राज्ञः पुरुष इति भरणादिक्रियानिमित्तो व्यतिरेको विशेषसम्बन्धनम् । न च प्राधान्यस्यैव राजार्थस्योपजायते ; न च तथाख्यातार्थस्य प्राधान्यं सत्वाभावे वा संभवति । यत्रापि च क्रियापदं न श्रूयते मातुः स्मरति सर्पिषो जानीते इति तत्रापि सा क्रियासाध्यास्वेत्यनेन रूपेणाश्रियमाणसत्वभूतस्याप्रधानस्य मात्रादेरर्थस्य व्यतिरेकमुपजायते ; श्रूयमाणक्रिया विशेष- संबन्धनिमित्तं भवति । न चैतदाख्यातस्योपपद्यते, सत्वभूतत्वादेन निमित्तानिर्दिश्यतयास्येति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भोक्तुं गच्छति, पाकाय व्रजति भोक्ष्यामीति पचतिप्रभृतिषु यथा भिन्नधातुवाच्यत्वेऽपि दृश्यन्ते; यथा गन्तुं गच्छति, भोजनाय भुङ्क्ते, पक्ष्यामीति पचतीति।

सत्त्वायं तदर्थफलसाम्येनैकत्व एवोपपद्यत इत्यनेकार्थक्रियाभिहितानभिहितशक्तिप्रादुर्भावानिमित्तत्वात्। इह धात्रीं धयति, दात्रेण दाति, दाशाय दाशते, भीमाद्बिभेति, आसने आस्ते, शयने शेते, स्थाने तिष्ठति, प्रासादे प्रसीदतीति प्रत्ययविभक्त्योर्दर्शनादभिहितानभिहितशक्तिप्रादुर्भाव उपलभ्यते। सा चानैक्यनिमित्तं क्रियाभेदमन्तरेण न सङ्गच्छत इत्यनेका क्रिया भावाभिधानेऽपि यत्रादिभ्यो द्विवचनबहुवचनोपलब्धिः। इह खलु शुद्धेऽपि भावे यत्रादिभ्यः पाकौ पाकाः, उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्त इति द्विवचनबहुवचनोपलब्धिः। तच्च क्रियैकत्वे न युक्तमित्यनेका क्रिया कृदाख्याताभिहितायाः क्रियायाः सर्वसंख्यासामानाधिकरण्यात्। इह कृदभिहिताया आख्याताभिहितायाश्च क्रियाया भिन्नार्थानभिधायिभिस्संख्याशब्दैः सामानाधिकरण्यं दृश्यते। यथैकः पाकः द्वौ पाकौ बहवः पाकाः; एका उष्ट्रासिका आस्यते द्वे आस्येते बह्वय आस्यन्ते। तच्चैकत्वे क्रियाया न सांप्रतमित्यनेका क्रिया इह भवति निमन्तृप्रभृतीनामवधृतभेदपरिस्पन्दाश्रयकार्याभिनिवृत्तेः इह यासां क्रियाणामवच्छेदकधात्वर्थोपाधिभेदत्वादनेकत्वं प्रत्यविवादः, तासु ये भेदाश्रया धर्माः प्रसिद्धाः। तद्यथा— भोक्तुमिच्छति, भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, आमन्त्रये समाजमुत्सवमामन्त्रये इति समानधातुवाच्यास्वपि दृश्यन्ते; एषितुमिच्छति, भवेदपि भवेत्, स्यादपि स्यात्, निमन्त्रये निमन्त्रणार्थमामन्त्रये आमन्त्रणार्थमिति। तस्माद्भवेदाश्रयकार्यसंबन्धाद्भवितव्यम्। अनेकत्वमेकेन धातुना सर्वत्र भेदेनेत्यनेका क्रिया साध्यसाधनभावात्। इह साध्यसाधनयोः प्रसिद्धो भेदः प्रदृश्यते च। तच्चैकत्वे साध्यसाधनता क्रियाणां यथा—स इमान् पोषानपुषत्, तप्यते तपस्तापस इति। तच्चैकत्वे न घटते इत्यनेका क्रिया। तदेतदनेकत्वे क्रियायास्सर्वमसाधनं साधनभेदादेवोपचरितभेदाया एकत्वे वा तदुपपत्तेरभिन्नानामप्युपाश्रयादिभेदात्। भिन्नाकारात् प्रतीतदेशव्यपदेशश्च दृश्यते। यथेन्दोर्जलेषु ज्योत्स्नाजालेषु जलधराशासु दिशो व्यवस्थासु पृथक्त्वस्यार्थेषु बुद्धेर्विषयेषु विद्युतोऽब्देषु शब्दस्य च कन्दरेषु चित्रस्य नीलादिषु आकाशस्यावकाशेषु भावस्य भावेषु च यो भेदबुद्धिः; यथा च संपन्नो यवो यवेषु शुक्लस्तुरुष्केषु विनष्टस्सुराष्ट्रेषु दर्शनीयोस्तनेन्दसेनेषु अक्षिणी कलिङ्गेषु पटुर्भवान् पटुरासीत् पटुतर एष मार्गे कूपोऽभूत् कूपो भविष्यति प्रियो मन्युस्ते प्रियो न वयम्, मैथिली रामस्य दाराः, आः पवित्रं वरणा नगरं शिरीषाः रामः पाञ्चाला जनपदा इत्यभिन्नस्याऽपि जात्यादेरर्थभेदस्य भेदतो व्यपदेशः, तथा क्रियाया अपि कालयोगादयः साधनभेदाद्भविष्यन्ति; अनेकाधारसमवेतायाश्च युगपदेकेन ग्रहणं जातिवदुपपद्यते।

कृदभिहितानां तु शुद्धभावानां आख्यातवद्भिः क्रियाभिः द्रव्यवद्वैधर्म्यादयुक्तस्तद्धर्मोपनयः। कृदभिहितो हि भावो द्रव्यवत्प्रकाशमानो लिङ्गसंख्याकर्मादिशक्तीनामाश्रयो भवति; न त्वाख्यात-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वाच्यः तस्याः परिनिष्पन्नत्वेनाश्रयत्वानुपपत्तेः । तथाहि, यथा पाको वर्तते पाकं पचतीति शक्तिसंख्यादियोगः कृदन्तेषु दृश्यते, नैव तिङन्तेषु । नहि भवति, पचति वर्तते, पचति पश्यतीति ; ननु च भवति पश्यति, मृगो धावति, उत्पश्यामि कर्मणि द्विवचनबहुवचनान्युदाह्रियन्त इति धावतीनां दृशि कर्मत्वं केवलं त्वप्रातिपदिकत्वात् सुपोऽनुत्पत्तिः । तन्न ; यथा क्रियायाः क्रियमाणत्वादेव नैसर्गिकं च भवति पचति पक्ष्यति भवत्यपाक्षीदिति च दृश्यते । पचादीनां भवतेः कर्तृत्वं दृश्यते ; भवति पश्यति कर्मत्वं क्रियाविशेषणानां कर्मतयाऽवगम्यते । तदोत्पद्यमानत्वादेव गतौ कर्तृत्वमपि नैसर्गिकमेव । मृगो धावतीत्यादौ गम्यमानेतिशब्दोपसंहृतस्य वाक्यार्थस्य कर्मत्वं, न क्रियायाः । तस्मादशङ्कनीयः क्रियासकर्तृशक्तियोगा करणादियोगायोगाभ्यां व्यक्तमेव कृदाख्याताभिधेयभावयोर्मिथोवैधर्म्यमिति । तस्मादनेकार्थविषयया वीप्सयाऽनभिसन्धानात् सिद्धमेकत्वं क्रियायाः । शब्दप्रत्यययोरभेदाच्च, यत्राभिधानज्ञानयोः अत्यन्तमभेदस्तस्यैकत्वं सिद्धम् ; यथा जातेः प्रत्येकं च व्यक्तिविशेषाणां, अभिन्नौ च देशकालौ भेदे च क्रियायाः शब्दप्रत्ययौ दृश्येते, यथा च पचति पचतः पचन्तीति ; तस्माच्छब्दप्रत्ययहेतुः एका क्रिया ।

ननु च, जलचन्द्रादिदृष्टान्ते भेदव्यवहारे सन्देहः किं साधनमभेदाश्रयाणि क्रियायाः कालत्रययोगादीनि प्रत्ययव्यपदेशानि च भेदकार्याण्युत स्वभेदाश्रयाणीति । अत्रोच्यते क्रियायाः अभेदेऽपि साधनभेदात् द्विवचनबहुवचनोत्पत्तेरसंदेहो भाव्यः । इह भेदस्याभेदपूर्वकत्वात् भेदमभ्युपगतवतावश्यमभेदोभ्युपगन्तव्यः ; तस्य यस्याः क्रियाया एकत्वमभ्युपगम्यते तस्यास्साधनभेदाद्दृष्टो द्विवचनबहुवचनयोगः । यथा—परमाणुं पचतः, परमाणुं पचन्ति । अनेकत्वाभ्युपगमे च साधनस्याभेदे दृष्टमेकवचनमेव, भिनत्ति कुसूलमिति वचनभेदः । तस्मात्साधनभेदानुविधानाच्च क्रियायाः, क्रियाभेदानुविधानाच्च साधनानां साधनाश्रयाणि भेदकार्याणि, क्रियायाः न स्वाश्रयाणीति ।

कथं तर्हि, पच्येते ओदनौ पच्यन्ते ओदना देवदत्तेनेति कर्तृभेदे वचनभेदः ? यस्मिन् साधने लादयोऽभिधीयन्ते ? तद्भेदमनु धीयन्ते क्रियायाः क्रियाभेदं साधनानीत्यशङ्कनीयमेतत् । प्रदीपादिषु भेदाभेदयोरनात्यन्तिकत्वात् ज्ञानाभिधानयोरपि तथात्वेऽस्ति न तैर्व्यभिचारः । इतश्चानेका क्रियाया अभ्यावृत्तिभावात् बहुसंख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुजादयस्स्मर्यन्ते ; पञ्चकृत्वो भुङ्क्ते, चतुष्पचतीति तच्चाभेद एवोपपद्यते । न हि देवदत्ते गते, यज्ञदत्ते चायाते पुनरावृत्त इति व्यपदेशो दृश्यते च । तत्रैवायात इत्येका क्रिया समुच्चयाभावात् । इह भिन्नानां एकविषयसंपाते समुच्चयो दृष्टः ; देवदत्तस्य गौश्चाश्वश्च पुरुषश्च देवदत्तस्य यज्ञदत्तस्य विष्णुमित्रस्य च गौरिति । नच वक्तुरभेदे गुडतिलौदनादिवाक्यभेदात् क्रियाभेदाभ्युपगमेऽपि क्रियासमुच्चयो दृश्यते । देवदत्तः पठति पचति इति तस्मादेकक्रियासत्वभावनापत्तौ

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रविवेकः, एकत्वेनाभिधानात् । इह क्रिया सत्वभावं प्रतिपन्ना यदा साधनेभ्यः प्रविविच्यते, न भवति तदा द्विवचनादियोगः ; ब्राह्मणैरास्यत इति तस्मादेका ।

ननु च सत्वभावेऽप्येतदुपलभ्यते यथा गुडतिलौदनानां पाकः, ताम्रः पलाशेषु बभूव रागः, इति तन्न ; तस्याव्यभिचारात् ।

'यथा नृपाणां प्रणयाग्रदूत्यो विलासचेष्टा विविधा बभूवुः ॥'

व्यभिचारे किन्निमित्तमिति चेत् कृदभिधानमेव ; 'कृदभिहितो भावो द्रव्यवत्प्रकाशते ।' द्रव्यस्य च सत्यपि नानात्वे संबन्धिभेदादेव भेदावगतौ क्वचिदभेदाभिधानम् ।

ऊरुमूलचपलेक्षणमन्नन् यैर्वतंसकुसुमैः प्रियमेताः ।
चक्रिरे सपदि तानि यथार्थं मन्मथस्य कुसुमायुधनाम ॥

यथा च वेदवाक्यं—

'यत्पशुर्मायुमकृतोरोवा पद्भिराहते ।' इति ॥

क्वचित्पुनस्तद्विवक्षायां भेदेनैव यथा—

तासां मुखैरासवगन्धगर्भैर्व्याप्तान्तरास्सान्द्रकुतूहलानाम् ॥ इति ॥

ब्राह्मणैरास्यत इति सर्वदैकवचनमेवेति विशेषः, साध्यत्वात् । सिद्धस्य हि वस्तुनस्संख्यायोगो युज्यते, न साध्यस्यापरिनिष्पन्नत्वेनाश्रयत्वानुपपत्तेः । साध्या च क्रिया प्राधान्यतयास्माभिरभिधीयते तस्मान्न भेदसंख्ये इत्येका । एकशेषात् इह येषां सरूपशब्दाभिधेयानामनेकत्वं दृष्टं, तदभिधानानामेकशेषो दृष्टः । तद्यथा—व्यक्तिपक्षे ब्राह्मणाः पुरुषाः, इति । न च ब्राह्मणैरास्यते, पुरुषैर्गीयत इति क्रियाभिधानानामेकशेषो दृश्यते । स चायमेकशेषो व्यावर्तमानस्त्वव्याप्तमनेकत्वमपि गृहीत्वा व्यावर्तत इति एका क्रिया ।

ननु च कथमेकशेषाभावः न तिङन्तान्येकशेषं प्रयोजयन्तीति का पुनरत्रोपपत्तिः ? क्रियाप्रधानत्वमाख्यातानां, तदेव चिन्त्यते ; इह खलु क्रियाकारकयोः प्रधानोपसर्जनाभावेन वृत्तिसंसर्गेण चतुष्टयी गतिः । क्रिया वा क्रियाया न्यग्भवति यथा—चिकीर्षति अध्यापयतीति, कारकं वा आक्षिकः निष्कौशाम्बिः, कारके वा क्रिया यथा—पाचकः पचनीयं, क्रियायां वा कारकं यथा—पुत्रीयति उपश्लोकयति । आख्यातेषु चैषामन्यतोऽपि न प्रकारः ; तत्र हि साध्यक्रियाऽपि प्रकृतातमवती साधनतन्त्रा सव्यापारसाधना अपरिसमाप्ता पचादिभिरुच्यते सिद्धानि च साधनानि तिबादिभिरभिधीयन्त इति न कस्यचित्प्राधान्यमप्राधान्यं वा प्रत्युत प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूतः प्राधान्येनेति प्रत्ययार्थस्य प्राधान्यं स्यात् ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

एवं च द्विवचनबहुवचने अपि तन्निबन्धने उपपद्येते ; तन्न, सिद्धं साध्यायोपादीयते। सिद्धानि च साधनानि च तानि परार्थमुपादीयमानानि शेषतां लभन्ते। साध्यं तु परापकारेषु असमर्थमात्मसिद्धयेऽर्थान्तरमपेक्षमाणं तद्वैधर्म्यात् प्रधानभावमनुभवति। नन्वेवं ह्येकशेषाभावो न सिध्यति ; न ह्येकशेषाभावे प्राधान्येन गुणाभावेन वा किञ्चिदाश्रीयते। पचादयो हि क्रियावचनाः, तेषामेक एवानेकसाधनसमवेतानेकत्वेन विवक्षितां क्रियामभिधास्यति। तन्न, यद्यप्येको धातुः यथोक्तां क्रियां ब्रवीति तथा लकारस्यानेककर्मकर्तृविषयत्वात् प्रतिसाधनमुपपत्तावनेकत्वं प्राप्नोति। तदनुरोधाच्चार्थाः प्रधानानि प्रत्ययेभ्यो व्यावर्तन्त इत्येकशेषारम्भस्स्यात्। क्रियाप्राधान्येन तु गुणभूतयोः कर्तृकर्मणा . . . . स्सुत इति। एवं तर्हि भिन्नसाधनमभिन्नमर्थं वक्ष्यामीति एकशब्दत्वं, साधनभेदात्तु द्विवचनबहुवचनयोगः।

अन्ये तु ब्रुवते यद्येकस्याः प्रकृतेस्साधनभेदे भिन्नालङ्काराः प्रसज्येरन्, तथाऽपि यथैकस्थाने एकवचनमेव द्वयोर्द्विवचनं बहूनां भविष्यन्तीति। इदमेव हि द्विवचनबहुवचनयोः द्विवचनबहुवचनत्वं, यत्तदेकशब्दरूपमेकशेषशब्दवदनेकार्थाभिधाने समर्थमिति व्याख्यायते। इतश्च क्रियाप्रधानमाख्याताः करोतिना प्रश्ने निर्णयार्थत्वात्। किं देवदत्तः करोतीति प्रश्ने पचत्यास्ते इत्युत्तरं भवति, न त्वासकः पाचक इति। न चायं कर्तृप्रश्नः किं देवदत्त इति, विशेषस्याभ्यन्तरीकृतत्वात् भिन्नलिङ्गत्वाच्च। नापि कर्मप्रश्नः अनुज्ञाते व्यापारे कर्मप्रश्नासंभवात्। पचति पठतीति कर्तृविशेषमन्तरेण प्रतिवचने प्रष्टुः कृतार्थत्वात् पचति पठतीति चाख्यातस्य आख्यातेनायोगात्। यदि साधनं प्रधानं स्यात् यथा पाचकः पचतीति सामानाधिकरण्येन न योगो भवति, यथा पचति पठतीत्यत्रापि स्यात्। न चैतदस्त्यतः क्रियाप्रधानत्वमेवाख्यातानां क्रियाप्रधानत्वाच्च एकशेषारम्भः, तदनारम्भादेकत्वमेकत्वेन वीप्साभावः, वीप्साभावाच्च गन्ता गन्ता गच्छति गच्छतीति शब्दावृत्तिभेदः बुद्धिभेदाच्च क्रियायाः कारकेभ्यो व्यतिरेक इति।

ननु च पचति पचतः पचन्तीति धात्वर्थ एवाऽयं, न क्रिया। तन्न, धात्वर्थस्य प्रत्ययार्थस्यैवावच्छेदकत्वाद्धात्वर्थात्तु क्रियायाः पृथक्त्वं साध्यमानमप्रधानव्यपदेश्यतायामेवं संतिष्ठते। यथैव तर्हि कारकभेदेऽप्यभेदः क्रियायास्तथा धात्वर्थभेदेऽप्यभेद एवास्तु, सत्यमेतत्। किंतु वस्तुनः सर्वथैकत्वमनेकत्वं वोच्यमानं भेदाभेदनिबन्धनं लोकव्यवहारं सर्वमतिक्रामति। तस्माद्भेदमभेदं वा अभ्युपगच्छता व्यवहारप्रसिध्यर्थमभेदो भेदश्चाभ्युपगन्तव्यं कस्यचित् किञ्चिन्मुख्यं किञ्चिदौपचारिकं सर्वो हि भेदवादी निरुपकारेष्वयश्शलाकपदसंबन्धेष्वन्योन्यव्यावृत्तेषु भेदेषु तदेवेदमितिप्रत्ययस्य अभेदादेकत्वमाश्रित्य लौकिकव्यवहारमनुगच्छति। एकत्ववादी च भेदाधिष्ठानामिव भवतां सर्वां वृत्तिं सर्वं च विशेषशब्दव्यवहारं धर्मान्तरसंसर्गपूर्वकं लोके व्यवस्थितं मन्यमानो लोकमनुगच्छन् अभिन्नमपि भेदैरेव निदर्शयति। तस्माद्भिन्नधात्वर्थावच्छिन्ना भिन्नाऽपि क्रिया भिन्नैवेति एतेनैतदपि संगृहीतं भवति। व्रजातिपचत्यस्तीति स्वेतत इत्यादौ प्रत्ययार्थधात्वर्थयोरुद्भापावापा-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भ्यामन्यत्वेनावधारितो धात्वर्थावच्छिन्नः; परिच्छिन्नकालः कालपरिच्छिन्नो वा उपसर्गादिभिरुपस्कृतः प्रत्ययार्थोपकारः कारकैरसंख्यशक्तिभिरसंख्योपध्युपकृतैरुपक्रियमाण उपक्रमप्रभृत्यवमर्शपर्यन्तमन्तः-प्रतिभया साकल्येनोल्लिख्य साध्यत्वेनाध्यवसितः तथा सूपभृतोबहिर्निष्पन्ना प्रक्रान्तक्रमरूपावयव-समुदायात्माऽनपेक्षितान्तरालक्रियान्तरोपनिपातस्तथाविधावयवो वा पुरुषव्यापारः क्रिया । यथोक्तविशेषणोत्पन्नधात्वर्थो वा साध्यफलनिष्पत्तिपूर्वक्षणोपलभ्यमानतदवयवो वाऽवयवसमूहोप-लभ्यमानैकाकारप्रत्ययनिमित्तजातिविशेषो वा पूर्वावयवोपकृतान्यावयवप्रतीयमानजातिप्रादुर्भावो वा धात्वर्थव्याप्रियमाणकर्तृकर्मणोस्स्वव्यपदेशनिमित्तसत्तासंबन्धो वा कर्तृकर्मसत्ता वा तद्व्यापारा-विष्टधात्वर्थावयवसामान्यं वा तथैवोपलभ्यमानधात्वर्थावयवव्यक्तयो वा व्याप्रियमाणेषु स्वपरा-त्मनोः पूर्वस्वरूपविलक्षणरूपान्तराभिमानो वा तत्रैव च तयोस्तथाविधाभिन्नस्वकारणसत्तासंबन्धो वा बुद्धिसत्ताभावेषु प्रत्यस्तमितरूपमनेकबुद्ध्यनुस्यूते बुद्धिसामान्यं वा क्रियाशब्देनाभिधीयते । अपिच—

यावत्सिद्धमसिद्धं वा साध्यत्वेन विवक्षितम्। आश्रितक्रमरूपत्वा त्तत्क्रियेत्यभिधीयते ॥

स च कार्यानुमेयत्वात् परोक्ष इत्येके । गच्छतिपचत्यादिप्रत्ययेषु प्रत्यक्षेण, देवदत्तादि-स्वरूपेऽतिरिक्तक्रियातत्वानुपलब्धेः । य एव देवदत्तात्मा तिष्ठन् प्रत्ययगोचरः चलतीत्यपि संवित्तौ स एव प्रतिभासते । किंतु चलतीति प्रतीतिः संयोगविभागमालम्बते, संयोगविभागः कदाचिदेवोत्पद्यमानः परिदृश्यमानपदार्थस्वरूपातिरिक्तं कारणमनुमापयति, यच्च कारणं स परिस्पन्दप्रयत्नादिरूपः पुरुषव्यापारोऽतीन्द्रियः क्रियेति ।

तदनुपपन्नमित्यन्ये, चलतीत्यादिप्रत्ययानां प्रत्यक्षत्रयावलम्बनत्वात् । तथा च न चलतीति प्रतीतेस्संयोगविभागालम्बनमव्याप्त्यादिप्रसङ्गात्। तत्राऽकाशे विहङ्गमो गच्छतीति प्रतीति र्न स्यात्, संयोगविभागयोरग्रहणात् । न च द्वयोर्विहायसोस्संयोगविभागौ प्रत्यक्षौ प्रत्यक्षेतरवृत्तित्वात् वायु-वनस्पतिसंयोगविभागवत् । अथ विततालोकावयव्याकाशः तत्संयोगविभागौ च पक्षिणः प्रत्यक्षौ तन्न, सन्तमसेऽपि खद्योतविद्युतोः क्रियाबुद्धेः । न च तमो नाम वस्तुस्वरूपमस्ति, भूकंपे च कंपते वसुंधरेति च ज्ञानमस्ति । संयोगविभागमस्तीत्यतिव्याप्तिः संयोगविभागोपजनप्रबन्धेऽपि तयोर्वर्तमानयोरेव ग्रहणं तौ च गत्वाऽपि स्थिते गवादौ स्त इति । तत्रापि गच्छतीतिज्ञानप्रसङ्गः निश्चले च श्येनसमवायापायपरंपरावति वध्यशूले प्रवाहजलजाशेषविशेषमालहारिणि सरित्कूले रङ्गतुरङ्गमसंयोगविभागश्रेणिमति च बाह्यालिन्दमहीतले चलतीति प्रत्ययः प्राप्नोति । अथ क्रिया-जन्यत्वं संयोगविभागजानां तत्रैव चलतीति श्येनादौ प्रत्ययो न निष्क्रिये शूलादाविति तर्हि क्रियावयवव्यतिरेकानुविधानात् क्रियालंबन एवाऽयं प्रत्ययो, न संयोगवियोगालंबनः ।

किञ्च नित्यपरोक्षायां क्रियायामिदमपि न ज्ञायते ? किं शूलकूलमहीतलक्रियाजन्यत्वं संयोगविभागानां, किं वाऽन्येन जलतुरगक्रियाजन्यत्वमित्यतिव्याप्तिः संयोगविभागालंबनत्वे च

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

संयुज्यते वियुज्यत इति च प्रतीतिभ्यां न चलतीति यथाविषयं प्रत्ययोत्पादादनिर्ज्ञाने जलस्य आलम्बनता स्यात् । चलतीति च वर्तमानाभासः प्रत्ययस्संयोगविभागानुमेयत्वेन संभवति । तथाहि—संयोगान्तरं कर्मेति । न च संयोगो वर्तमानां क्रियामनुमापयति, विभागो विकास्यत्वादात्मनः प्राक्कालीन इव कारणं गमयति । कारणस्य हि सत्वं प्राक्कालीनमेव कार्योपयोगि न तुल्यकालं, तदानीं तस्य सिद्धत्वात् । अतः कार्यात्कारणभूतां क्रियामनुमिमानो भूतामेवानुमिमीते न वर्तमानाम् । तस्मात्संयोगविभागाभ्यां क्रियानुमाने वर्तमानाभासश्चलतीति प्रत्ययो न संभवतीत्यसंभवः । न च नित्यपरोक्षक्रियानुमानमपि शक्यं कार्यं कारणपूर्वकमिति संबन्धग्रहणानुपपत्तेः । न हि द्रव्यमिश्रं कारणं; अपि तु क्रियाविशिष्टं क्रियायाश्च परोक्षत्वान्न तदानीमिष्टद्रव्यकारणग्रहणमनुघटामिति घटादावपि दुर्घटाव्याप्तिप्रतीतिः; तस्मान्न कार्यानुमेया क्रिया। अपितु उत्क्षेपणादिभेदवतः परिस्पन्दरूपस्य कर्मणः प्रत्यक्षेणोपलम्भात् प्रत्यक्षैवेति। एतेन पचतीति प्रतीतिरपि प्रत्यक्षक्रियालंबनैवेति व्याख्यातम् । तत्र हि पचत्यादिक्रियाबह्वयः प्रतीयन्ते ; देवदत्तश्चलति, चुल्ली ज्वलति, स्थाली उर्वायते, वयस्यः कथयति पिधानमपिधत्ते, तण्डुलानि विक्लिद्यन्ति, दर्व्यपविध्यति, ओदनस्सिध्यति, इति ।

ननु च पाको नाम धात्वर्थः परिदृश्यमानदेवदत्तादिव्यापारव्यतिरिक्त एषितव्यः, तदन्तरेण फलनिवृत्तेरभावात्; तदभावे च किमधिकृत्य कारकाणि संसृज्येरन् । अत्रोच्यते, यं तमेकं पाकं नाम धात्वर्थं चलनादिभ्योऽतिरिक्तं क्रियेति मन्यसे, स किं वस्तुधर्मः ? तत्कार्यं वा, तत्र वस्तुधर्मत्वे रूपवज्जातिवद्वाभ्युपगम्यमाने यावद्वस्तु सर्वकालं वा फलनिष्पत्तिप्रसङ्गः । तत्कार्यत्वे सति स किं सकलकारकनिष्पाद्यः, एकैककारकनिर्वर्त्यो वा । तत्राद्यपक्षे एकैकं भवेत् कारकमक्रियं एकैकनिष्क्रियत्वे तु साकल्येऽपि कार्यत्वाद्व्यापारान्तरकल्पनायामनवस्था । पक्षान्तरे तु क्रियामिव फलमपि निष्क्रियाण्येव कारकाणि कुर्युरिति किं क्रियया । ननु करोतीति कारकं सत्यं करोति फलमनुक्रियाम् । ननु करोतीति यद्ब्रूषे सेयमुक्तैव क्रिया । चैत्रः कटं करोतीति चैत्रस्यैव कटस्यैव करोतेरप्यर्थो वाच्य एव । उच्यते परिस्पन्द एव भौतिको व्यापारः, करोत्यर्थः । न हि वयं परिदृश्यमानं परिस्पन्दात्मकं व्यापारमपह्नुमहे । प्रतिकारकं विचित्रस्य चलनादेर्व्यापारस्य प्रत्यक्षेणोपलम्भात् । अतीन्द्रियस्तु तदतिरिक्तः करोत्यर्थो नास्तीति ब्रूमहे । क्रियातीन्द्रियत्वे हि तद्योगकृतं कारकत्वमधिगच्छन्तः फलार्थिनस्तदुपाददीरन् ।

तावदेव विनिश्चित्य तदुपादीयतेऽर्थिभिः । तदेवोपाददानैश्च फलमप्यतिगम्यते ॥

कारकत्वं च पक्षेऽस्मिन्नास्ति किञ्चिदतीन्द्रियम् । कारकत्वं स्वरूपस्य सहकार्यादिसन्निधिः ॥

निर्व्यापारस्य नन्वस्य को गुणस्सहकारिभिः ।
व्यापारयोगिनोऽप्यस्य को गुणस्सहकारिभिः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

बुधव्यापार एवैष सर्वे संभूय साध्यते ।
किं फलेनापराद्धं वः तद्धि संभूय साध्यताम् ॥

तस्मात्कारकचक्रेण चलता जन्यते फलम् । न पुनश्चलनादन्यो व्यापार उपलभ्यते ॥

चलन्तो देवदत्ताद्यास्तदनन्तरमोदनम् । एतावद्दृश्यते तत्र न त्वन्या काचन क्रिया ॥

क्रियानिमित्तसंसर्गवादिनोऽपि द्वयी गतिः । सत्यां क्रियायां संसर्गस्संसर्गे सति वा क्रिया ॥

अत्राऽपि पक्षे पूर्वस्मिन् संसर्गः क्वोपयुज्यते । तथा सति फलं सिध्येत्काष्ठादेः केवलादपि ॥

संसर्गात्तु क्रिया सिद्धा पुनरेकैकमक्रियम् । तथा च सति नैधांसि ज्वलेयुः पिठरान्विताः ॥

ज्वलन्त्येधांसि न पुनः पचन्ति पिठरान्विताः । पिठरे सत्यपीमानि ज्वलन्तीत्येव मे मतिः ॥

तस्मात्क्रियान्तराभावात्काष्ठाम्बुपिठरादयः । संसृज्यन्तां फलायैव किमदृष्टेन कर्मणा ॥

ननु च फलं सिद्धं साध्यं वा ; किञ्चातः सिद्धं चेत् कारकान्तराण्यपि सिद्धानीति संसर्गाभावः । अथ साध्यं सैव कारकव्यापारव्यतिरिक्ता क्रियेति । तन्न, फलस्य क्रियात्वानुपपत्तेः । ओदनो हि फलं, न चासौ क्रियाणां विप्रतिपत्तिः ; पाकस्तर्हि कः ? पचेर्वाच्यः, शून्यतैव युक्ता उच्यते—समुदितदेवदत्तादिकारकनिकरपरिस्पन्द एव विशिष्टफलावच्छिन्नः पाकः । स एव च पचेरर्थः ; देवदत्तादिक्रिया हि चलनज्वलनादिरूपाः पृथक्तथैवावभासन्ते, समुदितासु सत्यः फलान्तरावच्छेदाद्रूपान्तरेण पाकादीनामपस्फुरन्ति, व्यपदिश्यन्ते च ; तथा देवदत्तः पचतीतिवत् काष्ठानि पचन्ति, स्थाली पचतीत्यपि व्यपदेशो भवति । ननु च यथा स्थाली पचति काष्ठानि पचन्तीति दृश्यते । नैवम् ; ओदनः पचति तण्डुलाः पचन्तीति सत्यमेतत् । कारणं तु वाच्यं किं तदिति चेत् पचेरकर्मकत्वक्रियात्वमेव ।

नन्वोदनस्य तण्डुलानां वा कर्तृत्वं न तूभयोस्संभवति । नैवं, तण्डुलानोदनं पचतीत्यपि व्यपदिश्यते ; न च कर्मणस्स्वतन्त्रता युक्ता, तदभावाच्च न कर्तृत्वनिबन्धनः पचतिव्यपदेशः स्वातन्त्र्ये वा कथं कर्मकर्तुः कर्मवत् न कर्तृप्रत्ययभावात् ।

नन्वेवं सति, ओदनतण्डुलानां निवृत्तिविकारयोरस्वातन्त्र्यात्सिध्यति ओदनोऽपि क्रियन्ति तण्डुला इत्यपि न स्यात् । तन्न, निवृत्यादिषु तत्पूर्वमनुभूय स्वतन्त्रतां कर्त्रन्तराणां व्यवहारे कर्म संपद्यते पुनः । भवतु नाम, तण्डुलानां सिद्धानां कथञ्चिदेतत्, ओदनस्य तु साध्यस्य नोपपद्यते ? नैवं, भवत्यर्थे सर्वस्य कर्तृत्वात् भवत्यर्थश्च सिध्यतीति न दोषः ।

यद्योदनो न पक्तव्यः पक्तव्यो यदि नोदनः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा— शाटकश्चेन्न पातव्यो पातव्यश्चेन्न शाटकः ॥ अत्रोच्यते ।

अन्तस्थत्वं बहिस्थत्वं निष्पत्तौ द्वयमिष्यते । अन्तस्थत्वं पुरस्कृत्य बहिस्थत्वं प्रकाशते ॥

द्वयी सत्ता पदार्थानां बाह्याचाभ्यन्तरीति च । आन्तरी व्यवहारार्था बाह्यात्वर्थक्रियां प्रति ॥

अन्यथा ह्यङ्कुरो जायत इत्यपि न स्यात् । अत इदमुक्तम्; उपक्रमप्रभृत्यपवर्गपर्यन्तमन्तःप्रतिभया साकल्येनोल्लिख्य साध्यत्वेनाध्यवसितः पुरुषव्यापारः क्रियेति । न च पुरुषव्यापारस्य क्रियात्वं, रथो, गच्छति, कूलं पततीत्यादिप्रयोगाभावः उपचारो वा । पुरुषशब्देनेह प्रथममध्यमोत्तमलादेशं त्रिकाभिधेययोः कर्तृकर्मणोरभिधानात् । न चैवमेतद्व्यापारयोरेव क्रियात्वं फलाभिधायित्वेन कारकोपलक्षणत्वात् ।

यथा च भागाः पचतेश्चलनज्वलनादयः । चलनज्वलनादीनां ज्ञेया भागास्तथाऽपरे ॥

तथाहि । देवदत्तश्चलतीत्यत्र किं प्रतीयते ? युगीमादत्ते, उदकमासिञ्चति, तण्डुलानावपतीति । एवं कारकान्तरव्यापारेष्वपि द्रष्टव्यं; न तु देवदत्तादेर्भौतिको व्यापारः आत्मव्यापारपूर्वको भवितुमर्हति । नैतदेवम्, नह्यात्मनो व्यापारः किञ्चिदस्ति इच्छाद्वेषपूर्वकप्रयत्नवशादेव स भौतिकव्यापारकारणतां प्रतिपद्यते । चलतीतिप्रतीतिवत् पचतीति प्रतीतिरपि प्रत्यक्षक्रियालंबनैवेति अत्रानुमेयक्रियावादिनस्समादधते ।

अस्तु नाम देवदत्तादिकारकनिकरपरिस्पन्दसमुदायः क्रिया । किन्तु पचतीत्यादावधिश्रयणावचनविचटनादीनां किमायुष्मान् क्रियात्वं मन्यते, किमर्थं सर्वाण्येवेति ? ओमिति ब्रूमः । पृच्छामि चायुष्मन्तं किमधिश्रयणादयः क्रियाव्यपदेशमेकशो वा लभेरन् । न तावदेकशः, क्रमरूपाभावात्; एतच्च तत्क्रियायाः क्रियात्वं, यदुत साधनैस्साध्यमानता क्रमरूपोपादानञ्च । न चैकस्य क्रमस्संभवति, अवश्याभिधेयश्चैतदुपात्तक्रमस्साध्यतयाऽभिधीयमानपदार्थः क्रियेति । अन्यथा हि पाकादीनां उपसंहृतक्रमाणामपि क्रियात्वप्रसङ्गः । ते हि पर्यवसिताः स्वरूपतयोपसंहृतक्रमा एव स्वशब्दैरभिधीयन्ते । तेषां पूर्वापरीभावविरहान्न क्रियात्वम् । अत एव ते साधनभावेन तैश्शब्दैरुपादीयन्ते, न साध्याभावेन । पाकं करोतीत्यादौ हि साधनविशेषनिबन्धनाविभक्तिरुपलभ्यते, द्वितीयानिवृत्तिरूपं च साधनमुपपद्यते । नन्वेवं, अस्ति विद्यते तिष्ठन्त्यादीनामपि न क्रियात्वं प्रसजेत्, यावता नेहापि क्रम उपलभ्यते । नैवम्, अत्रापि क्रमस्य प्रतीयमानत्वात् । तथाहि—

कालानुपाति यद्रूपं तदस्तीत्यपदिश्यते । परितस्तु परिच्छिन्ना भाव इत्येव कथ्यते ॥

एवं विद्यते तिष्ठतीत्यत्रापि द्रष्टव्यम्; कालाधिकारे चैतद्विशेषतो वर्णयिष्यामः । नापि गणशः क्रमजन्मतधिश्रयणादीनामुपलम्भः ... संभवात्... समूहानुपपत्तेः । तदभावे च

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कथमिव भिन्नेषु भिन्नशब्दो वर्ततां पचतीति । उच्यते, क्रमोपजातावयवपरिच्छेदप्राप्तसंस्कारान्तं हि यदा सकलं क्रियाकलापत्तेः कलयति, तदा प्रत्ययः परिवर्तिसमुदाय एककार्यत्वादाहितभेदः पचतीत्यादिशब्दव्यपदेशनिमित्तं भवति । तथाहि, ओदनादिकार्यक्रियाकलापस्तिरोधाय भेदमभेदेन व्यपदिश्यते । पचतीति फलस्य च सकलक्रियावयवसाध्यत्वात् साधनभावेनापि स एवाऽपेक्ष्यते । तदनन्तर्गतास्त्वधिश्रयणादयः प्रत्येकं फलमभिनिर्वर्तयितुमपर्याप्ताः पर्याप्तस्य समुदायस्य रूपसंपादनार्थत्वात्समुदायं प्रति गुणभूता विज्ञायन्ते । तदाह–

गुणभूतैरवयवैस्समूहक्रमजन्मनाम् । बुद्ध्या प्रकल्पितो भेदः क्रियेति व्यपदिश्यते ॥

यद्येवं पचतीति व्यपदेशो नोपपद्यते धातूपादानातीता न चानागता तदा वर्तमानकालविहितः प्रत्ययः प्रयुज्यते । न चाऽस्य क्रियाप्रतानस्यैयं व्यवस्था संभवति, अधिश्रयणादीनां पूर्वापरीभावनियमात् ; न चैकः क्रियाभागः पचतिशब्दनिबन्धनः शब्दशक्तिस्वभावात् । न ह्युपात्तक्रियावयवार्थप्रत्यायकश्शब्दो यथाभूतमर्थं प्रत्याययति ; ततः कथमेकस्य वर्तमानकालतां प्रत्ययोऽनुरुध्येत ? नैतदस्ति, शब्दशक्तयो हि भिन्नरूपामभिन्नामर्थव्यक्तिमुपात्तभेदान् दर्शयन्ति, यतः पूर्वापरीभूतावयवसमुदायावग्रहरूपा बुद्धिर्यथावगृहीतं समुदायाकारमवयवेषु प्रत्ययस्येति तेऽवयवाः प्रत्ययेन समारोपितसमुदायानुरूपाः पचतिशब्दवाच्यास्सन्तः स्वरूपसन्निधानात्त वर्तमानादिव्यपदेशमनुभूय प्रत्ययविशेषोत्पत्तिनिमित्तं भवन्ति । तथा हि, अभिसमीहितफलः क्रियायां फलोपजननसाधनभूतायां वर्तमानः पुमान् समुदायमेवाधाय चेतसि तास्ववयवक्रियासु प्रवर्तते । ततो ह्यस्य समुदायाभिसन्धिसमुत्थापिताः क्रियाभागाः समुदायसंपादनार्थत्वात् समुदायरूपेणाध्यवसीयन्ते । तथाऽध्यवसितक्रियारूपैस्तु तस्य क्रिया क्षणस्य सन्निधानाद्वर्तमानकालविहितः प्रत्ययः प्रयुज्यते पचतीति । अत्र चोत्पन्नमात्रप्रयुक्तत्वात् सर्वे क्रियावयवा वर्तमाना न संभवन्तीति स्फुटमेवावसीयते ; किन्तु प्रत्येकं समुदायिषु समुदायाध्यासेन प्रयुज्यते पचतीति । अधिश्रयणाद्यवयवक्रियासमुदायवचनेषु पचादिषु यस्मिन्नवयवेऽध्यारोप्य समुदायोऽधिश्रयणादिः विक्लित्यन्तः प्रत्याय्यते, तत्कालप्रत्ययोऽनुवर्तते । तत्र यदा वर्तमानावयवे समुदायाध्यासस्तदा पचतीति भवति । यदा तु भूतभविष्यतोस्समूहारोपणे तदाऽपाक्षीत् पक्ष्यतीति । तदुक्तम्—

समूहस्स तथाभूतः प्रतिभेदं समूहिषु । समाप्यते ततो भेदे कालभेदस्य संभवः ॥

समुदायस्य च समुदायिषु प्रत्येकपरिसमाप्तौ निदर्शनं, ग्रामो दग्धः, पटो दग्धः, इति । यदि ह्येकस्मिन्नंशे समुदायो न स्यात्, पाणिमात्रस्याङ्गुलिमात्रस्य वा चण्डालत्वविरहात् चण्डालपाण्यङ्गुलिस्पर्शेनैवोच्येत चण्डालस्पृष्ट इति । न चाङ्गविकारेणाङ्गिनो विकृतिर्लक्ष्यते, अक्ष्णा काण इति । तदुक्तम् ; अवयवे हि स्पृष्टे समुदायोऽपि स्पृष्टो भवति ; अवयवे हि कृतं लिङ्गं समुदायस्यापि विशेषकं भवति ; यश्च समुदायः सोऽवयवान्न व्यभिचरति । तस्य विशेषकं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा—गोस्सक्थनि कण्ठेऽपि कृतं लिङ्गं गोरेव विशेषकं न गोमण्डलस्येति । तदेवमुक्ते किमुक्तं भवति उपात्तक्रमाधिश्रयणादिविक्लित्यन्तानामवयवानां समुदायः पचतिक्रियेति ? तर्हि, चिरं जीवतु भवान् भवतैव प्रतिज्ञाता नैव क्रिया प्रत्यक्षेति । तस्मादुपात्तक्रियां क्रियावयवास्तदस्य क्रियासङ्घातस्य केचिदवयवा निवृत्ताः, केचिदनिवृत्ताः, कश्चिदेव प्रत्युपस्थितः । उपस्थितविषयाः चक्षुरादयः, ततोऽथ क्रियाकलापादयः प्रत्यक्षयितुं चक्षुरादिभिरभिसंबन्धात् न व्यतीतानागतरूपस्यासतः क्रियावयवस्य सदासदानुपातिना कारणग्रामेण संबन्धो, न वाऽनधिगतेन्द्रियसंबन्धस्य पदार्थस्य दर्शनपरिच्छेद्यता संभवति । तदुक्तं—

क्रमात्सदसतां तेषामात्मनो न समूहिताः । सद्वस्तुविषयैर्यान्ति संबन्धं चक्षुरादिभिः ॥

दर्शनाभिमानः कथमिति चेत्, यथा गौरश्व इत्येवमादिषु पदेषु गकारादयो वर्णभागाः क्रमरूपानुविधायिनो व्यक्तावुपजने वा प्राप्तयौगपद्यासङ्घातरूपेण न पार्यन्तेऽवधारयितुं, इन्द्रियायत्तया बुद्ध्या तस्याः प्रत्युपस्थिताक्षरावसायशक्तेः पूर्वोत्तरभागयोरसंस्पर्शात् । समभिहितावयवपरिच्छेदप्रापितातिशयास्तु बुद्धयः स्वानुरूपं संस्कारपरंपरामन्ते समालोचितविशेषवर्णभागामुपजनयन्ति तस्यामुत्कीर्णबुद्धिमिव तत्पदं समुदायात्मना निरूप्यते । तदाह—

यथा गौरिति सङ्घातस्सर्वो नेन्द्रियगोचरः । भागशस्तूपलब्धस्य बुद्धौ रूपं निरूप्यते ॥

काल्पनिकस्तु युगपद्ग्रहणाभिमानः प्रत्यक्षभ्रमनिबन्धनम् । यथाऽलातस्य विद्धविश्वशते देशे नैरन्तर्या न परिवृत्तिरूपमपि रामेणावधारयन्नयनावसितकालभेदो युगपत्सकलदेशव्यापि परिच्छिन्दन्नध्यवसति, चंक्रमिति यथा क्रमवन्तः क्रियाभागाः क्रमेणैवावसिता लघुतरं परिवर्तित्वादनवधृतकालभेदैर्युगपदेवाध्यवसीयन्ते ; यथाऽध्यवसायं च दर्शनाभिमानमुत्पादयन्तः प्रत्यक्षव्यवहारं वर्तयति । यदुक्तम्—

इन्द्रियैरन्यथाप्राप्तौ भेदांशोपनिपातिभिः । अलातचक्रवद्रूपं क्रियाणां परिवर्तितम् ॥

अप्रत्यक्षैव तु क्रिया । यदाह महाभाष्यकारः – क्रियाणामेवमत्यन्तापरिदृष्टा अशक्या निदर्शयितुं, यथा गर्भो निर्लुठितस्यासावनुमानगम्येति । ननु प्रत्यक्षप्रवृत्तौ संबन्धग्रहणाभावात् कथं क्रियाविषयेऽनुमानं वर्तते ? नैष दोषः, धातुवाच्यस्य समूहस्य युगपदसन्निधानात्प्रत्यक्षत्वम् । एकैकस्य तु लक्षणस्य प्रत्यक्षत्वे बुद्ध्या सङ्कलय्य पचतीति प्रयुज्यते, यदाप्येकस्मिन् क्षणे पचतीति प्रयोगस्तदा तत्र समूहारोपणम् । यदाह—

पूर्वोत्तरैर्यदा भागैस्समवस्थापितक्रमः । एकस्सोप्यसदध्यासादाख्यातैरभिधीयते ॥

यश्चापकर्षपर्यन्तमनुप्राप्तः प्रतीयते । तत्रैकस्मिन् क्रियाशब्दः केवलेन प्रयुज्यते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

न त्वेवमिन्द्रियैरभिसंबन्धात् सरूपसन्निधानाय वर्तमानव्यपदेशाच्च कथमप्रत्यक्षत्वं क्रियायाम् ? उच्यते, नेह वस्त्वर्थो निरूप्यते, अपितु शब्दार्थः। तत्र चान्वयव्यतिरेकाभ्यां यः प्रकृत्यर्थोऽवस्थाप्यते, या क्रियावचनस्य धातुसंज्ञा, नासौ शक्या साक्षादुपलब्धुम्। तत्र हि आचार्याणां मतभेदः; एके मन्यन्ते—अधिश्रयणादीनां समुदायो बुद्ध्या निगृहीतः, एकत्वेन स पचतीत्यादीनां वाच्य इति। न च समुदायं पचतीति प्रयुञ्जानः प्रत्येकमधिश्रयणादिषु प्रत्यस्यति, प्रत्ययाश्च न समुदाय इत्येवं रूपं प्रत्यस्यन्ति। नाप्ययं चायं चेति संबन्धिनो बुद्ध्यावगृह्णाति। किं तर्ह्याश्रितक्रमनिरूपमिव प्रत्येकमवयवेषु प्रत्ययस्य पचतीति प्रयुङ्क्ते, तदा तस्यैव समीहितं भवति, अधिश्रयणाद्यनुपूर्वा फलमोदनादि निर्वर्तयितव्यमिति। यथा प्रथमक्रियासंभागे पचिरित्येवाध्यवस्यति नाधिश्रयणमिति। इतरथा ह्येवं प्रयोगस्तस्याधिश्रयतीति यदाचाधिश्रयणे निर्वृत्तेनागते वा भूतभविष्यत्कालाभिधायिनं शब्दं प्रयुङ्क्ते, तदा समुदायरूपप्रत्यासेनैव तमवयव-बुद्ध्या निगृह्य प्रयुङ्क्ते अपाक्षीत्, पक्ष्यतीति। न त्वधिश्रयणरूपेण, अन्यथा ह्येवं प्रयोगस्स्यात् अध्याशिश्रयत्, अधिश्रयिष्यतीति। एवमापनेपि च घटने वा समूहिनि समुदायरूपप्राप्त्या धातुत्वादेव व्यपदेशात्। पचत्यपाक्षीत् पक्ष्यति, एवं भूतश्चार्थात्माऽधिकृतस्साधनतन्त्रसाध्यावस्थः शब्देन प्रक्रान्तोऽशक्य उपलब्धुं; यथा—गौरिति गकारौकारविसर्जनीया एवोपलभ्यन्ते। समुदायस्तु बुद्धिनिर्ग्राह्य एव; तथा पचतीत्यादिष्वेवाधिश्रयतीत्यवयवादिषु अवयव एव हस्त-प्रसरणस्थालीविन्यासादयोऽशब्दवाच्याः प्रत्यक्षा एव। यावदपकर्षपर्यन्तप्राप्ता क्रियेति सापि नाप्रत्यस्ते क्रमरूपे समुदाये आख्यातशब्देनाभिधीयते। अपकर्षपर्यन्ता चेत्क्रमरूपेण नाऽवगृह्णादिति अवाचक एवाख्यातशब्दः यथा—श्लोकशब्दं प्रयुञ्जानो भाद्यं पदं पदरूपेणावगृह्णाति न तदा श्लोकस्समुच्चार्यत इति प्रयुङ्क्ते। यदा त्वाश्रितोत्तरप्रबन्धमवगृह्णाति तदा श्लोकशब्दं प्रयुङ्क्ते। एवं कृत्वा निरुक्तेत्युक्तं पूर्वापरीभूतं भावमाख्यायते नाचष्ट इति। अन्येषां दर्शनं यद्विचटनं तण्डुला-वयवानां तण्डुलावयवेभ्यो विभागः; यदनन्तरं मा भवादयो निष्पद्यन्ते। तद्यदाऽधिश्रयादिषु प्रत्यस्तरूपं भवति तदाऽख्यानेनाभिधीयते। तत्र यदुपलभ्यतेऽधिश्रयणं तदशब्दवाच्यं; कारक-निराकांक्षं यच्छब्देनाभिधीयते तदनिष्पन्नं; साधनतन्त्रमप्रत्यक्षं निष्पन्नानिष्पन्नयोश्चैकान्त्या-त्मायत्तौ पचत्यादिशब्दप्रयोगः। स चायमेवंरूपोऽर्थात्मा गुणक्रियाणां पौर्वापर्यात्मनां पूर्वो न परश्च पूर्वापरीभूते व्यपदिश्यते। अन्ये तु विचटनमेवाधिश्रयणादिरूपं प्रतिपन्नाः, न रूपशून्याधि-श्रयणादीन् प्रत्यस्तविचटनरूपानाहुश्च कः पुनः पचेः प्रधानार्थः योऽसौ तण्डुलानां विक्लित्तिः ?

अथवा यदभिसंधिपूर्वकं प्रेषणमध्येषणं वा स सर्वः पच्यर्थ इति सर्वस्मिन्नपि दर्शने यथा—भूताख्यातशब्दो न क्रिया प्रक्रम्यते। तथाभूतायास्सिद्धमप्रत्यक्षमिति फलेनैव समधिगमो युक्त कथमिति चेत्, इह सर्वेषु साधनेषु सन्निहितेषु कदाचित्पचतीत्येतद्भवति, कदाचिन्न भवति, यस्मिन्निमित्ते सन्निहिते पचतीत्येतद्भवति। सा नूनं क्रियायां देवदत्त इह भूत्वा पाटलिपुत्रे

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भवति । सा नूनं क्रियेति द्वितीयहेतुमत्या सोऽप्यर्थ इति चेन्नैवम् ; इह कस्यचिदेषा बुद्धिः स्यात् ; असत्येवाऽस्मिन्निमित्ते पचत्यादिबुद्धयः प्रवर्तन्ते, यथा मृगतृष्णिकादिष्विति तदनेन निर्वर्तयति । मृगतृष्णिकादिभ्यो हि तृप्तिमलापकर्षण घर्मापनोदनादि न फलं निवर्तते ; असर्वगतया हि देवदत्तपाटलिपुत्रयोर्गमनक्रियान्तरनैरन्तर्येणावस्थानरूपं फलमुपलभ्यते ।

अथवा एतदयं प्रतिपद्येत, शक्तिकृताः पचत्यादयो विशेषाः सत्प्रत्ययाश्च स्युः, न क्रियाकृता इति । तदनेन निर्वर्तयति, यावां देवदत्त इह भूत्वा पाटलिपुत्रे भवति सा नूनं क्रियेति । यदि ह्येते शक्तिकृतास्स्युः शक्त्यनन्तरमेव पाटलिपुत्रेण प्राप्तिस्स्यात् । न च भवति तस्मात् शक्तिकृते नान्येन धर्मेण, यस्य फलं देशान्तरप्राप्तिरिति ।

क्रियामन्ये तु मन्यन्ते क्वचिदप्यनपाश्रिताम् । सा नैवार्थावभासत्वे प्रवृत्तिरनपायिनी ॥

सामान्यभूता धात्वर्थैस्सा पुनः प्रविभज्यते । ततो व्यापाररूपेण साध्ये पर्यवतिष्ठते ॥

प्रकृतिस्साधनानां सा प्रथमान्तमकारकम् । शक्तिरेकाधिकरणे स्रोतोवदपकर्षति ॥

अपूर्वं कालशक्तिंवा क्रियायाः कालमेव वा । तमेकं लक्षणं भावं केचिदाहुः कथञ्चन ॥

सा तु यथा अस्ति भवति करोतीत्यादिक्रियावच्छेदे भेदाभिन्नाऽपि भिन्नेव प्रकाशते, तथा क्रमरूपोपादानान्नित्यमेव कालसंबन्धोपाधिभूतभूतभविष्यदादिव्यपदेशमासादयति । कः पुनरयं कालो नाम ? क्रियैव क्रियान्तरावधृतपरिमाणव्यवच्छिन्ना वा क्रियापरिच्छिन्नहेतुः कालः, कथं पुनः क्रिययैव क्रियापरिच्छित्तिः ? श्रूयताम् । इह तु क्रियाः काश्चित्क्रियान्तरैः कैश्चिद्बुद्ध्यैव परिमीयन्ते । यथा– अर्कादीनां गतयः यथा च गोदोहादयः, तथाऽस्मदादिव्यापाराः । यथा— पुरुषायुषादयस्तत्रावधृतपरिमाणाभिरितराः परिच्छिद्यन्ते ; यथा—दिवसं गच्छति, वर्षशतं जीव, ओदनपाकमास्ते, गोदोहं स्वपिति । तत्र परिच्छेदकालव्यवहारं वर्तयन्ति ; यथा—सवितुरुदयादिरस्तमयपर्यन्तः क्रियाप्रबन्धो दिवसः, स एवास्तमयादिः पुनरुदयावसानो निशा, सर्वाकर्षाणां सकृत्परिवृत्तिरहोरात्रः, कलाभिरिन्दोराप्यायनं परिक्षयो वा पक्षः, चन्द्रस्य सकलनक्षत्रातिक्रमो मासः, सूर्याचन्द्रमसोर्गतिविभागादेकाहोरात्रक्षय ऋतुः, रवेर्दक्षिणत उत्तरतो वा गमनमयनं, बृहस्पतेरेकराश्यतिक्रमस्संवत्सर इति । तेन चोक्तानुक्तं क्रिया कालोऽवच्छिद्यते । यथा– दिवा दिवः, दिवसो निशाचाहोरात्रः, पञ्चदशाहोरात्रः पक्षः, पक्षद्वयं मासः, मासद्वयमृतुः, ऋतुत्रयमयनं, अयनद्वयं संवत्सरः, पञ्च संवत्सरा युगम् । युगानि द्वादश कल्पः, कल्पशतानि द्वादश महाकल्पः, महाकल्पषष्टिश्चतुर्युगं, चतुर्युगानि द्विसप्ततिर्मन्वन्तरम् , मन्वन्तराणि चतुर्दश ब्रह्मदिवसः, तावत्येव तन्निशा प्रलयः, तन्मानेन वर्षशतान्ते ब्रह्मणोऽपवर्गो महाप्रलयः । यथा वा सूर्यस्य भगणभोगो वर्षं, राशिभोगो मासः, राशित्रिंशांशो दिनं, दिनषष्ट्यंशा कला, कलाषष्ट्यंशा

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विकला, विकलाषष्ट्यंशः तत्परेति। तत्र यथा—रजतान्याधिकरणगौरवमवधृतपरिमाणद्रव्यान्तरसंबन्धसमुत्कीर्णरेखस्तुलादण्डः। रेखासु सूत्रावस्थानफलशः कर्षशोभा परिच्छिनत्ति। तथा कालदिनादीन्यवस्थानवशेन भागशः कालान्तरं परिच्छिनत्ति। परिमाणं परिमिमीते क्रियानियमैः कालावच्छेदनियमः यथा—परिमाणो स्ववष्टब्धप्रदेशो क्रमलक्षणः, पक्ष्मसंपातो निमेषः, इयत्क्षणे इयन्निमेषो वा नाडिका, द्विनाडिको मुहूर्तः, पादोनचतुर्मुहूर्तो यामः, यामाष्टकमहोरात्रः इति। बुद्ध्यवच्छेदेन वा कालपरिच्छेदः, यथा—अर्कस्य उदयाविदूरता प्रत्यूषः, पुरुषभ्रूप्रदेशता दीर्घता पूर्वाह्णः, तपमा मध्याह्नः, परावृत्य दर्शनमपराह्णः, अस्तमयासन्नताभिसन्धिः सन्ध्येति। रात्रेः प्रारम्भो निशामुखं, निशामुखाद्रात्रेस्तुर्यांशः, अर्धरात्रमुभयतो निशाष्टमो निशीथः, निशीथात्तावन्मात्रमपररात्रः, परतो निशावशेषः प्रभातमिति क्रियाविशेषैः कालविशेषावगमः। तथाहि—

शयाने शेरते रात्रौ दिवा जाग्रति जाग्रति। जगत्प्रदीपे पद्मानि कलत्राणीव भर्तरि॥
रतान्तकालकान्तस्त्रीदृग्विलासैकसाक्षिणी। निशा नीलोत्पलानीके निमीलति निमीलति॥
चञ्च्वग्रचुम्बितातात्रचूतांकुरकदम्बकैः। कथ्यते कोकिलैरेव मधुर्मधुरकूजितैः॥
दिवाकरकरालातपातनिर्दग्धवीरुधः। मार्गाऽऽसमल्लिकामोदा भाविग्रीष्मस्य शंसिनः॥
शिखण्डिमण्डलारब्धचण्डताण्डवडम्बरैः। प्रावृडाख्यायते मेघमेदुरैर्मेदिनीधरैः॥
मौलिकाकारविस्तारि तारानिकरचित्रितम्। शरत्पिशुनतां याति यामुनाम्भोनिभं नभः॥
आयामियामिनीभोगसफलाभोगविभ्रमाः। हेमन्तमभिनन्दन्ति सोष्माणस्तरुणीस्तनाः॥
आस्कन्दनदलत्कुन्दकलिकोत्करदन्तुराः। वदन्ति शिशिरं वातास्तुषारकणकर्कशाः॥

बाल्ययौवनकौमारयौवनादयो मौग्ध्यमाध्यप्रागल्भ्यादयश्च क्रियाविशेषव्यङ्ग्याः कालविशेषाः एव। वयो हि देहिनां वत्सरादिभिः कालभेदः; वयोनिमित्ताश्च तेषां मौग्ध्यादय इति। उच्यते—

उत्तालालकभञ्जनानि कबरीभारेषु शिक्षारसो।
दन्तानां परिकर्म नीविनहनं भ्रूलास्ययोग्याग्रहः॥
तिर्यग्लोचनवल्गितानि वचसां छेकोक्तिसङ्क्रान्तयः।
स्त्रीणां म्लायति शैशवे प्रतिकलं कोऽप्येष केलिक्रमः॥

व्यसनोत्सव नित्यनैमित्तिकक्षणप्रकीर्णचन्द्रोदयचन्द्रास्तमयप्रभृतयश्च कालव्यपदेशभाजो गोदोहादिवद्वेदितव्याः। अपिच, परावरचिरक्षिप्रक्रमोत्क्रमविभागवान्। कालक्रियाविशेषाभिव्यङ्ग्यरीतिः प्रतीयताम्। तथाहि; उत्पत्त्यादिक्रियाणां प्रथमत्वे परः तथेयं बाला ज्येष्ठा च वैपरीत्ये

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

पुनरपरः यथैषा प्रगल्भा कनिष्ठा च । साधनानां मन्दसंपातित्वे चिरः यथा—वत्स्यति कालः, भोक्ष्यते तालफलं, तदन्यथात्वे क्षिप्रः यतो भिन्नश्च वंशकारी, शिरागतश्च प्रमाणं, क्रियाणां अपौर्वापर्ये युगपत्, यथा दिवसाग्रतो निशा, निशाग्रतो दिवस इति । सेयं वस्तुनश्शक्तिः पाकप्रभवा स्वाभाविकी क्रियैव, क्रियापरिच्छेदहेतुः कालः ; क्रियाश्च ता भविष्यन्ति वर्तमानाः अव्यक्ताश्च । तत्र व्यतिपतितसाधनभूता यथाऽपाक्षीदिति, अनागताऽसन्निहितसाधना च भविष्यति यथा पक्ष्यतीति, अवाप्ता अप्रच्युतस्वरूपा वर्तमाना यथा पचतीति, अनिर्धारितविशेषा अव्यक्ता यथा पचेदयमिति, तन्निबन्धनश्च लोके, अद्यश्वः, परश्वः, परेद्युः, अन्येद्युः, उभयेद्युः, इदानीं, एतर्हि, एषमः, परुत्, परारि, शश्वत्, स्वः, भूः, सद्यः, पुरा, ह, स्म, यावत्, तदा, यदा, अन्यदा, एकदा, सदेति व्यवहारः लुङादीनां भूतादिषु स्मरणमिति ।

अन्ये पुनः क्रियाव्यतिरिक्तमनुदयास्तमयमभिन्नमनवच्छिन्नदेशं च द्रव्यं पृथग्विधानेकशक्तिशतसहस्रपाकायतनं जगत्प्रवृत्तिनियमकारणं क्रियापरिच्छेदहेतुमदृष्टाद्यपेक्षं कालमाचक्षते ; स च क्रियापरिच्छेद्यः किलेति । केचिदाहुश्च—नित्यो व्यापी संप्रति भूतभविष्यत्क्रियासमावेशात्। आकाशकल्प एको द्रव्यात्मा भिद्यते कालः ; तच्चासमीचीनमेवेति ब्रूमः । क्रिया हि साध्यत्वात् साधनमेवापेक्षते । न च क्रियाविशिष्टस्यापि द्रव्यात्मनः कालकारकेण संबन्धो घटते, द्वयोरपि सिद्धत्वात् । तस्माद्द्रव्यरूपे क्रियारूपे वा कालः क्रियामेव विशेषयति । स च तद्विशिष्टा कारकविशेषमुपतिष्ठते । यदाह—

गुणः कृतात्मसंस्कारः प्रधानं प्रतिपद्यते । प्रधानस्योपकारित्वे तथा भूयसि वर्तते ॥
कलाभिः पृथगर्थाभिः प्रविभक्तं स्वभावतः । केचिद्बुद्ध्यनुसंधानलक्षणत्वं प्रचक्षते ॥
सत्तालक्षणमन्ये तु क्षणरूपं तथाऽपरे । देवतावस्तुशक्त्यात्मस्वरूपमपरे विदुः ॥
तमस्य लोकयन्त्रस्य सूत्रधारं प्रचक्षते । प्रतिबन्धाभ्यनुज्ञाभ्यां वृत्तिर्या तस्य शाश्वती ॥
तया विभज्यमानोऽसौ लभते क्रमरूपताम् । तृणराजस्य या वृद्धिस्त्वचिसारस्य वा दधत् ॥
चिरक्षिप्रादिभेदे च कालकत्वं विकल्पते । व्यतिक्रमेऽपि मात्राणां न तस्यास्ति व्यतिक्रमः ॥
नियन्तृगतिभेदेन मार्गभेदोऽस्ति कश्चन । दूरान्तिकव्यवस्थानसध्वादिकरणं यथा ॥
चिरक्षिप्रव्यवस्थानं कालाधिकरणं तथा । क्रियोपाधिस्स या भूतभविष्यद्वर्तमानता ॥
परावरविभागार्थं सा शक्तिः प्रतिपाद्यते । भूतानां चैव यद्रूपं रूपं यद्भाविनामपि ॥
सुदुर्दर्शे इवादर्शे काल एवोपलभ्यते । क्रियाभेदाद्यथैकस्मिंस्तक्षाद्याख्या प्रवर्तते ॥
क्रियाभेदात्तथैकस्मिन् नृत्वाख्याचोपजायते । विशिष्टमपि धत्तं तमुपादायावकल्पते ॥
कालः कालवि[illegible] । [illegible]यथा स्रोतोऽवकर्षति ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रवर्तयति कालोऽपि मात्रा मात्रावतां तथा। प्रारम्भवेशानिष्ठासु स्थितिविप्रतिपत्तिषु ॥
साम्योत्कर्षापकर्षेषु निमित्तं काल इष्यते। संसर्गिणां तु ये भेदा विशेषास्तस्य ते मताः ॥
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते। प्रतिव्यवस्थं कालस्य व्यापारो न व्यवस्थितः ॥
कालो वा विश्वरूपात्मा व्यापार इति कथ्यते। क्रियावच्छेदहेतुं वा क्रियावच्छेद्यमेव वा ॥
कालात्मानमनाश्रित्य व्यवहर्तुं न शक्यते। तस्य व्यक्तस्वरूपस्य व्यवहारे क्रियाकृताः ॥
भूतादयो महाभेदा यान् लोको नातिवर्तते ॥

के पुनस्ते यान् भूत उपाधौ लुङादिविषयानुदहरिष्यामः। तदेतत् द्रव्यात्मनः क्रियात्मनो वा क्रियापरिच्छेदिनः कालस्य स्वरूपमभिहितम्। अथापरमपरिमेयात्मनो देवतादिरूपस्य स्वशक्तिनिमित्तविश्वप्रवृत्तिपरिच्छेद्यस्य तस्य परिच्छेदिनो वा क्रियाहेतुशक्त्यायतनभूतद्रव्यरूपपरिणतं निवृत्तं वा, न समस्तनिवृत्तसंग्रहानुग्रहादिनित्यनैमित्तिकादिरूपं स्वरूपमस्ति। तत्पुरस्तात् प्रतिपादितं; अग्रतश्च विशेषतः प्रतिपादयिष्यत इति नेह प्रतन्यते, संबन्धावच्छेदार्थं तु लेशतो अभिधीयत इति। तत्प्रभेदाद्द्रव्यरूपोऽपि कालश्चतुर्धा—नित्यो, नैमित्तिकः, स्वाभाविको, वैपरामर्शिक इति। तेषु नित्यश्शाश्वतिको वैकल्पिकः नैयोगिकश्च त्रिधा। नैमित्तिकोऽपि औद्योगिकः औपयोगिकः प्रायोगिकश्चेति त्रिविधः। एवं स्वाभाविकोऽपि आगन्तुकः नैसर्गिकः सांसर्गिक इति त्रिधा। वैपरामर्शिकोऽपि सङ्कीर्णः प्रकीर्णो विप्रकीर्ण इति त्रिधैव। तेषु क्षणनिमेषनाडिकामुहूर्तप्रहराहोरात्रस्वरूपश्शाश्वतिक, अयं हि शश्वत्प्रवर्तमानो नावधिविशेषमपेक्षते। यथा—

क्षणे निमेषे नाड्यां वा मुहूर्ते प्रहरेऽह्नि वा। गते त्वमेष्यसीत्युक्ते रुरोध पथिकं प्रिया ॥

दिनरात्रिपक्षमासर्त्वयनरूपो वैकल्पिकः। अयं हि सूर्योदयादिविशिष्टमवधिमपेक्षमाणो विकल्पाय प्रभवति। यथा—

दिनानि रात्रयः पक्षमासावृतुरथायनम्। जरा वै यद्यदङ्गानां तत्तत्प्रेम्णो रसायनम् ॥

संवत्सरयुगकल्पमन्वन्तरप्रलयमहाप्रलयरूपो नैयोगिकः। अयं हि बृहस्पतितारायणमुरमथनब्रह्मणां राज्यादिवृत्तिविशेषाविशिष्टमेवावधिमपेक्षमाणः प्राणिनो विशिष्टासु प्रवृत्तिषु नियुङ्क्ते। यथा—

संवत्सरैर्युगैः कल्पैर्मनुभिः प्रलयैः क्षयैः। हीयते हि जगत्सर्वमेकः कामो न हीयते ॥

तेऽमी शाश्वतिकवैकल्पिकनैयोगिकास्त्रयोऽपि कालभेदा नित्या उच्यन्ते, नित्यरूपेणैवानिवारितप्रवृत्तित्वात्। प्रातःप्रत्यूषप्राह्णमध्याह्नापराह्णसन्ध्यारूप औद्योगिकः। अयं ह्युपेक्षितहविर्भागपौर्वापर्यावधिः प्राणिनां प्रबोधोत्थानस्नानभोजनप्रसाधनाविहारादेरुद्योगस्य निमित्तं भवति। यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रातः प्रत्यूषयोस्स्नाति भुङ्क्ते सन्ध्यापराह्णयोः। प्राह्णमध्याह्नयोर्यूनां शेते मनसि मन्मथः॥

अयं ह्यपेक्षितरात्रिविभागपौर्वापर्यावधिः कामिनां दूतीसंप्रेषणप्रेक्षानिद्रासुखमधुपानाभिसरणादेरुपभोगस्य निमित्तं भवति। यथा—

निशामुखे प्रदोषे च निशीथापररात्रयोः। इन्दोः प्रकाशे नाशे वा सुप्तः कामो विबुध्यते॥

शरद्धेमन्तशिशिरवसन्तग्रीष्मरूपः प्रायोगिकः। अयं ह्यपेक्षितसंवत्सरविषुपौर्वापर्यावधिः प्राणिनां कामकृतचित्तवैकृतानां प्रयोगनिमित्तं भवति। यथा—

शरद्धेमन्तयोरन्यदन्यद्वर्षावसन्तयोः। हिमर्तुग्रीष्मयोरन्यत्कामावस्था प्रवर्तते॥

तेऽमी त्रयोऽप्यौद्योगिकौपयोगिकप्रायोगिकाः कालभेदाः नैमित्तिकाः, नित्यत्वेऽप्येषामुद्योगादेर्निमित्तत्वात्। मदप्रमदाभ्युदयोत्सवव्यसनपरिहाराभिरूप आगन्तुकः। स हि विशिष्टक्रियोपनिपातादिकमवधिमपेक्षमाणः प्राणिनां मदप्रमदादिरूपेणैवागच्छति। यथा—

मदप्रमदहर्षेषु व्यसनेषूत्सवेषु च। परिहासेषु च प्रायः कामस्सामान्यमर्हति॥

बाल्यकौमारयौवनमौग्ध्यमाध्यस्थ्यप्रागल्भ्यादिरूपो नैसर्गिकः। अयं हि वयोभागादिकं विशिष्टमेवावधिमपेक्षमाणः प्राणिनां निसर्गत एव भवति। यथा—

मौग्ध्यप्रागल्भ्यमाध्यस्थ्यबाल्यकौमारयौवनैः।
आतिष्ठति पदैष्षड्भिः त्रिजातिः कामषट्पदः॥

परापरयौगपद्यचिरक्षिप्ररूपस्सांसर्गिकः। अयं हि प्रवृत्तिसाधनानां पूर्वापरत्वे सहैकत्वे मन्दशीघ्रसमपातित्वे च क्रियास्वपेक्षमाणो मिथः संसर्गाय प्रभवति। यथा—

क्रमेण युगपत्पूर्वमग्रतो द्राक् चिरेण वा। समासजन्त्यश्चेतांसि न ज्ञायन्ते स्मरार्तयः॥

तेऽमी आगन्तुकनैसर्गिकसांसर्गिकास्त्रयोऽपि कालभेदाः स्वाभाविका उच्यन्ते; स्वभावतः प्रवर्तमानत्वात्। देश्यक्रीडाकेलिकेलिद्यूतव्रतगोष्ठीविप्रेक्षादिरूपस्सङ्कीर्णः। स हि विशिष्टं तं तमवधिमपेक्षमाणस्संभूय प्रवर्तितस्सङ्कीर्ण एवं भवति। यथा—

व्रतेषु गोष्ठीप्रेक्षासु केलिद्यूतेषु केलिषु। देश्यक्रीडासु चानङ्गः पुनरङ्गेन युज्यते॥

विविक्तं दीर्घिकोद्यानसौधक्रीडादिदर्शनरूपः प्रकीर्णः। स ह्येकस्य वा परिमितपरिवारस्य वा विशिष्टावधिक एव प्रकीर्णकन्यायेन यदाकदाचिदुत्पद्यते। यथा—

विविक्तदीर्घिकोद्यानसौधक्रीडादिदर्शने। यत्र क्वचिदुपवेशे च कामः कामेन युज्यते॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अष्टमीचन्द्रकेन्द्रोत्सवयक्षरात्रिकुन्दचतुर्थीसुवसन्तकमदनत्रयोदश्यादिरूपो विप्रकीर्णकः। स हि विशिष्टमष्टम्यादिकालमेवावधिमपेक्षमाणः कामिभिर्निर्वर्त्यते । समस्तेष्वपि देशेषु विप्रकीर्ण इव दृश्यते इति । यथा—

अष्टमीचन्द्रके कुन्दचतुर्थ्यां सुवसन्तके। हरस्स्मरार्चा शक्रार्चा यक्षरात्रिषु वर्धते ॥

स एव कालः कार्त्स्न्येन द्विरूप इव दर्शितः।
क्रियापदैकवाच्यो यः क्रियायास्साधनं च यः ॥

किं पुनस्साधनं स्वपराश्रितक्रियाभिनिर्वृत्तिहेतुश्शक्तिमद्द्रव्यं, यद्द्रव्यं कारकमित्याचक्षते । कारकशब्दश्चायमव्युत्पन्नः क्रियानिमित्तवचनो लोकतस्सिद्धः करोतीति वा कारकशब्देन शक्तिमद्द्रव्यमुच्यते । तथाहि—

निष्पन्नमात्रे कर्तृत्वं सर्वत्रैवास्ति कारके। व्यापारभेदापेक्षायां करणादित्वसंभवः ॥
पुत्रस्य जन्मनि यथा पित्रोः कर्तृत्वमुच्यते। अयमस्मादियं त्वस्मदिति भेदविवक्षया ॥
शक्तिमाला समूहस्य विश्वस्यानेकधर्मिणः। सर्वथा सर्वदाभावात्क्वचित्किंचिद्विवक्ष्यते ॥
सर्वत्र सहजा शक्तिर्यावद्द्रव्यमवस्थिता। क्रियाकालेत्वभिव्यक्तिराश्रयः परकारिणी ॥
साङ्गसंयोगिनः पाशादन्यानां वारणा यथा। व्यज्यन्ते विजिगीषूणां द्रव्याणां शक्तयस्तथा॥
तैक्ष्ण्यगौरवकाठिण्यसंस्थानैः स्वैरसिर्यदा। भेद्यं प्रतिव्याप्रियते शक्तिमारुह्यते तदा ॥
स्वाश्रये समवेतानां तद्वदेवाश्रयान्तरे। क्रियाणामभिनिष्पत्तेर्निमित्तं शक्तिरिष्यते ॥
तत्वे वा व्यतिरेके वा व्यतिरिक्तैव सोच्यते। शब्दप्रमाणको लोकस्स शास्त्रेणानुगम्यते ॥

तत्र शक्तिमतो द्रव्यस्य कारकाख्यायामवान्तरव्यापारनिबन्धनाः षडुपाख्या भवन्ति, कर्ता, कर्म करणं संप्रदानमपादानमधिकरणं चेति । तेषु स्वतन्त्रः कर्ता, किं पुनस्तस्य स्वातन्त्र्यं, यत् करणादीनि प्रयुङ्क्ते, न तैः प्रयुज्यते । तानि न्यक्करोति, न तैर्न्यक्क्रियते ; न तैर्निवर्त्यते, तानि निर्वर्तयति, तानि प्रतिनिधत्ते न तैः प्रतिनिधीयते । तेभ्यस्सः प्रथममात्मानं लभते, न तानि । तस्मात् स तैर्विनाऽपि दृश्यते, न तानि तेनेति । तदाह—

प्रागन्यतश्शक्तिलाभान्न्यग्भावापादनादपि। तदधीनप्रवृत्तित्वात्प्रवृत्तानां निवर्तना ॥
अदृष्टत्वात्प्रतिनिधेः प्रविवेके च दर्शनात्। आरादप्युपकारित्वे प्राधान्यं कर्तुरुच्यते ॥

कथं तर्हि न्यक्कृतेषु करणादिषु कारकत्वं स्वव्यापारे प्रधानव्यापारे च स्वातन्त्र्यात् ।

गुणक्रियाणां कर्तारः कर्त्रा न्यक्कृतशक्तयः। कारणत्वादिभिर्जाताः क्रियाभेदानुवादिभिः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

व्यस्तायामपि संपूर्णैस्स्वव्यापारैस्समन्वितः। स्वातन्त्र्यमुत्तरं लब्ध्वा प्रधाने यान्ति कर्तृताम्॥
यथा राज्ञो नियुक्तेषु योद्धृत्वं योद्धृषु स्थितम्। तेषु वृत्तौ तु लभते राजा जयपराजयौ॥
तथा कर्त्रा नियुक्तेषु सर्वेष्वेकार्थकारिषु। कर्तृत्वं करणादित्वैरुत्तरं न विरुध्यते॥

कर्त्रादीनां च षण्णामपि प्रत्येकं त्रिप्रकारत्वादष्टादशप्रभेदा भवन्ति। तत्र कर्त्ता स्वतन्त्रः, हेतुः, कर्मकर्ता च, कर्म निर्वर्त्यं विकार्यं प्राप्यं च, करणं बाह्यमाभ्यन्तरं बाह्याभ्यन्तरं च, संप्रदानं ददातिकर्माख्यं कर्ममात्राख्यं क्रियाख्यं च, अपादानं निर्दिष्टविषयमनिर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं च, अधिकरणं वैषयिकमौपश्लेषिकं नैमित्तिकं चेति। तत्र कर्तृभेदेषु स्वतन्त्रः समर्थोऽसमर्थस्समर्थासमर्थः, संबन्धोऽसंबन्धस्संबन्धासंबन्धश्च। तेषु समर्थो यथा—व्रजति, पचति, अस्ति, श्वेतते। असमर्थो यथा—जायते, विरमति, नश्यति, विकरोति। समर्थासमर्थो यथा—चैत्रस्य रुजति, चैत्रस्यामयति, चोरं ज्वरयति, चोरं संतापयति। संबन्धो यथा—प्रियं दृष्ट्वा सुखं भवति, रिपुं दृष्ट्वा दुःखमुत्पद्यते, रम्यं श्रुत्वा दिदृक्षा जायते, रहः प्राप्य रतिर्निर्वर्तते। असंबन्धो यथा—मेरौ दोग्धरि धरित्रीमद्रयो दुदुहुः, पञ्चभिर्हलैः क्षेत्रं ग्रामणीः कर्षति, शैलैर्वाल्मीकिरम्भोधिं बन्धयति, उज्जयिन्याः प्रस्थितो माहिष्मत्यां सूर्यमुद्गमयति। संबन्धासंबन्धो यथा—भवति पचति, भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यात्। हेतुः कर्मप्रयोजकः कर्तृप्रयोजकः हेतुप्रयोजकः अहेतुप्रयोजकः हेत्वहेतुप्रयोजकश्च। तेषु कर्मप्रयोजको यथा—गां दोग्धि पयः, पौरवं गां याचते, गर्गाञ्छतं दण्डयति, काशान् कटं करोति। कर्तृप्रयोजको यथा—यज्ञदत्तः पाचयति, माठरः पाठयति, भिक्षा वासयति, कारीषोऽग्निः अध्यापयति। कर्मकर्तृप्रयोजको यथा—आरोहयति हस्तिनं हास्तिपकः, आरोहयते हस्तिनं हास्तिपकः, आरोहयते हस्ती, निषादयति क्रमेळकमौष्ट्रिकः, श्रपयति यवागूं यज्ञदत्तः, साधयति ओदनं सूपकार इति। कथं पुनः श्रायति, सिध्यति? कर्त्रोर्यवाग्वोः कर्मकर्तृत्वं घटते। श्रातिसिध्यती अकर्मकौ कर्मकर्तृविषयस्य पचेरर्थे प्रवर्तेते। एतौ पुनः प्राकृतं वाच्यार्थमाहतुरिति। हेतुप्रयोजको यथा—अवीवदत् प्रवीणो वीणां परिवादकेन, अपीपठत् कठो माणवकं माठरेण, अजिघ्रपत् प्रियः कुसुमं कान्तया, अदूदुहत् गां बल्लवो गोपालकेन। कथं पुनः दुहिकर्ता कर्तृप्रयोजकस्य हेतुत्वं दुहेरन्तर्भूतणिजर्थत्वात् वक्ष्यति हि—

अन्तर्भूतणिजर्थानां दुहादीनां णिजन्तवत्। सिद्धं पूर्वेण कर्मत्वं णिजन्तनियमस्तथा॥

इति॥ अहेतुप्रयोजको यथा, संवर्मयति, अतिहस्तयति, अभिषेणयति, उपश्लोकयति। हेत्वहेतुप्रयोजको यथा, पुत्र उपाध्यायमध्यापयति, कन्या नदौ न वर्तयति, याज्ययाजकौ याजयति, कन्यावरौ विवाहयति।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

कर्मकर्ता विकर्मकर्ता प्रयोज्यकर्ता कर्मप्रयोज्यकर्ता प्रकृतिकर्ता विकारकर्ता प्रकृतिविकारकर्ता च। तेषु विकर्मकर्ता यथा—अवकिरते हस्ती, ग्रथते माला, प्रस्नुते गौः, चिकीर्षते कटः। प्रयोज्यकर्ता यथा—पाचयति देवदत्तेन, पाठयति विष्णुमित्रेण, भारयति भारं वाहकेन, कारयति कटं वरुटेन। कर्मप्रयोज्यकर्ता यथा—आरोहयते निषादं करेणुः, लावयते पामरं केदारः, दर्शयते राजा भृत्यैः, अभिवादयते गुरुर्देवदत्तेन। प्रकृतिकर्ता यथा—काष्ठानि भस्मवन्ति, महद्भूतश्चन्द्रमाः, त्यद्भवन्ति जातयः, मद्भवन्ति दायादाः। विकारकर्ता यथा—मूत्राय संपद्यते यवागूः, अभ्यूषाय कल्पते यवः, घटाय कपालौ भवतः, सुवर्णपिण्डं कुण्डले भवतः। प्रकृतिविकारकर्ता यथा—सङ्घीभवन्ति ब्राह्मणाः, वर्गीभवन्ति गावः, वत्सो वृषस्संपद्यते, बाला प्रगल्भा भवति,। स एषोऽष्टादशप्रकारोऽपि अभिहितानभिहितप्रयुज्यमानाप्रयुज्यमानप्रसिद्धप्रकृतापेक्षितौपचारिकप्रकल्पितानुस्यूतसामान्यादिभेदादनेकधा कर्तृभेदस्संभवति। तत्राभिहितो यथा—भवता कृतं, तेन सुप्यते। प्रयुज्यमानो यथा—त्वं पचसि, अहं पचामि। अप्रयुज्यमानो यथा—पचसि, पचामि। प्रसिद्धो यथा—वर्षति, हेषते। प्रकृतो यथा—भ्रेमुः ववल्गुः। अपेक्षितो यथा—इत्याचक्षते, यमयुङ्क्त। उपचरितो यथा—धनुर्विध्यति, मञ्चाः क्रोशन्ति। प्रकल्पितो यथा—आत्मनोऽपि नात्मानो जायन्ते, आत्मैवात्मानं जानाति। विकल्पितो यथा—अहमन्यो वा गच्छतु, अन्योऽहं वा गच्छामि। अनुस्यूतो यथा—स च त्वं च पचथः, त्वं चाहं पचावः। सामान्यो यथा—पचति, पठति चेति। एते च भेदाः कर्मादिष्वपि यथासंभवमूहनीया इति। विभक्तः, तत् क्रियाप्यं कर्म, यदाह—कर्तुरीप्सिततमं कर्मेति। तत्तु त्रिविधं, निर्वर्त्यं विकार्यं प्राप्यमिति। तत्र यदविद्यमानमुत्पाद्यते विद्यमानं जन्मादिना प्रकाश्यते तन्निर्वर्त्यं, यदभिनिर्वृत्तमेव प्रकृत्युच्छेदेन गुणान्तराधानेन वा विकारमापद्यते तद्विकार्यं, यस्य क्रियाकृतानां विशेषाणां सर्वथानुपलब्धिस्तत्प्राप्यम्। तदुक्तम्—

यदसज्जायते सद्वा जन्मना यत्प्रकाशते। तन्निर्वर्त्यं विकार्यं तु कर्म द्वेधा व्यवस्थितम्॥
प्रकृत्युच्छेदसंभूतं किञ्चित्काष्ठादिभस्मवत्। किञ्चिद्गुणान्तरापत्त्या सुवर्णादि विकारवत्॥
क्रियाकृता विशेषाणां सिद्धिर्यत्र न गम्यते। दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥

तत्र निर्वर्त्येति विकार्यप्राप्यधर्मस्स्वधर्मश्च विकार्ये प्राप्यधर्मस्स्वधर्मश्च प्राप्ये तु स्वधर्म एव। कः पुनरसौ—

आभासोऽवगमो व्यक्तिस्सोढत्वमिति कर्मणः।
विशेषाः प्राप्यमाणस्य क्रियासिद्धौ व्यवस्थिताः॥

निर्वर्त्यविकार्ययोस्तु निवृत्तिकार्यावेव। यथोच्यते—

निर्वर्त्यादिषु तत्पूर्वमनुभूय स्वतन्त्रताम्। कर्त्रन्तराणां व्यापारे कर्म संपद्यते पुनः॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्र निर्वर्त्यं उत्पाद्यं प्रकाश्यमुपसर्जनं विशेषणं व्यवहितमप्राप्यं च । तेषु यदसदुत्पाद्यते तदुत्पाद्यं ; यथा—संयोगं विधत्ते, सुखमुत्पादयति, विभागं कुर्वते, दुःखं जनयति । विद्यमानमेव यदावरणापायादाविर्भवति तत्प्रकाश्यम् ; यथा—शब्दं जनयति, पुत्रं सूयते, तैलं कुरुते, पयो दोग्धि । अप्रधानभूतमुपसर्जनं यथा—कटं कर्तुमारभते, ग्रामो वासयितुमिष्यते, पक्वौदनो भुज्यते, पक्तुमोदनश्चिन्त्यते । स्वानुरक्तप्रत्ययजनकं विशेषणं यथा—भीष्ममुदारं कटं करोति, महान्तमव्यक्तं शब्दमुच्चारयति, दीर्घायुषं गुणिनमात्मजं प्रसूते, चित्रमच्छपटं वयति । क्रियान्तरेण व्यवधानवद्व्यवहितं यथा—मासमास्ते, गोदोहं पचति, क्रोशमधीते, कुरून् गच्छ स्वपिति ।

कालाध्वभावदेशानामन्तर्भूतः क्रियान्तरैः । सर्वैरकर्मकैर्योगे कर्मत्वमुपजायते ॥

सकर्मिकाऽपि क्रिया द्रव्यादिकर्मण्येव निविशते । कालादिकर्मणि यथा—मासमोदनं पचति, क्रोशमनुवाकमधीते ।

आधारत्वमिव प्राप्तास्ते पुनर्द्रव्यकर्मसु । कालादयो भिन्नकक्ष्या यान्ति कर्मत्वमुत्तरम् ॥

क्रियाविशेषणमप्राप्यं यथा—सुखमभिधत्ते, दुःखं निवर्तयति, मन्दं गच्छति, शीघ्रमायाति। कथं पुनरुपसर्जनादीनाम् निर्वर्त्यमानता ? यथा निर्वर्त्यमानस्य-यथाह्यसौ कटं निर्वर्तयति, एवं तद्गतभीष्मोदारादिकमपीति । एवं शब्देऽपि पक्वौदनो भुज्यत इति । अत्र तु पाकेनौदनो निर्वर्त्यते ; केवलं साऽस्य शक्तिः ; प्रधानभुजिक्रियाविषयकर्मशक्तिसन्निधौ पक्त्युपसर्जनीभूताख्यानेन प्रधानशक्त्यभिधानेऽभिहितवत् प्रकाशते । पक्तुमोदनश्चिन्त्यत इत्यत्र पचयर्थत्वात् चिन्तायाः यद्यपि पाकस्य वास्तवमप्रधानत्वं, तथाऽप्याख्यातप्रत्ययेन प्राधान्यतश्चिन्ताभिधानात् पचिक्रियोपसर्जनं भवति । अतस्तद्विषया कर्मशक्तिः प्रधानशक्त्यभिधानेऽभिहितवद्भवति । एतेन कटः कर्तुमारभ्यते, ग्रामो गन्तुमिष्यते इत्यपि व्याख्यातम् ।

ननु गमेर्ग्रामः, इषेरुभे कर्मणी, तत्कस्यात्रोपसर्जनता ? नैवं, इषेरुभेकर्मणी इति यदुच्यते तत्सामर्थ्यप्रदर्शनपरमवगन्तव्यम् । इष्यते ग्रामं, किं कर्तुं, गन्तुं ग्रामो ग्राममिति वा ; न पुनरिषेः युगपदुभे कर्मणी संभवतः । एवमभिहितेऽपि कटादिवदेव मासादीनामासनादिभिरभिनिर्वर्त्यमानता प्रतीयते । तथा हि—पक्तारो भवन्ति इह स्थितोऽयं मासं निर्वर्तयतीति । एवं पचन् गोदोहमधीयानः क्रोशं स्वपन् गन्तव्यं कुर्वन्ति क्रमकालमिति गन्तव्यानामेव कुरुक्रोशादीनां कर्मत्वम् । यदाह—

कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम् ॥ इति ।

अप्राप्यं यत्क्रियाविशेषणत्वात् क्रियावदेव निर्वर्त्यमानं तत्क्रियायाः कथमिति चेत् पुरुषव्यापारसामान्याश्रयणात् ; अप्राप्यत्वं पुनस्तस्य धात्वर्थाभिप्रायेण । नह्यसौ धात्वर्थेन प्राप्यते ; अपितु पुरुषव्यापारेण । धात्वर्थस्य तु तत्र करणत्वम् । विश्वजिता यजेतेत्यादौ धात्वर्थनाम-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

धेयेभ्यो विश्वजिदादिभ्यः करणविभक्तिदर्शनादग्निष्टोमयाजीत्यादिसिद्ध्यर्थं करणे यजेति च सूत्रारम्भात्। अग्निष्टोमादयो हि स्वर्गादिफलभावनायां करणम्। कार्यमविनाश्यं विनाश्यमीप्सितमनीप्सितमास्थितं कर्तृकर्म च। तत्राविनाश्यं यथा—सुवर्णं कुण्डलीकरोति, काण्डं लुनाति, कान्तां सादयति, प्रियं सादयति। विनाश्यं यथा—कुसूलं भिनत्ति, काष्ठं दहाति, धानाः पिबति, उदपेषं पिनष्टि। ईप्सितं यथा—स्त्रियं गच्छति, पयः पिबति। अनीप्सितं यथा—चोरान् पश्यति, धनं त्यजति, विषं भक्षयति, अहिं लङ्घयति। कः पुनरेषां विकारः? प्रकृतेरन्यथात्वं ; न हि चोरादयो दर्शनादिविषया भवन्ति। आस्थितं यथा—पन्थानं गच्छति, नदीं तरति, पर्वतमारोहयति, गर्तमुत्तरति। कः पुनरन्यतोऽस्य भेदः। उच्यते—

त्यागरूपं प्रहातव्ये प्राप्ये संदर्शनादिके। आस्थितं कर्म यत्तत्र द्वैरूपं भजते क्रिया॥

कर्तृकर्म यथा—लूयते केदारस्स्वयमेव, पच्यत ओदनस्स्वयमेव, भिद्यते कुसूलस्स्वयमेवेति। प्राप्यमपि प्राप्यं प्रयोज्यं परिहार्यमभिहितमनभिहितमकथितं च। तत्र प्राप्यं यथा—आदित्यं पश्यति, हिमवन्तं शृणोति, वेदमधीते, चर्चाः पारयति। प्रयोज्यं यथा—माणवकं गमयति, शिष्यं बोधयति, ब्राह्मणमासादयति, पतिं शाययति। ननु च कार्यमेतत्; तन्न, प्रयोजकव्यापारमात्रस्याविवक्षितत्वात् विकार्यश्चैषां स्वक्रियानिबन्धन इति। अपरिहार्यं यथा—विभागं जनयन् संयोगमुच्छिनत्ति, कटं कुर्वन् काशानाहरति, ग्रामं गच्छन् वृक्षमूलानुपसर्पति, आमिक्षां भक्षयन् वाजिनमाप्नोति। अभिहितं यथा—उष्ट्रासिका आस्यन्ते, हतशायिकाश्शय्यन्ते, रैपोषं पुष्यति, उदपेषं पिनष्टि। अनभिहितं यथा—पश्य मृगो धावति, स्मरसि देवदत्त काश्मीरेषु वत्स्यामः, न मर्षयामि यत्तत्र भवान् वृषलं याजयेत्।

भावरूपं तु यत्कर्म तदिहाभिहितं विदुः। क्रियारूपं तु मन्यन्ते कर्मानभिहितं बुधाः॥

अथाकथितं, तद्यथा—गां दोग्धि पयः, पौरवं गां याचते, व्रजं गामवरुणद्धि, माणवकं पन्थानं पृच्छति, पौरवं गां भिक्षते, वृक्षमपचिनुते फलानि, माणवकं धर्मं ब्रूते, माणवकं धर्ममनुशास्ति, शतानीकं जयति, गर्गाञ्छतं दण्डयति, उपसरमश्वं पुष्णाति, अम्बुनिधिममृतं मथ्नाति, शाखां ग्रामं कर्षति, अजां ग्रामं नयति, एधान् ग्रामं हरति, भारं ग्रामं वहति, एवं नगरं हरति भारं, समाहर्तारमयुतं गृह्णाति, काशान् कटं करोति। किं पुनरिहाकथितं? पयः प्रभृति ; केनाकथितं? लकृत्यक्तखलर्थादिभिरिति। न हि पयःप्रभृतयो लादिभिः कथ्यन्ते ; अपितु गवादयो यथा—दुह्यते गौः पयः, सुदुहा गौः पय इति। यत्तु तैराख्यायते तदीप्सिततमं प्रधानकर्म प्रागेव क्रियासंबन्धात्। तदुक्तं—यस्माच्छब्दस्य दुहे भवति गवा पूर्वमेव संबन्धः गोदुहिना पयसस्तु प्राक्तस्माल्लादयस्तस्मिन्नेवं सारादिष्वपि आनयनादिभ्यः प्रागेव नयत्यादिसंबन्धात् लादिभिरभिधाने तद्व्याख्यानतः कथितमुच्यते, तद्विपरीतमकथितमिति। दुहियाचितद्धितोत्पत्तिरवगन्तव्या।

कथिप्रच्छिभिक्षिचियामित्यादि —

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

चिदण्डिमुखिमस्जीनां गत्यर्थानामकीर्तिते । नोवृष्पहिवृहादीनामुपसंख्यानमिष्यते ॥

अस्यार्थः दुह्यादीनां य उपयोगः प्रपूरणादिस्तस्य यन्निमित्तं पयःप्रभृति यच्च ब्रुविशास्योः क्रियाधर्मादिकं समवायेन संबध्यते तदपादानादिसंज्ञानामविधाने द्वितीयावाच्यं प्रधानं कर्मकथितं उच्यते । जिप्रभृतीनां चाप्रधानकर्मणस्तत्रैवोपसंख्यानामिति, अन्ये तूपयुज्यत इत्युपयोगः पयःप्रभृति; तस्य यन्निमित्तं गवादि ब्रुविशासिगुणेन च प्रधानेन धर्मादिकर्मणा माणवकादि यत्संबध्यते तदकथितमित्याचक्षते । तत्पक्षे लादिवाच्यानां गवादीनां प्राधान्यं व्याहन्येत । अकथितसंज्ञा च नानार्था स्यात् । लादयश्च तेषामपि ते प्रधानकर्मण्येव यथा—अजा नीयते ग्राममिति । यथोक्तं—

प्रधानकर्मणाख्येये लादीनाहुर्द्विकर्मणाम् । अप्रधाने दुहादीनां ण्यन्ते कर्तुश्च कर्मणः ॥

तान्मिथो विरुद्धार्थत्वादेषामेवाविमृश्यवादितामापादयति । कथं समान एव योगक्षेमे गवादीनामप्राधान्यं, अजादीनां च प्राधान्यं, कथं वा प्रधानं गवादि लादिभिरजादिवदेवाभिधीयते ? किञ्च—

अन्तर्भूतणिजर्थानां दुहादीनां णिजन्तवत् । सिद्धं पूर्वेण कर्मत्वं णिजन्तनियमस्तथा ॥

अस्मिन् पक्षे गवादीनां व्यक्तमेव प्रयोज्यत्वात् प्राक्सूत्रेणैव प्रधानकर्मत्वं । तथा च गां दोग्धि पय इत्यत्र गां पयः क्षारयतीत्यर्थः । यतो दुहिः प्रपूरणार्थः, पूरणमाप्यायनं, प्रपूरणं तु विरेचनं प्रेरणप्रस्थानादाविवार्थवैपरीत्याधानात् । यस्तु णिजन्तादीनामपि गतिबुद्धीत्यादिना कर्मसंज्ञारम्भः, स पाचयति देवदत्तेनेत्यादौ प्रयोज्यस्य कर्तुः कर्मसंज्ञां निवर्तयन्नियमार्थो भविष्यतीति विभक्तं कर्म करणमुच्यते । तत्र क्रियां प्रत्युपात्तव्यापारेषु कर्मादिषु यद्व्यापारानंतरं क्रियासिद्धिविवक्षा तत्कारकं साधकतमं करणमिति । यदाह—

क्रियायाः परिनिष्पत्तिः यद्व्यापारादनन्तरम् । यदा विवक्ष्यते तस्य करणत्वं तदा स्मृतम् ॥

तदपि त्रेधा बाह्यमाभ्यन्तरं बाह्याभ्यन्तरं च । तेषु बाह्यं कर्तृरूपं कर्त्राश्रितं क्रियाश्रितमनाश्रितं चेति । तत्र कर्तृरूपं यथा—एधैः पचति, सेनया जयति, अश्वेन गच्छति, नावा तरति । कर्त्राश्रितं यथा—अक्षैर्दीव्यति, दात्रेण लुनाति, धनुषा विध्यति, परशुना छिनत्ति । कर्मरूपं यथा—पथा गच्छति, अन्तिकेन याति, पयसा भुङ्क्ते, यवाग्वा जुहोति, कर्माश्रितं यथा—पयसा ओदनं भुङ्क्ते, पथा ग्रामं गच्छति, द्विद्रोणेन धान्यं क्रीणाति, पञ्चकेन पशून् बध्नाति । क्रियाश्रितं यथा—मासेनाधीते, क्रोशेनाधीते, विश्वजिता यजते, विधिना विदधाति । अनाश्रितं यथा—स्तोकेन मुक्तः, कृच्छ्रेण लब्धः, आलोकेन याति, दीपिकया याति ।

आभ्यन्तरमपि— आन्तरमवान्तरमाभ्यन्तरमनन्तरं समनन्तरं प्रत्यनन्तरं बाह्याभ्यन्तरमिति । तत्रान्तरं यथा—आत्मना बुध्यते, स्वयमुपक्रमते, स्वतः प्रकाशते, अन्योन्यतो जानाति । अवान्तरं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा-जात्या दुर्जनः, प्रकृत्या अभिरूपः, निसर्गेणार्यः, स्वभावेन सुभगः। आभ्यन्तरं यथा-अहङ्कारेण कत्थते, सत्वेन सहते, रजसाऽनुरज्यते, तमसा मुह्यति। अनन्तरं यथा—मनसा मोदते, अन्तरानाचरति, प्रतिभया पश्यति, संस्कारेण स्मरति। समनन्तरं यथा—प्रयत्नेनारभते, बुद्ध्या जानाति, सुखेन शेते, दुःखेन पठति। प्रत्यनन्तरं यथा—धर्मेण वर्धते, अधर्मेण पतति, अविद्यया मृत्युं तरति, विद्ययाऽमृतं प्राप्नोति। बाह्याभ्यन्तरमपि बहिर्मुखमन्तर्मुखं निर्मुखं बहिरुद्रेकमन्तरुद्रेकं निरुद्रेकं च। तेषु बहिर्मुखं यथा-विद्ययाऽमृतं प्राप्नोति। बाह्याभ्यन्तरं यथा—चक्षुषा पश्यति, वाचा वदति, इङ्गितेन कथयति, आकारेण ज्ञापयति। अन्तर्मुखं यथा—घ्राणेन जिघ्रति, जिह्वया स्वादयति, स्पर्शेण बुध्यते, श्रोत्रेण शृणोति। निर्मुखं यथा—निश्शङ्कत्वेन यातः, निर्भयत्वेन यातः, निष्किञ्चनत्वेन मुक्तम्, निरायुधत्वेन हतः। बहिरुद्रेकं यथा—पद्भ्यां गच्छति, पाणिभ्यां स्पृशति, संज्ञया गमयति, पौंस्नेन प्रीणाति। अन्तरुद्रेकं यथा—बलेन वर्षति, कौशलेन रञ्जयति, अभियोगेनाधीते, अभ्यासेन धारयति। निरुद्रेकं यथा-प्रायेण याज्ञिकः, गोत्रेण गार्ग्यः, अभिजनेन सौघ्नः, शाखया च्छन्दोगः, इति। निष्किञ्चनत्वस्तोकादीनां सदभावासत्वरूपत्वादसाधकत्वामिति चेत् तन्न।

यथैव सन्निधौ तस्य तथैवासन्निधावपि। भावस्य करणत्वेन क्रियासिद्धिः प्रतीयते॥
स्तोकत्वस्याभिनिर्वृत्तेरनिर्वृत्तेश्च तस्य वा। प्रसिद्धिं करणत्वस्य स्तोकादीनां प्रचक्षते॥

न च करणस्य वास्तवं रूपमस्ति विवक्षानिबन्धनत्वात्। तदुक्तम्—

वस्तुतस्तदनिर्देश्यं नहि तद्वस्तुनि स्थितम्। स्थाल्या पच्यत एषाऽपि विवक्षा दृश्यते यतः॥

न च भवति एधाः पचन्ति धनुर्विध्यति चक्षुः पश्यति मनो जानाति करणमुक्तं, संप्रदानमुच्यते, तत्रिविधं-ददातिकर्माप्यं कर्ममात्राप्यं क्रियाप्यं चेति। तत्र संप्रदानमिति महत्याः संज्ञायाः करणात्। सम्यगस्मै प्रदीयते तद्वादिना ददातिकर्मणा प्राप्यमुपाध्यायकं संप्रदानसंज्ञं भवति; तत् स्वत्वनिवृत्तौ परस्वत्वापत्तौ उभययोगे स्वोपयोगे परोपयोगे उभयोपयोगे चेति षोढा विप्रथते। स्वत्वनिवृत्तौ यथा—शिष्याय विद्यां प्रयच्छति, वराय कन्यां विश्राणयति, आप्तायोपदेशं ददाति, गुरुभ्य आत्मानं निवेदयति। परस्वत्वापत्तौ यथा—रिपुभ्यो भयं ददाति, शत्रवे प्रहारं प्रयच्छति, वादिने उत्तरं ददाति, देवतायै वाचं प्रयच्छति। उभययोगे यथा—कर्मकराय छत्रमर्पयति, मूकाय हितमुपदिशति, संवाहकाय कायं वितरति, प्रियतमाय शरीरं ददाति। वाताय चक्षुर्ददाति, पृष्ठमातपाय स्पर्शयति, गीताय कर्णं ददाति, श्रुताय चेतो वितरति। परोपयोगे यथा—पुत्रायाशिषं प्रयच्छति, छात्राय चपेटां ददाति, भीतायाभयं प्रयच्छति, आर्तायौषधं ददाति। उभयोपयोगे यथा—नापिताय क्षुरं प्रयच्छति, मैत्रावरुणाय दण्डं ददाति, प्रियतमायाधरं प्रयच्छति, प्रियायाङ्कपालीं ददाति। 'कर्मणा यमभिप्रैति स संप्रदानम्' इति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

परिभाषया लक्ष्यमाणं कर्ममात्राप्यं ; तदपि षोढा, प्रेरकमनुमन्तृनिराकर्तृ अनिराकर्तृ प्रत्यर्पकं अप्रतिग्राहकमिति । तेषु प्रेरकं यथा—याचकायान्नं ददाति, वृद्धिमुत्तमर्णाय प्रयच्छति, द्वार्थायोपचारं कल्पयति, दायादाय भागं निर्दिशति । अनुमन्तृ यथा—गामुपाध्यायाय निवेदयति, सेवकाय ग्रामं निर्दिशति, पतिंवरायै वरं दर्शयति, दास्यै वस्त्रमतिसृजति । निराकर्तृ यथा—देवाय पुष्पं क्षिपति, कुबेराय बलिमुपहरति, रुद्राय पशुमालभते, सोमायार्घ्यं ददाति । अनिराकर्तृ यथा—उन्मत्तायौषधं निर्दिशति, वादिने दूषणं ददाति, टङ्काय दण्डं करोति, शाक्यायामिषं प्रेषयति । प्रत्यर्पकं यथा—सादिनेऽश्वं निर्दिशति, सन्निधात्रे कोशमर्पयति, समाहर्त्रे राष्ट्रं निवेदयति, अमात्याय मुद्रामुपनयति । अप्रतिग्राहकं यथा—देवेभ्य उषितान्नं ददाति, पितृभ्यो भुक्तशेषं प्रयच्छति, अन्धाय रूपं दर्शयति, बधिराय शास्त्रमुपदिशति, कर्मग्रहणेन क्रियाया अपि सङ्ग्रहात् क्रियया यदाप्यते तदपि संप्रदानं क्रियाव्याप्यमिति च भवति ; कर्मणोऽस्मात् को विशेष इति चेदीप्सिततमं नाम । तदपि षोढा-शेषः कर्मशेषः कर्मव्यवहितः कर्महेतुः निमित्तहेतुरितिच । यदाह—

हेतुत्वे कर्मसंज्ञायां शेषत्वे वाऽपि कारकम् । रुच्यर्थादिषु शास्त्रेण संप्रदानाख्यमुच्यते ॥

तत्र शेषो यथा-देवदत्ताय रोचते, देवदत्ताय स्वदते, देवदत्ताय तिष्ठते, देवदत्ताय नमते । कर्मशेषो यथा-देवदत्ताय गां प्रतिशृणोति, देवदत्ताय सन्तं धारयति, देवदत्ताय दैवमीक्षते । कर्म यथा—देवदत्ताय राध्यति, पुष्पाय स्पृहयति, ग्रामाय गच्छति, देवेभ्यो नमति । व्यवहितकर्म यथा—छात्राय श्लाघते, चैत्राय शपते, होत्रे प्रतिगृह्णाति, पोत्रे अनुगृह्णाति । हेतुर्यथा—देवदत्ताय क्रुध्यति, देवदत्ताय द्रुह्यति, देवदत्तायेर्ष्यति, देवदत्तायासूयति । निमित्तहेतुर्यथा-एधेभ्यो व्रजति, श्राद्धाय निगदते, युद्धाय सन्नह्यति, पत्ये शेते इति । एतेन "रुच्यर्थानां प्रीयमाणः. श्लाघह्नुङ्स्थाशपां ज्ञीप्समानः. धारेरुत्तमर्णः. स्पृहेरीप्सितः. क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः. राधीक्ष्योर्यस्य विप्रश्नः. प्रत्याङ्भ्यां श्रुवः पूर्वस्य कर्ता. अनुप्रतिगृणश्च. गत्यर्थकर्मणि द्वितीया चतुर्थ्यौ चेष्टायामनध्वनि. क्रियार्थोपपदस्य कर्मणि स्थानिनः" इत्यादिवचनं 'कर्मणा यमभिप्रैति स संप्रदान' मित्याद्ययोगस्यैव प्रपञ्चार्थमित्युक्तंभवतीत्यवसितं संप्रदानम् । अपादानमुच्यते, 'ध्रुवमपायेऽपादानम्' कायसंसर्गपूर्वके बुद्धिसंसर्गपूर्वके वा अपाये यद्ध्रुवमवधिभूतं विवक्षितं तस्यापादानमिति संज्ञा । यथोच्यते—

अपाये यदुदासीनं तद्रूपं यदि वा चलम् । ध्रुवमेव तदावेशात्तदपादानमुच्यते ॥

तदपि त्रिविधं निर्दिष्टविषयमुपात्तविषयमपेक्षितक्रियं चेति । तदुक्तम्—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा । अपेक्षितक्रियं चेति त्रिधापादानमुच्यते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तेषु यत्रोपात्तक्रियोपादानेनापायः प्रतीयते, तन्निर्दिष्टविषयं । तत् षोढा—उज्झितमनुज्झित-मीप्सितं जिहासितं परिणतं निवृत्तमिति । तत्रोज्झितं यथा—ग्रामादागच्छति, वृक्षात्पर्णं पतति, मेषादेषोऽपसर्पति, धावतोऽश्वात्पातितः । अनुज्झितं यथा—शृङ्गाच्छरो जायते, हिमवतो गङ्गा प्रभवति, वटात्प्ररोहो लंबते, अग्नेर्धूम उच्चरति । ईप्सितं यथा—यवेभ्यो गां निषेधति, माषेभ्यो महिषान् रुणद्धि, कूपादन्धं वारयति, अग्नेर्माणवकमपसारयति । जिहासितं यथा—अरण्या-न्निष्क्रामति, गर्तात्तरति, पर्वतादवरोहति, आकाशात्पतति । परिणतं यथा—गोमयाद्वृश्चिको जायते, गोलोमविलोमेभ्यो दूर्वा भवन्ति, सुवर्णात्कुण्डलमुत्पद्यते, काशैः कटो भवति । निवृत्तं यथा—प्रभावाद्धीयते, प्रज्ञायाः प्रभ्रश्यते, न्यायादपैति, स्वरूपात् प्रच्यवते । कथं प्रभावानां ध्रौव्यमिति चेत् शब्दव्यापारतोपायाभिनिवेशः ; औदासीन्याद्यत्रोपात्तक्रियासामर्थ्यादवगम्यमान-क्रियापदेनापायप्रतीतिस्तदुपात्तविषयं । तदपि षोढा—सिद्धरूपं साध्यरूपं प्राप्यरूपमप्राप्यरूपं परिहर्तव्यं निहर्तव्यमिति । तेषु सिद्धरूपं यथा—कुलात्पतति, कुसूलात्पचति, कांस्यपात्रतो भुङ्क्ते, ब्राह्मणाच्छंसति, उपाध्यायादधीते । साध्यरूपं यथा—अध्ययनात्पराजयते, धर्मात्प्रमाद्यति, अधर्माज्जुगुप्सते, अकृत्याद्विरमति । प्राप्तरूपं यथा—आसनात्प्रेक्षते, प्रासादादवलोकयति, बलाहकाद्विद्योतते, यौवनतो विकुरुते । प्राप्यरूपं यथा—श्वङ्गादन्नं भोक्ष्यते, आमृत्योः श्रिय-माकांक्षेत्, क्रोशाल्लक्षं विध्यति, आपाटलिपुत्रात् वृष्टो देवः । परिहर्तव्यं यथा—चोरेभ्यो बिभेति, दुर्जनेभ्य उद्विजते, उपाध्यायादन्तर्धत्ते, सहाध्यायिभ्यो निलीयते । निहर्तव्यं यथा—चोरेभ्यो गुह्यं त्रायते, रोगेभ्य आतुरं रक्षति, काकेभ्यो दध्यवति, असत्यादात्मानं पाति । यत्रार्थप्रकरणा-दिभ्यो गम्यमानात् क्रियापदादपादाय बुद्धिस्तदपेक्षितक्रियं ; तदपि षोढा । सामान्यक्रियापेक्षं विशेषक्रियापेक्षं सत्वभूतापेक्षमसत्वभूतापेक्षं नियतरूपापायमनियतरूपापायं चेति । तेषु सामान्य-क्रियापेक्षं यथा—दानवेभ्यो देवा बुद्धिमन्तः, सुरेभ्योऽसुरा योद्धारः, सुह्मा ब्रह्मोत्तरेभ्य आढ्यतराः, पाटलिपुत्रेभ्यः सुकुमारतराः । विशेषक्रियापेक्षं यथा—रोहणाद्रत्नम्, पयोवारिधरात्, कुतो भवान् पाटलिपुत्रात् । सत्वभूतापेक्षं यथा—अन्यो देवदत्तात् इतरो देवदत्तात् पृथक् देवदत्तात् नाना देवदत्तात् । असत्वभूतापेक्षं यथा—ऋते देवदत्तात्. विना देवदत्तात्, आराद्देवदत्तात्, दूराद्देवदत्तात् । नियतरूपापायं यथा—कौमुद्या यक्षरात्रिः पक्षे कार्तिक्या आग्रहायणी मासे, गवेधुमतः सांकाश्यश्चतुर्षु योजनेषु, पाटलिपुत्राद्राजगृहं सप्तयोजनानि । अनियतरूपं यथा—प्राग्ग्रामात्. दक्षिणा ग्रामात्. तत उपरिष्टात् ।

अन्ये तु ध्रुवमपायेऽपादानमिति निर्दिष्टविषयं ; 'भीत्रार्थानां भयहेतुः. पराजेरसोढः. अन्तर्धौ येनादर्शनमिच्छति. आख्यातोपयोगे. जनिकर्तुः प्रकृतिः. भुवः प्रभवः. ल्यब्लोपे कर्मणः उपसंख्यानं. सप्तमीपञ्चम्यौ कारकमध्ये.' इत्यादियोगोक्तमुपात्तविषयम् । 'पञ्चमी विभक्ते, अन्यारादितरर्ते. दिक्शब्दाञ्चूत्तरपदाजाहि युक्ते. प्रतिः प्रतिनिधिप्रतिदानयोः. प्रतिविधिप्रतिदाने च

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यस्मात्.' इत्यादिकं त्ववधिभावादपेक्षितक्रियमिति त्रिधाऽपादानं मन्यन्ते । आहुश्च—

निर्धारणे विभक्तेः यो भीत्रादीनां च यो (व)विधिः । उत्पातापेक्षितापायस्सध्रुवः प्रतिपद्यते॥

उक्तमपादानम्; अधिकरणमुच्यते, 'आधारोऽधिकरणम्'; कर्तुः कर्मणो वा क्रियाश्रयस्य क्रियां प्रति य आधारस्तदधिकरणम् । तदुक्तं—

कर्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम् । उपकुर्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम्॥

तत्त्रेधा–वैषयिकमौपश्लेषिकं नैमित्तिकं चेति । तत्त्रिविधमपि अनेकप्रकारं विनोतीति विषयो जातिगुणक्रियादीनामाश्रयः, विषय एव वैषयिकमिति; विनयादिभ्यष्ठक् । तत् षोढा—जाति-वैषयिकं गुणवैषयिकं क्रियावैषयिकं द्रव्यवैषयिकं संज्ञावैषयिकमिति । तेषु जातिवैषयिकं यथा–दिवि देवाः, भुवि मनुष्याः, जले मत्स्याः, पाताले पन्नगाः । गुणवैषयिकं यथा—आयुक्तः कटकरणे कुशलः कटकरणे साधुः मातरि निपुणः पितरि प्रवीणः । क्रियावैषयिकं यथा—प्राच्यामादित्य उदेति, दक्षिणस्यामगस्त्यो दृश्यते, आकाशे शकुन्ताः पतन्ति, शब्दादिषु श्रोत्रादयोऽभिनिविशन्ते। द्रव्यवैषयिकं यथा—गोषु स्वामी. गोषु दायादः. अधिब्रह्मदत्ते पाञ्चालाः. अधिपाञ्चालेषु ब्रह्मदत्तः । संज्ञावैषयिकं यथा—ब्रह्मणि पितामहः. विष्णौ पुरुषोत्तमः. रुद्रे महेश्वरः. इन्द्रे शक्रः । सङ्केतवैषयिकं यथा—तर्जनीमध्ये उदात्तः. कनिष्ठिकामध्येऽनुदात्तः. अनामिकामध्ये स्वरितः. मध्यमामध्ये प्रचय इति । उपश्लेषोवष्टम्भः । तस्मै प्रभवत्यौपश्लेषिकम्। तदपि षोढा —एकदेशिकमभिव्यापकं सामीप्यकमौपश्लेषिकमौपशल्यकमौपचारिकं चेति । तेष्वेक-देशिकं यथा—गृहे तिष्ठति. स्थाल्यां पचति. पर्यङ्के शेते. शाखायां लम्बते । अभिव्यापकं यथा—तिलेषु तैलम्, शैलेषु रागः, गवि गोत्वं, तन्तुषु पटः । सामीप्यकं यथा–गुरौ वसति, तीर्थे वसति. गङ्गायां घोषः. कूपे गर्गकुलम् । औपश्लेषिकं यथा–द्व्यहे भोक्ता. कार्तिक्या आग्रहायणी मासे. इहस्थोऽयमविश्वासः. क्रोशे लक्ष्यं विध्यति. पाटलिपुत्राद्राजगृहं सप्तसु योजनेषु । औपशल्यकं यथा—उपखार्यां द्रोणः. उपनिष्के कार्षापणं. उपव्यामे वितस्तिः. उपशते पंचाशत्। औपचारिकं यथा—यो यस्य प्रियस्स तस्य हृदये वसति. यो यस्य द्वेष्यस्स तस्याक्ष्णोः प्रतिवसति. समे समग्रो मुष्टिमध्ये तिष्ठति. अङ्गुल्यग्रे हस्तियूथशतमास्त इति ।

निमित्तमेव नैमित्तिकं; तदपि षोढैव—देशनैमित्तिकं कालनैमित्तिकं भावनैमित्तिकं वस्तु-नैमित्तिकं कर्मनैमित्तिकं कर्मयोगनैमित्तिकमिति । तेषु देशनैमित्तिकं यथा—गेहे मोदते. अरण्ये बिभेति. जले मज्जति. श्वभ्रे पतति । कालनैमित्तिकं यथा—

काशाः पुष्यन्ति मेघान्ते मधौ माद्यन्ति कोकिलाः । पुष्ये पायसमश्नीयान्मघासु पललोदनम्॥

भावनैमित्तिकं यथा–दर्शने प्रसीदति. विरहे विषीदति. अर्थलाभे हृष्यति. अरिविनाशे तुष्यति । वस्तुनैमित्तिकं यथा—आतपे क्लाम्यति. छायायामाश्वसिति. दोषेभ्यूद्विजते. गुणेषु

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

रज्यत इति । कर्मनैमित्तिकं यथा—इष्टि यज्ञे परिगणिती याज्ञिक्ये. आम्नाती छन्दसि. अधीती व्याकरणे । कर्मयोगनैमित्तिकं यथा—

चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । वालेषु चमरीं हन्ति सीम्नि पुष्कलको हतः ॥

ननु च निमित्तहेतोः कारकत्वात् कारकस्य च प्रयोजकपरतन्त्रत्वादिह कथं कारकत्वमिति । उच्यते द्विविधः कारकहेतुः, प्रवृत्तप्रेरकः अप्रवृत्तप्रेरकश्च । तत्राद्यो णिज्विषयः, इतरस्तु विध्याद्यात्मको निमित्तात्मकश्च । तयोश्च प्रथमो लिङ्लोट्तव्यादिवाच्यः । तदुक्तम्—

द्रव्यमालस्य तु प्रेषप्रच्छादेः लोड्विधीयते । सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः ॥

निमित्तात्मकस्तु क्रियाशल्यत्वात् सप्तमीवाच्यो नैमित्तिकमधिकरणमिति विभक्तमधिकरणम् । ननु च उपखार्यां द्रोणः, अधिपाञ्चालेषु ब्रह्मदत्त इत्यादौ यद्यधिकरणमेव सप्तमी अधिकरणं किं ? उच्यते 'यस्मादधिकं. यस्य चेश्वरवचनं तत्र सप्तमी' इति । उच्यते कर्मप्रवचनीययुक्ते द्वितीया मा बाधिष्ट इति । ननु च 'उपपदविभक्तेः कारकविभक्तिर्बलीयसी' ति द्वितीया न भविष्यति । यथा—गोस्वामी व्रजति देवानां नमस्करोतीति । नैवम्; नेयमुपपदविभक्तिः, अपित्वन्तर्भूत-क्रियान्तरसंबन्धा कर्मविभक्तिः । तद्यथा—शाकल्यस्य संहितामनु प्रावर्षत्, संहितामनुनिगम्येत्यर्थः । किं तर्हि किमर्थं विधीयते कारकान्तरेऽपि यथा स्यात् तेन उपार्जुनं योद्धार इत्यपादानेऽपि पञ्चमी बाध्यते । अत एव पञ्चम्यपाङ्परीत्यपादानेऽप्यारभ्यत इति । एतेनाधीती व्याकरणे, एधेभ्यो व्रजतीत्यादयः कारकविभक्तिविषये, गोषु स्वामी, प्राग्ग्रामादित्यादयः संबन्धविभक्तिविषये कारकविभक्तिसमावेशात् प्रकाशिता भवन्ति ।

ननु च शक्तिस्साधनं तद्वशेन द्रव्यस्य क्रियासु योगित्वात् । किञ्च द्रव्यमपि साधनं कल्पयित्वा साधनभेदादपुनराश्रयितव्याश्शक्तयः संन्यस्ता एव सत्यभेदास्साधनमिति कल्पितम् । न च तासामधिकरणद्रव्यमेतावति द्रव्यानपेक्षसाधनत्वं; द्रव्यस्यापि स्वकर्मणायत्तजन्मनस्तदपेक्षया तुल्यदोषत्वात् । शक्तीनामेव च साधनत्वे प्रत्ययाभिहितासु शक्तिषु द्रव्यवचनानामनुप्रयोगो युज्यते । वर्धते देवदत्तः परिगतमर्थतत्वं इति द्रव्ये तु साधने तस्याभिहितत्वादनुप्रयोगो न प्राप्नोति । शक्तीनामेव च साधनत्वेऽद्य भुक्त्वा देवदत्तो द्व्यहे द्व्यहाद्वा भोक्तेति शक्तिमध्यवर्तिनि काले सप्तमीपञ्चम्यौ कारकमध्ये लभ्येते । द्रव्यस्य देवदत्तादेरेकत्वान्मध्ये द्व्यहादिकालो न संभवति । शक्तीनामेव च साधनत्वे प्रासादे आस्त इति घञादिविषयमधिकरणमभिहितं, न त्वासिविषय-मित्यनभिहितविषयलक्षणा सप्तमी लभ्यते । द्रव्ये सत्यभिहितत्वात् इति शक्तीनामेव साधनत्वे योऽयमेकद्रव्याधिकरणः साधनभेदः श्रूयते, स उपपन्नो भवति । वेगेन पतितो रुग्णात् स्फुरतो ध्वनिरुदित इति । द्रव्ये तु तस्यैकत्वान्न संभवति । क्रियाभेदनिबन्धनो भविष्यतीति चेन्न कर्मादि-नियमो बाध्येत; प्रतीतिभेदश्च न स्यात्, तत्र क्रियाया अर्थान्तरत्वात् ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

न ह्यन्यस्य भेदः, अन्यस्माद्भिद्यते। अपिच द्रव्यस्यैकत्वे कुतः क्रियाभेदकारणभेदः कार्यस्याभेदात्। शक्तीनामेव च साधनत्वे प्रातिपदिकाद्विभक्तयो युज्यन्ते । द्रव्यस्य तु प्रातिपदिकेनाभिहितत्वात् अनर्थका नोत्पद्येरन् वचनात् स्वार्थिका इति चेत् कर्मादिनियमो बाध्येत, प्रतीतिभेदश्च न स्यात्। वृक्षं वृक्षेणेति अस्ति चासावभिन्नेऽपि प्रातिपदिकार्थे तस्मादर्थान्तरं प्रातिपदिकार्थाद्विभक्त्यर्थः कारकमिति । नैवम् ; शक्तिमद्द्रव्यं कारकं क्रियानिष्पत्तावुपात्तव्यापारत्वात् । न चाशक्तान्न क्रियानिष्पत्तिरित्येतावती शक्त्यपेक्षा तस्य साधनत्वं विहन्ति ; शक्तेरपि द्रव्यापेक्षत्वे तुल्यदोषत्वात् । न चान्यापेक्षा कारकाणां कारकत्वं विरुणद्धि, कार्यत एवान्वयव्यतिरेकाभ्यां कारकत्वावगतेः। कार्यं हि कस्यचित् संभवेऽप्यनवाप्तसत्कारः पुनरवाप्नुवन् सत्तान्तरस्य भाव एव परिगृहीतातिशयान्तरस्य कारणतां सूचयति ; न त्वकारणतामेव। विशेषशालिनि तस्मिन्नेव पुनः भवन् तदभावे चाभावात् । न खलु कुसूलादौ बीजसमवधानेऽप्यलब्धोपलब्धेरङ्कुरस्य क्षित्यादिसहकारिग्रामबीजस्य समवधानसंदृश्यमानमूर्तेरन्वयकार्यं न प्रतीयते । अपि तु तदेव बीजं समवहितक्षित्यादिसहकारिप्रत्ययमस्य जनकमितरथेति गम्यते। द्रव्यस्यैकत्वात् साधनभेदः कथमिति चेत् एकद्रव्याधिकरणाश्शक्तयो भिन्नरूपाः स्वरूपभेदेनाश्रयभेदमुपदधन्त्योऽभेदमधिकरणस्य दर्शयन्ति । एकस्यापि देवदत्तादेः शिल्पभेदात्तक्षायस्कारादिसमाख्या अर्थभेदव्यवस्थां चरतीति। तत्तूक्तम् ; द्रव्ये साधने प्रत्ययाभिहितत्वात्तदनुप्रयोगो न स्यात् । तत्र सामान्यमभिहितं, विशेषो न प्रयोक्ष्यते न वक्तव्यं साधने विधीयमानः प्रत्ययः कथं साधनं सामान्यमभिदधीत ? सामान्यस्य विशेषाश्रयत्वात् विशेष एव वा प्रत्ययेनैकरूपत्वादनुप्रयोगापेक्षिणाऽभिधीयते गोशब्देनैव प्रकरणाद्यपेक्षिणा गवादिरर्थ इति ।

ननु चान्यापेक्षया विशेषमभिदधतः प्रत्ययस्य कथमभिधानशक्तेर्नोपरोधः ? यथा गवादिं अभिदधतो गोशब्दस्य शक्तावपि चैतत्समानं साधनशक्तीनां विशेषे शब्दस्याभिधानशक्तिप्रतिघात इति । नैवं, शक्तिर्विशेष एवोच्यते धातोः क्रियाविशेषवचनादेव प्रत्ययोत्पत्तेः । स च कार्यविशेषाश्रयभेदाभ्यामवधार्यते । तत्र कार्यभेदो धातुनैवाभिहितः ; आश्रयभेदः पुनरप्रतीतः पदान्तरेणैवोच्यते । चैत्रो मैत्र इति तथाप्यन्यापेक्षा तुल्यैव । न चाश्रिताश्रययोस्सामानाधिकरण्यं अतश्चैत्रो वर्धयतीति न स्यात्, अपि तु चैत्रो वर्धत इति। अपि च धातुः क्रियाविशेषवचन एवेति कुत एतद्वर्धते यावदनेन वर्धयितव्यं ; इदं कर्म कुर्याः, नागरकवृत्तं वर्तते, सामान्येनैषा न पुष्यति, इत्यादौ सामान्यस्य विशेषः प्रतीयते । यत्तु देवदत्तादेर्द्रव्यस्यैकत्वान्मध्ये द्व्यहादिः कालो न संभवतीत्युच्यते, तदपि न सम्यक् ; आश्रितोपाधिनिमित्तस्य भेदस्योपपत्तेः । तथाहि ; वक्तारो भवन्ति, पटुर्भवान्, पटुरासीत्, पटुतरश्श्रेष्ठः, अद्यान्यं एवासि संपन्न इति तदेवं सामर्थ्यभेदादाहितविभागमधिकरणं भागशोऽवच्छिद्य साधनभेदः प्रकल्प्यमानो मध्यमप्युपकल्पयति ।

न च शक्तिपक्षेऽपि साक्षान्मध्यसंभवः पूर्वशक्तिकाले परस्याः परकाले तु पूर्वस्याभावात्।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अथवा ह्यहे भोक्तव्यवधिसप्तमी ह्यहादभोक्तव्यवधिरेव पञ्चमी स चान्त्यभोजनेनावच्छिद्यते । यदि तु मध्यसिद्धये द्रव्यभेदश्शक्तिभेदश्च कल्प्यते तदा कर्तृभेदात् भुक्त्वेति क्त्वाप्रत्ययः समानकर्तृकयोः पूर्वकाल इति न स्यात् । उपचरिताभेदाश्रयस्स इति चेन्मध्यं न सिध्यति । अथैकत्वात् भुक्तिक्रियायां कारकैकत्वकालभेदाश्रयश्च कारकभेदः स्त्वो व्रजतीति न स्यात्, स्नानस्नप्रज्यायाश्च भेदात् तन्निमित्तयोः कर्तृशक्त्योरपि भेदे समानकर्तृकत्वाभावात् । ननु चात्रापि द्रव्यमाश्रितशक्तिभेदसंपादितनानात्वं साधनं तस्याप्येष दोषः । अपि च भिन्नाधारवर्तितया सामर्थ्ययोरभेदमाधेयशक्तिवादिना शक्यते वक्तुं समानः कर्त्रेति । यस्य तु शक्तिभेदोपनीतस्तदाधारस्य भेदस्तस्य निबन्धनमुपचरितमप्येकत्वं न विद्यते, अपेक्षणीयश्चाधारभेदक्रियाभेदस्य पौर्वापर्यवतः अपेक्षितत्वात् । अत्रोच्यते द्रव्यस्यैकत्वेन शक्त्योरेकत्वमुच्यते । शक्तिनानात्वेन च द्रव्यस्यापि नानात्वं करिष्यते ; द्रव्यस्य तु पारमार्थिकमप्येकत्वं न मृष्यत इत्यहो कामचारः । अपितु शक्तौ साधने पशौ कर्तरि हस्तिकवाटयोः कर्त्रोरिति कथं शक्तिराख्या धारावच्छिन्ना प्रतिपाद्यते, प्रतिपाद्यतां सामानाधिकरण्यं पृच्छामि पशौ द्रव्ये यः कर्तेति चेत् उपमानात् कर्तुरिति न प्राप्नोति ।

अथ शक्तिभेदोपकरणाः कर्त्रादिश्रुतयः तदपि कारणं कार्ययोगितयाऽवगमयति । शुक्लादयः रूपविशेषाश्रयमिति सामानाधिकरण्योपपत्तेः । जितं तर्हि भवता, सिद्धश्शक्तिसाधनभेदः कर्त्रादिश्रुतिभिराश्रयस्य शक्तिमतोभिधानात् । किञ्च शक्तिकारकपक्षे कम . . . कर्मणो द्वित्वे कर्मणो बहुत्वे विभक्तिवचनादिति न स्यात् । न हि गुणस्य संख्यासंबन्धो दृश्यते ; पञ्च कर्माणि, चतुरो भावास्त्रयस्संयोगा द्वे सामान्ये एकस्समवाय इति । न चायमुपचारः प्रत्ययाविशेषात् ; एवं शक्तयोऽपि कार्यभेदाभिन्नास्सङ्ख्याभेदमनुभविष्यन्ति । सत्यमस्ति शक्तीनां भेदः, न तु तत्रापि ते वचनभेदं, यस्मादादित्यं पश्यति स्तौतीति दर्शनादिक्रियाभेदात् भिन्नास्वपि शक्तिषु न बहुवचनं दृश्यते । न पर्यायोक्तौ शक्तयः क्रियाभिरभिसंबध्यन्त इति चेन्न । प्रत्येकसमाप्ता अपि क्रियाभेदास्समस्याभिधानेषु वचनभेदं प्रयुञ्जते । यथा पञ्च शरानस्यति, सव्यापसव्याभ्यां विध्यति, द्वयोः पर्यङ्कयोश्शेते इति । न च पर्यायेणैव दर्शनादयस्स्युः यौगपद्येनापि भावात् । तस्मात्सामर्थ्याधारनिबन्धनो वचनभेदो न शक्त्याश्रय इति । अत एव स्वातन्त्र्या विभक्त्याऽपि शक्तिर्नाभिधीयते । यदि हि स्वतन्त्रां शक्तिं विभक्तिरभिदध्यात् तदा तद्गतामेव संख्यां विभक्तिरभिदधीत ; समानशब्दोपादानात् न चैतदस्ति । तस्माद्यस्य संख्यां विभक्तिरुपादत्ते तदेव शक्तिमत्कारकमिति ।

यत्तु शक्तावेव विभक्त्यर्थे वर्तमानमव्ययं समस्यते इत्युच्यते तच्छक्तिमत्यपि कारके अव्ययानामपि सत्ववचनात्तन्मात्राभिधानमिति कथं सत्वभूतं द्रव्यमसत्वार्थे नाव्ययेनाभिधीयेत ? यस्तु प्रासाद आस्त इत्यनभिहितलक्षणा सप्तमी न लक्ष्यत इति तत्र यथा—घञादिविषये शक्तिमद्द्रव्यमभिहितं, न त्वासित्रिषयशक्तिमदिति तत्र न च केन सप्तमी वार्यते ? यदि च घञादयः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

शक्तिमभिदधीरन् तदा शक्तेरसिशब्दाभिहितायाः शक्त्यन्तरायोगादास्तां सप्तमी द्वितीयादयोऽपि नोत्पद्येरन् । कथं चैवमाह अधिकरणादिवचनानि प्रसादादयः । ते हि संज्ञाशब्दा वृक्षादिवदेव केषुचिदर्थविशेषेषु रूढाः केवलममीषां धर्मनियमा वा यथाकथञ्चिदुत्पत्तिं एतेन च वेगेन पततः इत्यादौ ये यमेकद्रव्याधिकरणा साधनभेदश्रुतिः सापि प्रतिविहितैव भवति ।

न चैतावता कारके प्रातिपदिकादयो नोत्पद्येरन् । द्रव्यं हि विभक्तिलिङ्गशक्तिसंख्यालिङ्गवच्च विभक्तिवचनसंस्कारो लभ्यत इत्यतः स्थितमेतच्छक्तिमद्द्रव्यं कारकमिति । आख्यातप्रत्ययाभिधेयं कारकविशेषः पुरुषः । स त्रिधा– प्रथमो मध्यम उत्तमश्च । तत्र परस्मैपदात्मनेपदयोः प्रथमत्रिकाभिधेयः प्रथमः, मध्यमत्रिकाभिधेयो मध्यमः, अन्त्यत्रिकाभिधेय उत्तमः । तत्र च—

प्रत्युक्तापरभावश्चेदुपाधिः कर्तृकर्मणोः । तयोःश्रुतिविशेषेण वाचकौ मध्यमोत्तमौ ॥

तदाह– युष्मदि मध्यमः, अस्मद्युत्तमः, शेषे प्रथम इति । तत्र कर्तरि पुरुषप्रयोगो यथा—

अथाऽऽह वर्णी विदितो महेश्वरस्तदर्थिनी त्वं पुर एव वर्तसे ।
अमङ्गलाभ्यासरतिं विचिन्त्य तवाभ्यनुज्ञां न तु कर्तुमुत्सहे ॥

कर्मणि यथा—

यदि त्वं मन्यसे तेन त्वया स यदि तोष्यते ।
तत्किमास्था न कोपेन दूति दद्यामहे वयम् ॥

अथैषां क्वचित् प्रथम एव यथा—भावप्रयोगेषु युवाभ्यामास्यते, अस्माभिर्गण्यते इति । क्वचिन्मध्यम एव यथा— क्रियासमभिहारत्रयाभ्यां स समुच्चयेषु लुनीहि लुनीहीत्येवायं लुनाति, अलावीत् लविष्यति वा, अधीष्वाधीष्वेत्येवमधीयाते, अध्यैषातां अधीष्येते वा, राष्ट्रमट, मठमट खदूरमटेतेयेवावामटावः, अटिष्व अटिष्यामो वा, छन्दोऽधीष्व व्याकरणमधीष्व, निरुक्तमधीष्वेत्येव वयमधीमहे, अध्यगीष्महि अध्येष्यामहे वा, सक्तून् पिब, धानाः खादत, ओदनं भुङ्क्ष्व इत्येवं यूयमभ्यवहरत अभ्यवाहार्ष्ट अभ्यवहरिष्यथ वा । क्वचिदुत्तम एव यथा— प्रहासे मन्यन्ते, एहि मन्यन्ते, रथेन यास्यसि, दुहि यास्यसि, यातस्ते पिता. एहि मन्ये ओदनं भोक्ष्यसे, न हि भोक्ष्यसे, भुक्तस्सोतिथिभिरिति । मन्यतेस्तु उत्तमविषयेऽपि मध्यम एव ; तत्राप्यत्रायमर्थः. एहि मन्यसे ओदनं भोक्ष्यथ. इति । युगपद्वचने पुनः पुरुषाणां परो भवति । यथा— स च त्वं च पचथः, त्वं चाहं च पचावः, स च त्वं चाहं च पचाम इति । युगपद्वचनता चैकशेषस्य द्वन्द्वसमानार्थत्वाच्च अर्थविषयैव गृह्यते ; न चार्थविषया । तेन—

अहं वा कुम्भकर्णो वा त्वं वा राक्षसपुङ्गव । इन्द्रजिद्वा निकुम्भो वा वहेयुर्भारमीदृशम् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

शेषे प्रथम एव भवति, त्वमहमन्यो वा गच्छात्विति । एवं तर्हि चार्थे युगपद्वचनतायामभावात् वहेयुरिति बहुवचनं न प्राप्नोति । नैवम्; वार्थेषु क्वचिद्युगपद्वचनता दृश्यते । यथा—द्वौ वा त्रयो वा द्वित्रा इति आह च महाभाष्यकारः, द्वौ प्रयुक्ते त्रयो वेति गम्यते, त्रयो वेत्युक्ते द्वौ वेति गम्यते । सैषा पञ्चाधिष्ठानवाक् । तत्र युक्तं बहुवचनं सामान्याश्रयो वा बहुवचनम्; यथा—कति भवतः पुत्राः, कति ते भार्या इति बहुत्वं संपद्यते यस्मिन्नतस्मिन्युष्मदाश्रया ।

प्रवृत्तिः पुरुषस्यास्ति प्रकृते स्सा विधीयते ॥

यथा अत्वन्तं संपद्यते त्वद्भवति, अयूयं यूयं संपद्यन्ते युष्मद्भवन्तीति, उपलक्षणं चैतत् । प्रकृतिविकृत्याश्रयपुरुषसंप्रधारणायां प्रकृत्याश्रय एव पुरुषो भवति, न विकृत्याश्रय इति । तेन अनहमहं संपद्यते मद्भवति, अवयं वयं संपद्यन्ते अस्मद्भवन्ति, असस्स संपद्यते तद्भवति, अनहमहं संपद्यसे मद्भवसीत्याद्यपि सिद्धं भवति । का पुनरत्रोपपत्तिः? अभूततद्भावे प्रकृति-विकृत्योः कर्तृत्वविवक्षायां कामचारः । तथाहि; क्वचिद्विकृतेः कर्तृत्वं विवक्ष्यते । यथा—मूत्राय संपद्यते यवागूः, यथा च सुवर्णपिण्डः पुनरपरया आकृत्या संपृक्तः खदिराङ्गारसवर्णे कुण्डले भवत इति । तथाहि; क्लृपि संपद्यमाने या चतुर्थी सा विकारतः । सुवर्णपिण्डे प्रकृतौ वचनं कुण्डलाश्रयम् । क्वचित्तु प्रकृतेः; यथा—सङ्घीभवन्ति ब्राह्मणाः, महद्भूतश्चन्द्रमा इति । अत्र यदि प्रकृतेः कर्तृत्वं न विवक्ष्यते तदा विकृतेस्सङ्घस्यैवकर्तृत्वाद्भवन्तीति बहुवचनं न प्राप्नोति । महद्भूतः इत्यत्र च महच्छब्दस्य च मुख्यार्थत्वादान्महतस्समानाधिकरणजातीययोरित्यात्वं स्यात् । प्रकृतिर्हि काचिदुपचरितविकाररूपा, यथा इन्द्रस्थूणा उपेन्द्रो ग्राव इति । काचित्परिणामिनी यथा—दुग्धं दधि भवति, हेम कुण्डलीभवति । तत्र विपरिणामिनीषु प्रकृतिषु संघमहत्वादिभिर्मुख्यैरपि योगे पूर्वस्या अवस्थायाः प्रच्युतस्योत्तरामवस्थां प्राप्तस्य पूर्वोत्तरयोरवस्थयोराश्रितयोस्सव्यापार-त्वात् पूर्वस्यावस्थायां कर्तृत्वविवक्षायाः सङ्घमहदादेर्विकारशब्दस्य प्रकृत्युपग्राहिणो गौणत्वं विज्ञायते । तदुक्तं—

महत्त्वं सङ्घभावं च प्रकृतिः प्रतिपद्यते ।
भेदेनापेक्षिता सा तु गौणत्वस्य प्रसाधिका ॥

इति । यद्येवम्, अतिमहती महती संपन्ना महद्भूता ब्राह्मणीति पुंवद्भावो न प्राप्नोति, अर्थाश्रयः एतदेवं भवति । शब्दाश्रयश्च पुंवद्भावः; यथा गो तो णित्, औतोंशसोरिति वाह्लीके । वर्तमानस्य गोशब्दस्य गौस्तिष्ठति गामानयेति वृद्धिरात्वं च भवति ।

तेऽमी क्रिया च कालश्च कारकं पुरुषस्तथा ।
उक्ताः पदार्थाश्चत्वारस्स्वैस्स्वैर्भेदैस्समन्विताः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्रव्यात्मा चापि कालो यः प्रसङ्गात्सोऽपि कीर्तितः ।
स हि प्रायः प्रबन्धेषु तत्र तत्रोपयुज्यते ॥

क्रियायां कालोन्तर्भवति पुरुषः कारकपदे ।
प्रधाने सोपाधिद्वयमपि तदेतन्निविशते ॥

प्रधानं तं प्राहुर्यमभिदधते यज्ञप्रभृतयः ।
सहोपस्काराथैर्निवसति स तु प्रातिपदिके ॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे क्रियाद्यर्थचतुष्टयप्रकाशो नाम चतुर्थः प्रकाशः ॥



CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

# पञ्चमः उपाध्यायार्थचतुष्टयप्रकाशः

प्रकृत्यर्थप्रत्ययार्थभेदेषु कारकाणां प्रवृत्तिविशेषः क्रिया ; तामनुपहितां कृभ्वस्तयो वदन्ति । तेषां परस्परमसंभेदसंभेदाभ्यां साम्योत्कर्षापकर्षजन्मानः द्वादश धात्वर्थभेदाः क्रिया भवन्ति । तद्यथा— अकर्मकाः, अन्तःकर्मकाः, अर्थान्तरकर्मकाः, अविवक्षितकर्मकाः, प्रसिद्धकर्मकाः, द्विकर्मकाः, प्रसिद्धकर्तृकाः, भावकर्तृकाः, कर्मकर्तृकाः, कर्तृस्वक्रियाः, कर्मस्वक्रियाः, उभयस्वक्रियाश्चेति । ते चापरिस्पन्दसपरिस्पन्दभेदात् प्रत्येकं द्विधा भूत्वा चतुर्विंशतिर्जायन्ते । तत्र स्वभावतोऽस्तिः तदासीनकर्तृकत्वादपरिस्पन्दः । करोतिः प्रयुञ्जानकर्तृकत्वात्सपरिस्पन्दः । भवतिः विकुर्वाणकर्तृकत्वात्सपरिस्पन्दापरिस्पन्द इति स्थितम् । अतोऽस्त्यर्थाश्च न्यग्भवतयो न्यगस्तयश्चाकर्मका भवन्ति । तेषु पूर्वे अपरिस्पन्दा यथा—म्रियते, स्वदते, वर्तते, प्रीयत इति । उत्तरे सपरिस्पन्दाः यथा—जायते, विवर्धते, स्फुरतीति । त एव न्यक्करोतयोऽन्तःकर्मकाः ; तेषु पूर्वे अपरिस्पन्दाः यथा—जीवति, म्रियते, पुत्रीयति, प्राणितीति । उत्तरे सपरिस्पन्दाः यथा— नृत्यति, श्वसिति, बाष्पायते, रोदितीति । अस्तिकरोत्यर्थाः करोतिभवत्यर्थाश्चार्थान्तरकर्मकाः । तेषु पूर्वे अपरिस्पन्दाः यथा—तरति काष्ठं, तरति विपदं, विपर्यस्यति मतिं, विपर्यस्यति हस्तमिति । उत्तरे सपरिस्पन्दाः यथा—वहति नदी, वहति भारं, पतति पर्णम्, पतत्यध्वानमिति । त एवानुत्करोतयोऽपि विवक्षितकर्मकाः । तेषु पूर्वे अपरिस्पन्दाः यथा— संज्ञा संज्ञिन्यभिनिविशते, बुद्धिस्तत्त्वमभिनिविशते, तीर्थं उपवसति, त्रिरात्रमुपवसतीति । उत्तरे सपरिस्पन्दाः यथा— चैत्रो हसति, मैत्रो हसति, चक्रं भ्रमति, देशाद्भ्रमतीति । उत्करोतयस्तु, त एव प्रसिद्धकर्मकाः । तेषु पूर्वे अपरिस्पन्दाः यथा— वपतीत्युक्ते बीजमिति गम्यते, प्रसूत इत्युक्ते गर्भमिति गम्यत इति । उत्तरे सपरिस्पन्दाः यथा— कृषतीत्युक्ते क्षेत्रमिति गम्यते, परिणयतीत्युक्ते कन्यामिति गम्यत इति । सत्येवोत्करोतित्वे न्यगस्तयो न्यग्भवतयश्च त एव द्विकर्मकाः । तेषु पूर्वे अपरिस्पन्दाः यथा— लिङ्गं लिङ्गिनमवगमयति ज्ञातारं, जयति शतमश्वानश्वसेनमिति । उत्तरे सपरिस्पन्दाः यथा— गां दोग्धि पयः, वृक्षमपचिनोति फलानीति । एवमेते षट् वियोगविकल्पाः परं त्रियोगविकल्पाः षड्भवन्ति । तत्रोदस्तय उद्भवतयो वा प्रसिद्धकर्तृकाः । तेषु पूर्वे अपरिस्पन्दाः यथा— दहतीत्युक्ते वह्निरिति गम्यते । उत्तरे सपरिस्पन्दाः यथा— कूजतीत्युक्ते पिक इति गम्यते, हेषत इत्युक्ते अश्व इति गम्यत इति । न्यग्भवतिकरोतयो न्यगस्तिकरोतयो वा भावकर्तृकाः । तेषु पूर्वे अपरिस्पन्दाः यथा— चोरस्य रुजति, चोरस्यामयति, चोरं ज्वरयति, चोरं संतापयतीति । उत्तरे सपरिस्पन्दाः यथा— भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यादिति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

उदस्तिन्यक्करोतय उद्भवतिन्यक्करोतयो वा कर्मकर्तृकाः। तेषु पूर्वे अपरिस्पन्दाः यथा—दुग्धे गौस्स्वयमेव, प्रसूते गौस्स्वयमेव, वृणीते कन्या स्वयमेवेति । उत्तरे सपरिस्पन्दाः यथा— अवकिरते हस्ती स्वयमेव, उच्छ्रयते दण्डस्स्वयमेव, नमते दण्डस्स्वयमेव, आरोहयते हस्ती स्वयमेवेति। उदस्तिकरोतयः उद्भवतिकरोतयो वा कर्तृस्थक्रियाः । तेषु पूर्वे अपरिस्पन्दाः यथा– अर्हति पूजां, जानाति वर्णं, पश्यति रूपं, शृणोति शब्दमिति । उत्तरे सपरिस्पन्दाः यथा—गच्छति ग्रामं, आरोहयत्यश्वमिति। न्यग्भवत्युत्करोतयो न्यगस्त्युत्करोतयो वा कर्मस्थक्रियाः । तेषु पूर्वे अपरिस्पन्दाः यथा—दुनोति शत्रुं, धिनोति मित्रं, मदयति सुहृदं, सुखयति सखायमिति । उत्तरे सपरिस्पन्दाः यथा—पचत्योदनं, भिनत्ति कुसूलं, संक्ष्णुते श्लक्ष्णयते वा शस्त्रं, तक्ष्णोति यूपमिति । न्यग्भवत्युदस्तिकरोतयो न्यगस्त्युद्भवतिकरोतयो वा उभयस्थक्रियाः। तेषु पूर्वे अपरिस्पन्दाः यथा —लभते पूजां, प्राप्नोति धर्मं । उत्तरे सपरिस्पन्दाः यथा— भुङ्क्ते ओदनं, अधीते स्वाध्यायं, तप्यते तपः, साधयति स्वर्गमिति ।

ननु च, भवति पक्ष्यति, भवत्यपाक्षीत्, भवेदपि भवेत्, स्यादपि स्यादिति नैतावस्तिभवत्यर्थावपि तु साक्षादस्तिभवती। तौ चानुपहितक्रियाभिधायकाविति नोपाधीभवितुमर्हतः। उच्यते, असभुवि, भूसत्तायामिति धातुपाठादनुप्रयोगवर्जमार्धधातुकेऽस्तेर्भूर्विधानात्सङ्कर एवेति विज्ञायते । एवमपि करोत्यर्थानुप्रवेशो दुरुपपादः । सोऽपि कर्तृत्वान्यथानुपपत्तेरुपपद्यते ।

ननु च, भवति पक्ष्यति, भवत्यपाक्षीदित्ययं लट् प्रयोग एव । अस्तिगच्छामो वयमिति च अस्तिप्रयोगोऽपि भावकर्तृकेषु दृश्यते । नैवम्; नास्माभिरस्तिभवती भावकर्तृकावुच्येते । अपि तु अस्तिभवतिकर्तारोऽस्त्यादयः पचत्यादयश्च । ते हि रुजत्यादिवदुपाधिपरा अप्यस्तौ कर्तारो भवन्ति। एतावांस्तु विशेषः रुजादीनां कर्तृत्वं तत्परेणैव लकारेणोच्यते । पचादीनां च भवत्यस्तिपरेणेति; यथा च धात्वर्थः क्रियोपाधिरेवं कालोपि। यदुक्तम्—

क्रियोपाधिश्च संभूतभविष्यद्वर्तमानताः । परापरविभागार्थास्सशक्तिः प्रतिपद्यते ॥

स भूतादिभेदाद्द्वादशधा। तद्यथा—भूतः, भूतानद्यतनः, भविष्यत्, भविष्यदनद्यतनः, वर्तमानः, वर्तमानानद्यतनः, परोक्षः, अतिपन्नः, अव्यक्तः, सङ्कीर्णः, प्रकीर्णः, विप्रकीर्ण इति। लुङादिविषयोऽप्यतीतमात्र भूतः; स षोढा—भूतः, प्रकर्षभूतः, भूतानद्यतनः, अभिमानाद्यतनः, प्रबन्धाद्यतनः, सामीप्याद्यतनः इति । तेष्वनिर्धारितविशेषो भूतो यथा– अकार्षीत्, निषसाद, उवास, शुश्राव, अपक्त, पक्तवानिति । शब्दान्तरावगतप्रकर्षादनवेक्षितानद्यतनपरोक्षादिप्रत्ययः प्रकर्षभूतः यथा—अवात्सुरिह पुरा च्छात्राः । विवक्षितान्यावधिर्भूतानद्यतनः, यथा—अन्यामगामघोषात् । रात्रिशेषो जागरणसंततावभिमानानद्यतनः, यथा—अमुत्रावात्सम्, सकलां रात्रिं जागरितः, रात्रेरप्रभातत्वादद्यतनमिव कालं मन्यते । अविवक्षितक्रियाविरामः प्रबन्धाद्यतनः ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा—यावज्जीवं भृशमन्नमदात् । विवक्षितक्रियानन्तर्यः सामीप्याद्यतनः । यथा—येयं गता पौर्णमासी अस्यामुपाध्यायोऽग्नीनादधीत । अत्रानन्तरयोर्वाऽनद्यतनवत् क्रियाप्रबन्धसामीप्ययोरिति स्मर्यते । एवं लङ्निमित्तमविद्यमानाद्यतनो भूतानद्यतनः । स षोढा—सामान्यानद्यतनः, विशेषानद्यतनः, अभिज्ञानद्यतनः, प्रसिद्धपरोक्षः, प्रश्नापरोक्षः, हशश्वदपरोक्ष इति । तेष्वविवक्षित-परोक्षत्वादिः सामान्यानद्यतनः । यथा—अकरोत्, अशृणोत्, न्यषीदत्, अमुत्रावसम्, आसीदिदं तमो भूतं, रामो वनमगच्छदिति । पदान्तरावगतपरोक्षत्वादिविशेषो विशेषानद्यतनः । यथा—अवसन्निह पुरा छात्राः । न यदीत्यभिज्ञावचनं लडपवादोऽभिज्ञानद्यतनः, यथा—स्मरसि देवदत्त काश्मीरेषु यदवसाम । लोकप्रसिद्धेरारोपितापरोक्षाभिमानः प्रसिद्धपरोक्षः, यथा—अजयज्जयन्तो हूणान् । प्रश्नोपभुक्तपरोक्षत्वं प्रश्नापरोक्षः, यथा—किमगच्छद्देवदत्तः । हशश्वदर्थोप-क्षीणपरोक्षत्वो हशश्वदपरोक्षः, यथा—इति हाकरोत्, शश्वदकरोदिति । अनागतमात्रं लडादि-विषयो भविष्यत्प्रबन्धाद्यतनस्सामीप्याद्यतनः प्रविभागाद्यतन इति । तेष्वनिर्धारितानद्यतनादिः सामान्यभविष्यत्, यथा—करिष्यति, बलिरिन्द्रो भविष्यति, कदा गमिष्यसि ? एष गमिष्यामि, पश्यन् व्रजति, पाचको व्रजतीति । निर्धारिताद्यत्वविशेषो विशेषभविष्यत्, यथा—अद्य गमिष्यामीति । लिप्सोपाधिको लिप्साभविष्यत्, यथा—यो मे भिक्षां दास्यति स स्वर्गं लोकं यास्यतीति । अविवक्षितक्रियाविरामः प्रबन्धाद्यतनः, यथा—यावज्जीवं भृशमन्नं दास्यतीति । विवक्षितक्रियानन्तर्यस्सामीप्याद्यतनः, यथा—येयमागामिनी पौर्णमासी अस्यामुपाध्यायोऽग्नीना-धास्यतीति । भविष्यति मर्यादावचने परस्मिन्कालविभागेचानहोरात्राणां परस्मिन्विभाषेति प्रविभागानद्यतनः, यथा—योयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्रौदनं भोक्ष्यामहे । योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र युक्ता अध्येष्यामहे । एवं परस्मिन्विभाषेत्यपि द्रष्टव्यमिति । भविष्यन्नेवाविद्यमानाद्यतनो लुण्णिमित्तं भविष्यदनद्यतनः, स षोढा—सामान्यानद्यतनः, लिप्सानद्यतनः, परिदेवनानद्यतनः, परावरविभागीयः, परप्रविभा-गीय इति । तेष्वनिर्धारिताक्रियाप्रबन्धादिः सामान्यानद्यतनः, यथा—कर्ता कर्तारौ कर्तारः, कारिता कारितारौ कारितार इति । शब्दान्तरावगतविशेषो विशेषानद्यतनः, यथा—त्वं पक्ता । लिप्सोपाधिको लिप्सानद्यतनः, यथा—यो मे भिक्षां दाता स स्वर्गं लोकं गन्ता । परिदेवनोपाधिकः परिदेवनानद्यतनः, यथा—इयं नु कदा गन्ता यैवं पादौ निदधाति, अयं नु कदाध्येता य एवमन-भियुक्तः । कालविभागे चानहोरात्राणामित्यहोरात्रविषयः परापरविभागीयः, यथा—योऽयमागामी मासस्तस्य यः परः पञ्चदशरात्रस्तत्रौदनं भोक्तास्महे । योऽयमागामी त्रिंशद्रात्रस्तस्य योऽपरः पक्षस्तत्र युक्ता अध्येतास्महे । परस्मिन्विभाषेत्यनहोरात्रकालाध्वमर्यादाविषयः परप्रविभागीयः । यथा—योऽयमागामी संवत्सरस्तस्य यदवरमाग्रहायण्यास्तत्र पाटलिपुत्रं गन्तास्मः । स एव अध्वाविभाषाविषयोऽध्वविभाषीयः । योऽयमध्वा गन्तव्य आपाटलिपुत्रात् तस्य यत्परं कौशाम्ब्याः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्र सक्तून्पातास्म इति । अवाप्ताप्रच्युतक्रियाविषयो लडादिनिमित्तं वर्तमानः । स षोढा—सामान्यवर्तमानः, विशेषवर्तमानः, अविरामवर्तमानः, प्रवृत्तोपरतः, वृत्ताविरतः, नित्यवृत्त इति । तेष्वनपेक्षितविरामादिविशेषस्सामान्यवर्तमानः, यथा—अस्ति, भवन्, कुर्वाणः, पच्यमानः, पवमानः, पत्रमुद्वहमान इति । परोक्षादिविषयो विशेषवर्तमानः । अत्र वटे यक्षः प्रतिवसति । विवक्षितक्रियाप्रबन्धोऽविरामवर्तमानः, यथा—प्रासादं करोति । विवक्षितप्रवृत्तिविरामः प्रवृत्तोपरतः, यथा—जीवन्तं मारयति । अविवक्षितप्रवृत्तिविरामो वृत्ताविरतः, यथा—इह कुमाराः क्रीडन्ति । अविच्छिन्नप्रवृत्तिसंतानो नित्यप्रवृत्तः, यथा—तिष्ठति पर्वत इति ।

अनागतातिक्रान्तक्रियास्वपि पदान्तरप्रयोगापादितवर्तमानत्वाल्लटो निमित्तमविद्यमानानद्यतनो वर्तमानाद्यतनः । स षोढा—लिप्साविषयः, आशंसाविषयः, पुरायोगीयः, स्मयोगीयः, उभययोगीयः, अनुभययोगीय इति । तेषु लिप्साविषयो यथा—यो मे भिक्षां ददाति स स्वर्गं याति, को मे भिक्षां ददाति कस्स्वर्गं लोकं याति, एवं कतरो मे भिक्षां ददाति, कतमो मे भिक्षां ददाति । आशंसाविषयो यथा—देवश्चेद्वर्षति संपद्यन्ते शालयः । पुरायोगीयो यथा—वसन्तीह पुरा छात्राः । स्मयोगीयो यथा—इति स्मोपाध्यायः कथयति । उभययोगीयो यथा—नडेन स्म पुराधीयते । अनुभययोगीयो यथा—भाषते राघवस्तदेति । भूत एव लिङ्विषयोऽक्षाणां परः परोक्षः । स षोढा—स्वपरोक्षः, परपरोक्षः, स्वपरपरोक्षः, मनःपरोक्षः, प्रमाणपरोक्षः, निर्णयपरोक्ष इति । तेषु स्वापेक्षया परोक्षो यथा—चकार चकार, चकासाञ्चकार, ऊषुरिह पुरा छात्रा इति । परापेक्षया परपरोक्षः, यथा—कः कलिङ्गाद्विवेढः, को ब्राह्मणान्ददर्श, नाहं कलिङ्गान् जगामेति । उभयापेक्षया स्वपरपरोक्षो यथा—जघान कंसं वासुदेवः, ददाह त्रिपुरं हरः, ममाथ वृत्रं मघवेति । स्मरणापेक्षया मनःपरोक्षो यथा—इति चकार, शश्वच्चकार, इति ह, शश्वच्चकारेति । प्रश्ने चासन्नकाल इति निर्णयपरोक्षः, यथा—किं सा जगाम तत्पार्श्वं, किमुवाच यथोचितं, स किं शुश्राव तद्वाक्यमिति, पृच्छामि किं सखीति । भविष्यद्भूतवर्तमानक्रियातिपत्तिविषयो लङ्निमित्तमतिपन्नः । स षोढा—भविष्यद्भूतवर्तमानक्रियातिपत्तीनां शुद्धमिश्रभेदात् । तत्र केनचिल्लिङ्गेन भविष्यन्तीं शुद्धामेव क्रियातिपत्तिमवगम्य प्रयुङ्क्ते । यथा—अपि वज्राहतेनापतिष्यत्, कथं नाम तत्रभवान् वृषलमयाजयिष्यत्. दक्षिणेन चेदयास्यत् न शकटं पर्याभविष्यत्. यथा च सद्भिः प्रदिष्टेन पथा समचरिष्यथ, न ते समचरिष्यन्न चरणान्ते न भूतयः । एवं मिश्रामपि यथा—

रामाय पुण्यमहसे सदृशाय सीता दत्तैव दाशरथिचन्द्रमसेऽभविष्यत् ।
आरोपणेन पणमप्रतिकार्यमार्यस्त्रैयम्बकस्य धनुषो यदि नाऽकरिष्यत् ॥

केनचिल्लिङ्गेनानीतां क्रियातिपत्तिं शुद्धामेवावगम्य प्रयुङ्क्ते । यथा—न श्रद्दधे यत्तत्रभवान्वृषलमयाजयिष्यत्, न संभावयामि तत्र नाशोक्ष्यत भवान् । यथा च—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

दुर्वचं त्वदथ मा स्म भून्मृगस्त्वय्यसौ यदकरिष्यदोजसा।
नैनमाशु यदि वाहिनीपतिः प्रत्यपत्स्यत सितेन पत्रिणा॥

एवं मिश्रामपि—

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत्।
अस्मिन्द्वये रूपविधानयत्नः पत्युः प्रजानां वितथोऽभविष्यत्॥

केनचित्प्रमाणेन वर्तमानामपि क्रियातिपत्तिं शुद्धामेवावगम्य प्रयुङ्क्ते। यथा—उताकरिष्यत्, अप्यकरिष्यत्। यथा च—

गामधास्यत्कथं नागो मृणालमृदुभिः फणैः। आरसातलमूलात्त्वमवालम्बिष्यथा न चेत्॥

एवं मिश्रामपि यथा—

अमङ्क्ष्यद्वसुधा तोये च्युतशैलेन्द्रबन्धना। नारायण इव श्रीमान्यदि त्वं नाधरिष्यथाः॥

इति॥ तिरोभूतभूतभविष्यदादिविशेषोऽव्यक्तः। स षोढा— लिङ्विषयः, लोड्विषयः, लड्विषयः, लङ्विषयः, तव्यादिविषयः, तुमुनादिविषयश्चेति। तेषु लिङ्विषयो यथा—कटं कुर्यात्, चिरं जीयात्, कथं तत्रभवान् वृषलं याजयेत्, अपि शिरसा पर्वतं भिद्यात्, संभावयामि भुञ्जीत भवान्, कालोऽयं यद्भुञ्जीत भवानिति। लोड्विषयो यथा—उपाध्यायश्चेदागच्छति आगन्ता आगमिष्यति वा, अथ त्वं छन्दोऽधीष्व। ऊर्ध्वं मुहूर्तादुपाध्यायश्चेदागच्छेत् आगच्छति आगन्ता आगमिष्यति वा अथ त्वं व्याकरणमधीष्व, कुरु कटं प्राप्तस्ते कालः कटकरणे, चिरं जीवतु भवान् किमिह भवान् करोतु, लुनीहि लुनीहीत्येवायं लुनाति अलावीत् लविष्यति वेति। लड्विषयो यथा—कदा भुङ्क्ते कर्हि भुङ्क्ते, अपि तत्रभवान् वृषलं याजयति, जातु तत्रभवान्वृषलं याजयति, कच्चिज्जीवति मे माता, कं वा विभूतयो न मदयन्तीति। लृड्विषयो यथा— अन्धो नाम पर्वतमारोक्ष्यति उत दण्डः पतिष्यति, कतरो नाम वृषलः यं तत्रभवान् वृषलं याजयिष्यति, न मर्षयामि न श्रद्दधे नावकल्पयामि यत्तत्रभवान्वृषलं याजयिष्यति, प्रत्येकं विनियुक्तात्मा कथं न ज्ञास्यसि प्रभो, इति। तव्यादिविषयो यथा— स्वाध्यायोऽध्येतव्यः, ब्राह्मणो न हन्तव्यः, पितरो वन्दनीयाः, गुरवो माननीयाः, कृत्यं न भावयेत्, कार्यं न कुर्यादिति। तुमुनादिविषयो यथा— भोक्तुमैच्छत् इच्छति एषिष्यति वा, भुक्त्वा अव्राजीत् व्रजति व्रजिष्यति वा, अधीत्यास्नासीत् स्नाति स्नास्यति वा, चोरङ्कारमाक्रुक्षत् आक्रोशति आक्रोक्ष्यति वा, पायंपायमासिसीष्ट आस्ते आसिष्यते वा, रैपोषमपुषत् पुष्यति पोक्ष्यति वेति। कालान्तरसम्पृक्तस्सङ्कीर्णः; सङ्करश्चानेकाकारत्वादियत्तया न शक्यते निर्देष्टुमिति भङ्गनिर्वाहार्थं तु षोढैवोदाह्रियते। स भूतभूतानद्यतनयोः यथा—अन्येभ्यो वा अभुंक्ष्महि। भविष्यद्भविष्यद्यनद्यतनयोर्यथा— अद्य श्वो वा गमिष्यति।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भूतभविष्यदनद्यतनयोर्यथा–अग्निष्टोमयाजकस्य पुत्रो जनिता । भूतानद्यतनभविष्यतोर्यथा– भाविकृत्यमासीत् । वर्तमानपरोक्षयोर्यथा–

क्रोधं प्रभो संहर संहरेति यावद्गिरः खे मरुतां चरन्ति ।
तावत्स वह्निर्भवनेत्रजन्मा भस्मावशेषं मदनं चकार ॥

भविष्यद्वर्तमानपरोक्षाणां यथा–

साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।
तान्येकदेशान्निभृतं पयोधेस्सोऽम्भांसि मेघान्पिबतो ददर्श ॥ इति ।

वर्तमानस्य भविष्यद्भूतयोरनुप्रवेशो प्रकीर्णः । स भविष्यदनुप्रवेशे आशंसायां यथा– उपाध्यायश्चेदागच्छति युक्ता व्याकरणमधीमहे । लिप्सायां यथा– कोपयतो भोजयति यावत्। पुरायोगे यथा– यावद्भुङ्क्ते, पुरा व्रजति । सामीप्ये यथा– कदा ग्रामं गमिष्यसि, एष गच्छामि, गच्छन्तमेव मां विद्धि । एवं भूतानुप्रवेशेऽपि भूतसामीप्ये यथा– कदा ग्रामादागतोऽसि? एष आगच्छामि, आगच्छन्तमेव मां विद्धि । पृष्टप्रतिवचने यथा— अयि भोः कटमकार्षीः, कटं देवदत्त ननु करोमि, अयं नु करोमीति । भविष्यतो भूतानुप्रवेशे भूतस्य भविष्यदनुप्रवेशो विप्रकीर्णः । स भविष्यतो भूतानुप्रवेशे यथा– स्मरसि देवदत्त काश्मीरेषु वत्स्यामः, अभिजानासि कलिङ्गेषु वत्स्यामः तत्रौदनं भोक्ष्यामहे, स्मरसि यत्काश्मीरेषु वत्स्यामः यत्तत्रौदनं भोक्ष्यामह इति। यथा वा–

स्मरत्यदो दाशरथिर्भवन्भवानमुं वनान्ताद्वनितापहारिणम् ।
पयोधिमाबद्धचलज्जलाविलं विलङ्घ्य लङ्कां निकषा हनिष्यति ॥

इति । भूतस्य भविष्यदनुप्रवेशो यथा– मास्म कार्षीः, मास्म करोः, देवश्चेद्वृष्टस्सम्पन्नाः शालयः इति । यथा वा–

अपकर्ताऽहमस्मीति मा ते मनसि भूद्भयम् ।
मा स्म सीमन्तिनी काचिज्जनयेत्पुत्रमीदृशम् ॥

जातश्चायं मुखेन्दुस्ते भ्रुकुटीप्रणयी पुनः । गतं च वसुदेवस्य कुलं नामावशेषताम् ॥

इति । अथ कथं नित्यप्रवृत्तस्य वर्तमानप्राप्तावपि तस्थुः स्थास्यन्ति गिरयः, मार्गे कूपोऽभूत्, कूपो भविष्यतीति भूतभविष्यत्कालविषयः प्रयोगो भवति । उच्यते । हेहयादिवंशेषु ये राजानो बभूवुः तेषां याः क्रियाः [illegible] भूतकालविषयं प्रत्ययं प्रयुङ्क्ते,

CC-0. ASI Srinagar Circle. Jammu Collection. An eGangotri Initiative

हैहयराज्येऽपि पर्वता इत्यनेन तस्थुरिति । तथा आगामिमन्वन्तरेषु ये राजानो भविष्यन्ति तेषां याः क्रियास्तासां भविष्यत्वात्तत्सम्बन्धविवक्षायां भविष्यत्कालविषयं प्रत्ययं प्रयुङ्क्ते । यदा बलिरिन्द्रो भविष्यति तदापीत्थमेव पर्वताः स्थास्यन्तीति । एवं कूपस्यापि भूतभविष्यद्दर्शनक्रियासम्बन्धात् अभूद्भविष्यतीति क्रियाभिसम्बन्धो न विरुध्यत इति । उपग्रहोऽपि प्रकृत्यर्थोपाधिरेव । कः पुनरसौ परस्मैपदात्मनेपदोभयपदिनामात्मनेपदपरस्मैपदयोगनिमित्तमर्थविशेषः । तदुक्तम् ।

य आत्मनेपदाद्भेदः क्वचिदर्थस्य गम्यते। परस्मैपदतो वापि मन्यन्ते तमुपग्रहम् ॥

यथा—नाथति नाथते, शपति शपते, आह्वयति आह्वयते, प्रतिजानाति प्रतिजानीत इति । अत्राशिषि नाथः, शप उपालम्भने, स्पर्धायामाङः, सम्प्रतिभ्यामनाध्याने, ज्ञा आत्मनेपदं ; शेषे परस्मैपदमित्यर्थभेदाः । एवं मुण्डो भीषयते, कुञ्चिकयैनं भाययति, जटिलो विस्मापयते, मत्यैनं विस्मापयति । श्येनो वर्तिकामुल्लापयते, कस्त्वामुल्लापयति, संप्रवदन्ते ग्राम्याः, संप्रवदन्ति शकुनय इति । अत्र भीस्म्योर्हेतुभये, लियः सम्माननशालिनीकरणयोश्च, व्यक्तवाचां समुच्चारणे, वद आत्मनेपदं, शेषे परस्मैपदमित्यर्थभेदः । एवमन्यदप्यूहनीयम् ।

ननु च, 'य आत्मनेपदात् भेदः क्वचिदर्थस्य गम्यत' इत्यत्र क्वचिद्ग्रहणं किमर्थम् ? उच्यते । परस्मैपदात्मनेपदोभयपदिनामात्मनेपदपरस्मैपदोभयपदयोगः षट् प्रकारो भवति । प्रकृतिनिमित्तः, प्रकृत्यर्थनिमित्तः, प्रत्ययनिमित्तः, प्रत्ययार्थनिमित्तः, उपस्कारनिमित्तः, उपस्कारार्थनिमित्तश्च । तत्रार्थनिमित्तेषु यथायोगमर्थावगतिहेतुत्वं विद्यते ; शेषेषु तु न विद्यते । क्वचिद्ग्रहणेन ज्ञापयति । तत्रात्मनेपदयोगः प्रकृतिनिमित्तो यथा— अनुदात्तङित आत्मनेपदम् ; ज्ञाश्रुस्मृदृशां सनः, एधते च्यवते सुस्मूर्षते दिदृक्षत, इति । प्रकृत्यर्थनिमित्तो यथा— प्रकाशनस्थेयाख्ययोश्च, भुजोऽनवने, गृधिवञ्च्योः प्रलम्भने, कर्मव्यतीहारे तिष्ठते भुङ्क्ते गन्धयते व्यतिलुनीत इति । प्रत्ययनिमित्तो यथा– शदेश्शितः, म्रियतेर्लुङ्लिङोश्च, शीयते अमृतमृषीष्टेति । प्रत्ययार्थनिमित्तो यथा—भावकर्मणोरात्मनेपदं कर्मकर्तरिफलवत्कर्तरि च, आस्यते पच्यते विपच्यते पचत इति । उपस्कारनिमित्तो यथा—विपराभ्यां जेः, समवप्रविभ्यः स्थः, समस्तृतीयायुक्तात्, मिथ्योपपदात्कृञोऽभ्यासे, विजयते पराजयते, संतिष्ठते अवतिष्ठते प्रतिष्ठते वितिष्ठते, अश्वेन सञ्चरते, पदं मिथ्याकारयति । उपस्कारार्थनिमित्तो यथा—वेः पादविहरणे, आङो ज्योतिरुद्गमने, उपाङ्मन्त्रकरणे, दाणश्चसाचेच्चतुर्थ्यर्थे, विक्रमते वाजी, आक्रमते ज्योतिः, सावित्र्युपतिष्ठते, दास्या संयच्छत इति । प्रकृतिनिमित्तः परस्मैपदयोगे यथा—शेषात्कर्तरि परस्मैपदम्, भवति परस्मैपदं च ; शेषात्कर्तरि परस्मैपदम् । रज्यति वस्त्रं स्वयमेव, कुष्यति पादस्स्वयमेव, रज्यते वस्त्रम्, कुष्यते पादमिति, प्रत्ययार्थनिमित्तो यथा—कुपिरजोः प्राचां श्यन्, व्यतिहसन्ति व्यतिहरन्ति, परस्परस्य व्यति । उपस्कारनिमित्तो यथा– अनुपराभ्यां कृञः । इतरेतरान्योन्योपपदाच्च, अनुकरोति पराकरोति, इतरेतरस्य व्यतिलुनन्ति, अन्योन्यस्य व्यतिलुनन्तीति । उपस्कारार्थनिमित्तो

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा—समोऽकूजने, आङोदोऽनास्यविहरणे, उदोऽनूर्ध्वकर्मणि, प्रादेरजाद्यन्तराद्युजेरयज्ञपात्रेषु, संक्रीडन्ति शकटाः, व्याघ्रो मुखं व्याददाति, आसनादुत्तिष्ठति, यज्ञपात्राणि प्रयुनक्तीति। उभयपदयोगप्रकृतिनिमित्तो यथा—वाक्चषः, अनुपसर्गाद्वा, लोहितायति लोहितायते, क्रामति क्रमत इति। प्रकृत्यर्थनिमित्तो यथा—विभाषाकर्मकात् विभाषा विप्रलापे, उपरमति उपरमते, संप्रवदन्ति मौहूर्ताः संप्रवदन्ते मौहूर्ता इति। प्रत्ययनिमित्तो यथा—द्युद्भ्यो लुङि, वृद्भ्यः स्यसनोः, अद्युतत् अद्योतिष्ट, वर्त्स्यति वर्तिष्यत इति। प्रत्ययार्थनिमित्तो यथा—रज्यति रज्यते, कुष्यति कुष्यते, कुषिरजोः प्राचां श्यन्, परस्मैपदं च कर्मकर्तरि, इति। उपस्कारनिमित्तो यथा—उपसर्गादस्यत्यूह्योर्वा, उदस्यति उदस्यते, समूहति समूहत इति। उपस्कारार्थनिमित्तो यथा—वा लिप्सायाम्, विभाषोपपदेन प्रतीयमाने, भिक्षुको ब्राह्मणकुलमुपतिष्ठति उपतिष्ठते, ब्राह्मणस्स्वं यज्ञं यजति, यजत इति। एवमन्येऽपि हेतुलक्षणाभीक्ष्ण्यभृशार्थगर्हाकौटिल्यसाकल्यपूर्वकालतादर्थ्यादयः प्रकृत्यर्थोपाधिविशेषा वेदितव्याः। यथा—अधीयानो वसति, पचन्नास्ते, पुनःपुनः पठति-पापठ्यते, पुनःपुनः पचति पापच्यते, गर्हितं दहति-दन्दह्यते, कुटिलं क्रामति चङ्क्रम्यते, कन्यादर्शं वरयति, भुक्त्वा व्रजति, भोक्तुं व्रजन्तीति। एवमेते धातुरूपायाः प्रकृतेरर्थोपाधयः प्रत्ययरूपायाः स्वप्रत्ययार्थोपाधय एवोपाधयो भवन्ति। प्रातिपदिकरूपायास्तु स्वार्थादप्यलिङ्गसङ्ख्यापरिमाणकारकसंबन्धसंबोधनसहार्थतादर्थ्यहेतुलक्षणादय उपाधयो विद्यन्ते। ते तु प्रत्ययार्थोपस्कारार्थप्रातिपदिकार्थेष्वनन्तरमेव वर्णयिष्यन्त इति नेह प्रतन्यन्ते।

अथ प्रत्ययार्थोपाधिः। तत्र कारकोपाधिषु पुरुष उक्तः; सङ्ख्यात्वग्रतोभिधास्यते। अपरेऽपि चास्य यस्य विधिनिमन्त्रणामन्त्रणाधीष्टसंप्रश्नप्रार्थनप्रैषातिसर्गप्राप्तकालशक्त्यर्हगर्हादयः उपाधयो भवन्ति। तद्यथा—अग्निहोत्रं जुहुयात्, इह भवान् भुञ्जीत, इह भवानास्ताम्, भवान्माणवकमध्यापयेत्, किं नु खलु व्याकरणमधीयीय, इतश्छन्दो लभेयाहं भिक्षाम्, आशंसनमपि प्रार्थनमेव, चिरं जीव्याः, ग्रामं गच्छ, गच्छानुज्ञातोऽसि, कुरु कटं प्राप्तस्ते कालः कटकरणे, भवान्खलु शत्रुं हन्यात्, खलु तत्रभवान् भारं वहेत्, कथं नाम तत्रभवान्वृषलं याजयेदिति। एवमन्येऽपि तच्छीलतद्धर्मतत्साधुकारिहेत्वानुलोम्यशक्तिवयोवचनकृच्छ्रानुद्यमनशिल्पिलक्षणलिङ्गादयोऽवगन्तव्याः। यथा—वदिता जनापवादात्, मुण्डयितारः श्राविष्ठायनाः, वधूमूढां कन्यामलङ्करिष्णुः, यशस्करी विद्या, आज्ञाकरी भार्या, हस्तिघ्नो भटः, कवचहरः क्षत्रियकुमारः, धारयन्नुपनिषदम्, अंशहरस्सुतः, नर्तकी वेश्या, जायाघ्नस्तिलकः, व्यासस्य वचनं, पाणिनेरुक्तिः, कालिदासस्य प्रबन्ध इति।

अथोभयोपाधिः। सोपि संज्ञाजातिप्रभासपरिमाणद्यूताभ्रेषभाषाच्छन्दोमन्त्रब्राह्मणाशीरुक्त्क्रोशादिभेदादनन्तप्रकारः। तद्यथा—तिचूको च संज्ञायाम्, भद्रभूतिर्देवदत्त इति हस्ता पुरोढा इति। द्वितीया ब्राह्मणे [illegible] ...दिभ्यो, [illegible], आशिषि वुन्, जीवतात्

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

जीवळः, नन्दतात् नन्दक इति । माङ्चाक्रोशे, आक्रोशे नञ्यनिः, मा जीवन्यः परावज्ञादुःख-दग्धोऽपि जीवति । 'तस्याजननिरेवास्तु जननीक्लेशकारिणः' इति ।

एवमन्येऽप्यसूयासंमतिकोपकुत्सनभर्त्सनाबाधप्रकाराकृच्छ्रपर्यायार्हणोत्पत्तिप्रभृतयोऽवगन्तव्याः। तेष्वसूया यथा—माणवकामाणवक अभिरूपका अभिरूपक रिक्तं ते आभिरूप्यम् । संमतिर्यथा—माणवका माणवक अभिरूपका अभिरूपक शोभनः खल्वसि । कोपो यथा— माणवक माणवक अविनीतक अविनीतक इदानीं ज्ञास्यसि जाल्म । कुत्सनं यथा– शक्तिके शक्तिके यष्टिके यष्टिके रिक्ता ते शक्तिः । भर्त्सनं यथा— चोर चोर वृषल वृषल घातयिष्यामि त्वाम् । आबाधो यथा— गतगता नष्टनष्टा प्रिया प्रिया गमनादिना पीड्यमानः कश्चिदेकं प्रयुङ्क्ते । प्रकारो यथा—पटुपटु, भीतभीत, परिपूर्णगुणेन न्यूनगुणस्योपमाने सत्येवं भवति । अकृच्छ्रं यथा— सुखदुःखेन ददाति, प्रियाप्रियेण ददाति, अपीड्यमानो ददातीत्यर्थः । पारम्पर्यादयो यथा– भवतश्शायिका, अर्हति भवानिक्षुभक्षिकाम्, इक्षुभक्षिकां मे धारयसि, उदपादीक्षुभक्षिकेति । सर्वोऽपि चायमुपाधि-प्रपञ्चस्त्रिधैवाख्यायते, धर्म्युपाधिर्धर्मोपाधिः प्रकीर्णोपाधिश्च । तत्र कृञः स्तम्बशकृतोर्यां व्रीहिवत्सयोरिन्, स्तम्बकर्णयोरमिजपोः, हस्तिसूचकयोरित्यादि । धर्म्युपाधिर्यथा—

व्रीहिस्स्तम्बकरिः क्षेत्रे गृहे वत्सश्शकृत्करिः । जनःकर्णेजपो राज्ये मत्तस्तम्बेरमो वने ॥

प्रजने सर्तेरप् समुदोरजःपशुष्विति । धर्मोपाधिर्यथा—

समजस्स्याद्गवां गोभिरुक्ष्णामुदज उक्षभिः । भवत्यवसरे यस्यास्सैषा मे गोमतल्लिका ॥

मन्यकर्मण्यनादरे, विभाषा प्राणिषु, षष्ठी चानादराधिके भावलक्षणे इति । प्रकीर्णोपाधिर्यथा—

मन्यते न तृणायापि त्वां नावं पश्यतो हरः । मिषत्सु लोकपालेषु हविः पिबति सोऽध्वरे ॥

तिङ्कृत्तद्धिताभिधेयप्रत्ययार्थः प्रधानः । स त्रिधा– स्वार्थस्सम्बन्धी कारकश्च । तेषु प्रकृत्यर्थ एव स्वार्थः । स त्रिधा– धात्वर्थः प्रातिपदिकार्थश्शेषश्च । तत्र धात्वर्थस्त्रिधा । भावः क्रिया कारकश्च । तेषु भावो द्विधा–सत्त्वभूतोऽसत्त्वभूतश्च । तयोर्लिङ्गसङ्ख्यायोगी सत्त्वभूतः यथा—

अवचनं वचनं प्रियसन्निधावनवलोकनमेव विलोकनम् ।
अवयवावरणं च यदंशुकव्यतिकरेण तदङ्गसमर्पणम् ॥

अलिङ्गसङ्ख्योऽसत्त्वभूतो यथा—

अपि प्रसन्नेन महर्षिणा त्वं सम्यग्विनीयानुमतो गृहाय ।
कालोह्ययं संक्रमितुं द्वितीयं सर्वोपकारक्षममाश्रमं ते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रिया द्विधा शुद्धा सङ्कीर्णा च। तयोः कारकासंपृक्ता शुद्धा यथा—

पल्लवोपमितिसाम्यसपक्षं दष्टवत्यधरबिम्बमभीष्टे।
पर्यकूजि सरुजेव तरुण्यास्तारलोलवलयेन करेण॥

कर्तृत्वापन्नसाध्यरूपा सङ्कीर्णा यथा—

कुचद्वन्द्वे तन्वि द्विपकलभकुम्भस्थलतुलां दधानेऽस्मिन्कस्या न युवतिषु चित्तस्य रुजति।
तवोर्वोर्युग्मे वा हुतरुचिरचामीकररुचौ विकर्षत्यूष्माणं कमिह न युवानं ज्वरयति॥

कारकं द्विधा, नियतधातुविषयमनियतधातुविषयश्च। तयोर्नियतधातुविषयं यथा—

तुषारलेशाकुलितोत्पलाभे पर्यश्रुणी मङ्गलभङ्गभीरुः।
अगूढभावापि विलोकने सा न लोचने मीलयितुं विषेहे॥

अनियतधातुविषयं यथा—

अभिमुखे मयि संहृतमीक्षितं हसितमन्यनिमित्तकृतोदयम्।
विनयवारितवृत्तिरितस्तया न विवृतो मदनो न च संहृतः॥

प्रातिपदिकार्थस्त्रिधा, व्यक्तोऽव्यक्तस्संदिग्धश्च। तेषु प्रत्ययोत्पादानुत्पादयोरविशिष्टो व्यक्तः। स द्विधा— तल्लिङ्गोऽन्यलिङ्गश्च। तयोस्तल्लिङ्गो यथा— मन एव मानसम्, बन्धुरेव बान्धवः, यव एव यावक इति। अन्यलिङ्गो यथा— उपाय एव औपयिकम्, देव एव देवताः, देवतैव दैवतमिति। अव्यक्तो द्विधा, उज्झितस्वरूपोऽनुज्झितस्वरूपश्च। तत्रोज्झितस्वरूपो यथा— वेश्शालच्छङ्कटचौ, संप्रोदश्च कटच्, उपाधिभ्यां त्यकन्नासन्नारूढयोरिति। यथा, विशालं, विशङ्कटं, प्रकटं, विकटं, उपत्यका, अधित्यकेति। अत्रोपसर्गैरसङ्ख्यत्वादिस्वरूपमुज्झितम्। अनुज्झितस्वरूपो यथा—वत्सोक्षाश्वर्षभेभ्यस्तनुत्वे, कासूगोणीभ्यां ष्टरच्, किमेत्तिङव्ययघादाम्वद्रव्यप्रकर्षे। विनञ्भ्यां नानाञौ न सह। यथा—वत्सतरः, उक्षतरः, नितरां, अतीवतरां, विना, नानेति। उपचरितार्थवृत्तिः संदिग्धः। स द्विधा— सङ्ख्यावानसङ्ख्यश्च। तयोस्तिङन्तार्थो यथा— पचतितरां, पचतकीति। सुबन्तार्थो यथा— त्वयका, उच्चकैरिति। प्रत्ययार्थो द्विधा, कृदर्थस्तद्धितार्थश्च। तयोः कृदर्थो यथा—न्यावक्रोशी, सांराविणमिति। तद्धितार्थो यथा— आभिजित्यः, कौञ्जायन्य इति। समासार्थो द्विधा, समास्यनिमित्तं, समासनिमित्तश्च। तत्र यमाश्रित्य तद्धितार्थ इति समासो भवति। समास्यनिमित्तं यथा— द्वैमातुरः पञ्चकपाल इति। सम्बन्धी यस्य तु समासान्त इति समासो निमित्तं स समासनिमित्तः यथा—देवराजः प्रत्युरसमिति। सम्बन्धी त्रिधा, क्रिया द्रव्यं गुणश्च। तेषु क्रिया त्रिधा, क्रियासम्बन्धिनी [illegible] तासु क्रियासम्बन्धिनी द्विधा,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भिन्नरूपाऽभिन्नरूपा च। तयोर्भिन्नरूपा यथा–कर्तुमिच्छति चिकीर्षति, जुगुप्सितुमिच्छति जुगुप्सिषत इति । अभिन्नरूपा यथा— अत्यर्थं पापच्यते, पुनः पुनः पठति पापठ्यत इति । कारक-सम्बन्धिन्यपि द्विधा, साकांक्षा निराकांक्षा च । साकांक्षा यथा— पटमिवाचरति पटीयति कम्बलम्, प्रासादमिवाचरति प्रासादीयति कुटीम् । निराकांक्षा यथा— पुत्रमिच्छति पुत्रीयति, पुच्छमुदस्यत्युत्पुच्छयत इति । उभयसम्बन्धिनी द्विधा, क्रियाकारकसम्बन्धिनी कारकक्रिया-सम्बन्धिनी च । तयोः प्रथमा यथा— पचन्तं प्रयुङ्क्ते पाचयति देवदत्तः, अधीयानं प्रयुङ्क्ते अध्यापयति कारीषोऽग्निः । द्वितीया यथा— कंसवधमाचष्टे कंसं घातयति, आरात्रिविवास-माचष्टे रात्रिं विवासयति । द्रव्यमपि त्रिधा, विशेष्यं विशेषणं व्यवहितञ्च । तेषु विशेष्यं द्विधा, सापेक्षमनपेक्षञ्च । सापेक्षं यथा— युष्माकमयं यौष्माको गौः, वत्सेभ्यो हितो वत्सीयो गोधुक् । अनपेक्षं यथा — वसिष्ठस्यापत्यं वासिष्ठः, पृथिव्या ईश्वरः पार्थिवः । विशेषणं द्विधा, धर्मिनिष्ठं धर्मनिष्ठं च । धर्मिनिष्ठं यथा—गावोऽस्य सन्तीति गोमान्, प्रासादोऽस्य स्यात्प्रासादीयं दारु । धर्मनिष्ठं यथा— अस्तीति मतिरस्यास्तिकः, नास्तीति मतिरस्य नास्तिक इति । व्यवहितं द्विधा, विशेष्यरूपं विशेषणरूपं च । विशेष्यरूपं यथा— द्विमयमुदश्वित्यवानां द्विमया यवाः उदश्वितः । विशेषणरूपं यथा– पञ्चमो मासोऽस्य जातस्य पञ्चमी बालकः, षष्ठं रूपग्रन्थग्रहणमस्य षट्को वटुः । गुणोऽपि त्रिधा, आश्रितः प्रवृत्तिनिमित्तमुपाधिश्च । तेष्वाश्रितो द्विधा, अभिन्नरूपो भिन्नरूपश्च । तयोरभिन्नरूपो यथा— भिक्षाणां समूहो भैक्षम्, काकोलूकस्य वैरं काकोलूकिका । भिन्नरूपो यथा— ऋत्विजां कर्मार्त्विज्यं, पीलूनां पाकः पीलुकण इति । प्रवृत्तिनिमित्तं द्विधा, अनुरञ्जकमननुरञ्जकं च । तत्रानुरञ्जकं जात्यादि यथा— ब्राह्मणस्य भावः ब्राह्मण्यं, ऋजोर्भावः आर्जवमिति । अननुरञ्जकं संबन्धादि, यथा— दण्डिनो भावो दण्डित्वम्, पाचकस्य भावः पाचकतेति । प्रकृत्यर्थप्रत्ययार्थयोर्विशेषणमुपाधिः । स द्विधा, व्यस्तस्समस्तश्च । व्यस्तः प्रकृत्यर्थे यथा— शिवो देवताऽस्येति शैवं, लवणं पण्यमस्येति लावणिकः । प्रत्ययार्थे यथा– गार्गिकया श्लाघते, काठिकयाऽधिक्षिपति । अत्र देवतापण्यश्लाघाधिक्षेपा उपाधयः । समस्तो यथा–दण्डाः प्रहरणमस्यां क्रीडायां दाण्डा । अत्र दण्डशब्दात् तदस्यामित्यधिकरणे प्रत्ययो विहितो दण्डस्थं प्रहरणत्वं, अधिकरणत्वं च क्रीडात्वं प्रत्याययति । एवं ह्योगोदोहस्य विकारो हैयङ्गवीनं नवनीतम् । अत्र ह्योगोशब्दाद्विकारे प्रत्ययो विहितः, प्रकृत्यर्थोपाधि दोहं प्रत्ययार्थोपाधि च संज्ञां प्रत्याययतीति ।

कारकं त्रिधा, सक्रियं भिन्नक्रियमभिन्नक्रियं च । तेषु सक्रियं त्रिधा, कर्तृरूपं कर्मरूपमनु-स्यूतञ्च । कर्तृरूपं द्विधा, क्रियाविशेषस्थं कारकविशेषस्थं च । तयोः क्रियाविशेषस्थं यथा— सुस्नातं पृच्छति सौस्नातिकः, एवं सौखशायनिकः, प्रभूतमाह प्राभूतिकः, एवं माशब्दिकः, प्रतीपं वर्तते प्रातीपिकः, प्रतिकूलं चरति प्रातिकूलिक इति । कारकविशेषस्थं यथा— व्याकरणं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वेत्त्यधीते वा वैयाकरणः, समां समां विजायते समांसमीना, अक्षैर्दीव्यत्याक्षिकः, संतापाय प्रभवति सान्तापिकः, पितुरागतं पित्र्यं, समानोदरे शयितः सोदर्य इति । कर्मरूपं द्विधा, सजातीयस्थमसजातीयस्थं च । सजातीयस्थं यथा— अयनं नेयः आयानयीनः शारः, मासं भृतो मासिको भृत्यः, वर्षमधीष्टो वार्षिक उपाध्यायः, पक्षं लक्ष्यः पाक्षिको निबन्धः, षण्मासं क्रीतः षाण्मासिको दासः, संवत्सरं कृतस्सांवत्सरिकोऽभ्यास इति । असजातीयस्थं यथा— वामदेवेन दृष्टं वामदेव्यं साम, लाक्षया रक्तं वस्त्रं लाक्षिकं, देवाय देयं दैव्यं हविः, तन्त्रादचिरापहृतः तान्त्रकः पटः, द्वारे नियुक्तो दौवारिकः पुमान्, चतुर्दश्यां दृश्यते चातुर्दश्यं रक्ष इति । अर्थान्तरानुबन्धनमनुस्यूतम् । तद्द्विधा, क्रियानुस्यूतं कारकानुस्यूतं च । तयोः क्रियानुस्यूतं यथा— सीतान्वेषणमाधिकृत्य कृतो ग्रन्थः सीतान्वेषणीयः, एवं किरातार्जुनीयः, वाक्यपदीयः, पौषी पौर्णमासी अस्मिन्मासे भवति पौषः, एवमाग्रहायणिकः आश्वत्थिक इति । कारकानुस्यूतं यथा— तित्तिरिणा प्रोक्तं वेदं विदन्त्यधीयते वा तैत्तिरीयाश्छात्राः, एवं वारतन्तवीयाः, एगलेयिनः, ऐतरेयिणः, तथा पाराशरिणो भिक्षवः, शैलालिनो नटाः ।

भिन्नक्रियं त्रिधा, लक्षितक्रियमपेक्षितक्रियमनुमतक्रियं च । तेषु लक्षितक्रियं द्विधा, कर्तृस्थं कर्मस्थं च । तयोः कर्तृस्थं यथा— मुद्गा भवन्त्यस्मान्मौद्गीनं क्षेत्रम्, दण्डिनः सन्त्यस्यां दण्डिमती शाला । कर्मस्थं यथा— श्राद्धमनेन भुक्तं श्राद्धिकः, अग्रभोजनमस्मै दीयते आग्रभोजनिकः, पद्मस्मिन् दृश्यं पद्यः कर्दम इति । अपेक्षितक्रियं द्विधा, व्यवहितमव्यवहितं च । तयोर्व्यवहितं यथा— ग्रामादागच्छति, ब्राह्मणाय ददाति, पर्यङ्के शेत इति । अव्यवहितं यथा— कटं करोति, दात्रेण लुनाति, देवदत्तेनास्यत इति । अनुषक्तक्रियं द्विधा, तुल्याधिकरणमतुल्याधिकरणं च । तयोस्तुल्याधिकरणं यथा— शुक्लीभवति, उन्मनीस्यात्, भस्मसात्संपद्यत इति। अतुल्याधिकरणं यथा— पटपटाकरोति, देवत्रागच्छति, मनुष्यत्रावसतीति । अभिन्नक्रियं त्रिधा, तिङभिधेयं कृदभिधेयं तद्धिताभिधेयं च । तत्र तिङभिधेयं द्विधा— कर्तृरूपं कर्मरूपं च। तयोः कर्तृरूपं यथा— पचति देवदत्तः, दुग्धे गौः, चोरस्य रुजति रोग इति । कर्मरूपं यथा— पच्यते ओदनः, भिद्यते कुसूलः, उष्ट्रासिका आस्यन्त इति । कृदभिधेयं द्विधा, विशेष्यं विशेषणं च । तयोर्विशेष्यं यथा — दात्रं, प्रासादः, कुम्भकार इति । विशेषणं यथा— कर्तव्यं, पाचकः, सुबोधमिति । तद्धिताभिधेयं द्विधा— सापेक्षक्रियमनपेक्षितक्रियं च । तयोस्सापेक्षक्रियं यथा— इष्टी यज्ञे, परिगणिती याज्ञिक्ये, आम्नाती छन्दसि, अधीती व्याकरणे, कृतपूर्वी कटमिति । अनपेक्षक्रियं यथा— पाकेन निर्वृत्तं पाक्रिमं, सेकेन निर्वृत्तं सेकिमं, कुट्टेन कुट्टिमं, करणेन कृत्रिमं, श्येनपाकोऽस्यां तिलपाकोऽस्यां क्रियायां श्यैनंपाता तैलंपातेति । प्रकृतिप्रत्ययोभयद्वारकं पदार्थविशेषणमुपस्कारार्थः । स त्रिधा, प्रकृतिद्वारकः, प्रत्ययद्वारकः, उभयद्वारकश्च । तेषु प्रकृतिद्वारकः षोढा, [illegible]पस्कारभेदात् । तेषु रञ्जेर्णौ

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मृगरमणेन लोप इत्यादिलोप इत्यादि। लोपोपस्कारार्थः यथा—

धृतहेतिरप्यधृतजिह्मगतिश्चरितैर्मुनीनधरयन् गुरुभिः।
रजयाञ्चकार विरजः स मृगान् किमिवेशते रमयितुं न गुणाः॥

अश्ववृषयोर्मैथुनेच्छायामित्यादिरागमोपस्कारार्थः यथा—

अनेकयुगजीविन्यास्त्रेता यस्यास्त्रयोदशी। सा क्षीरकण्टकं वत्सं वृषस्यन्ती न लज्जिता॥

वेश्च स्वनो भोजने मूर्धन्य इत्यादिवर्णविकारोपस्कारार्थः यथा—

ग्लानिच्छेदिक्षुत्प्रबोधाय पीत्वा रक्तं रिष्टं झाषिताजीर्णशेषः।
स्वादुङ्कारं मांसखण्डोपदंशं क्रोष्टा डिम्भं व्यण्वणद्व्यस्वनच्च॥

मातुर्मातच्पुत्रे श्लाघ्य इत्यादिरादेशोपस्कारार्थः यथा—

गौरी मा तस्य तस्यैताः कार्तिकेयस्य कीर्तयः।
कीर्तितासु न कीर्त्यन्ते यासु कस्यापि कीर्तयः॥

आख्यानात्कृतस्तदाचष्टे, कृल्लुक्प्रकृतिप्रत्यापत्तिः, प्रकृतिवच्च कारकमित्यादिप्रत्ययापत्त्युपस्कारार्थः, यथा—

शैलैर्बन्धयति स्म वानरहृतैर्वाल्मीकिरम्भोनिधिम्।
व्यासः पार्थशरैस्तथापि न तयोरत्युक्तिरुद्भाव्यते॥

इति। अपादाने परीप्सायां णमुलित्यादौ स्वादिरुपपदोपस्कारार्थः, यथा-

किञ्चिच्छेषनिशातुषारमधुरस्पर्शं गृहप्राङ्गणे
शय्योत्थायमिह व्रजन्ति हलिनां बालाः कुकूलानलम्॥ इति॥

प्रत्ययद्वारकोऽपि षोढा, लोपागमवर्णविकारविकरणादेशोपग्रहभेदात्। तेषु लोपार्थः फलकुसुमयोर्लुक्। यथा—

वर्णप्रकर्षे सति कर्णिकारं दुनोति निर्गन्धतया स्म चेतः॥

आगमार्थः यथा— हृषेर्लोमसु। आननैर्विचकसे, वल्लभानभितनूभिरभावि। वर्णविकारार्थः दिवो विजिगीषायां निष्ठानत्वम्। यथा—

आद्यूनस्सन् गृहिण्येव प्रायो यष्ट्यावलम्बितः॥

विकरणार्थः श्लिषः प्राण्यङ्गनेकसः। यथा- 'आश्लिक्षद्द्वयचपलेक्षणा नवोढा भर्तारं विपदि न दूषितातिभूतिः।' आदेशार्थं आशिषि तुह्योस्तातङ्। यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भवताद्भवतो मतिश्शुभा जयताज्जीव भवावनीश्वर ।

उपग्रहार्थः अधेः प्रसहने कृते आत्मनेपदम् । यथा—

भवादृशाश्चेदधिकुर्वते रतिं निराश्रया हन्त हता मनस्विता ॥ इति ॥

उभयद्वारकं तु द्वादशधा, अवधिसंबोधनक्रियाविशेषणकारकविशेषणशेषपरिशेषसहार्थ-तादर्थ्यहेतुलक्षणोपपदप्रकीर्णभेदात् । तत्र क्रियादीनां मिथो मर्यादावधिः । स पूर्वकालव्यतिहार-परापरयोगकालाध्वादिभेदादनेकप्रकारः । तेषु पूर्वकालो यथा—

कृतोर्मिलेखं शिथिलत्वमायता शनैश्शनैश्शान्तरयेण वारिणा ।
निरीक्ष्य रेमे स समुद्रयोषितां तरङ्गितक्षौमविपाण्डुसैकतम् ॥

व्यतिहारो यथा—

स्तनोपपीडं परिरभ्य चुम्बतोः प्रजल्पतोरप्यनवस्थितं मुहुः ।
स्रजश्च यूनोरपमित्य याचतोरनिद्रयो रेव जगाम शर्वरी ॥

परयोगो यथा—

प्रालेयाद्रेरुपतटमतिक्रम्य तांस्तान्विशेषान् ।
हंसद्वारं भृगुपतियशोवर्त्मयत्क्रौञ्चरन्ध्रम् ।
तेनोदीचीं दिशमनुसरेस्तिर्यगायामशोभि-
श्यामं पादो बलिविमथनाभ्युत्थितस्येव विष्णोः ॥

अपरयोगो यथा—

अप्राप्य पर्वतमिमानि पुरोविलीननीरन्ध्रलोध्रवकुलानि वनस्थलानि ।
आसेदुषस्तव हरिष्यति येष्वघौघमध्वक्लमं च सुरसिन्धुतरङ्गवातः ॥

कालयोगो यथा—

एवमिन्द्रियसुखस्य वर्त्मनस्सेवनादनुगृहीतमन्मथः ।
शैलराजभवने सहोमया मासमेकमवसद्वृषध्वजः ॥

अध्वयोगो यथा—

.... .... ....नशतं ।
सदा पान्थः पूषा गगनपरिमाणं गणयति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

इति प्रायोभावास्स्फुरदुपधिमुद्रामुकुलिताः
सतां प्रज्ञोन्मेषः पुनरयमसीमा विजयते ॥

सिद्धस्य क्रियार्थमभिमुखीकरणं सम्बोधनम् । तत्षोढा, नियोगनिषेधानुमत्युपालम्भ-प्रश्नाख्यानार्थभेदात् । तेषु नियोगार्थे यथा—

आज्ञापय ज्ञातविशेषपुंसां लोकेषु यत्ते करणीयमस्ति ।
अनुग्रहं संस्मरणप्रवृत्तमिच्छामि संवर्धितुमाज्ञया ते ॥

निषेधार्थे यथा—

आर्द्रकेसरसुगन्धि ते मुखं मत्तमत्तनयनं स्वभावतः ।
अत्र लब्धवसतिर्गुणान्तरं किं विलासिनि मदः करिष्यति ॥

अनुमत्यर्थे यथा—

सर्वं सखे त्वय्युपपन्नमेतदुभे ममास्त्रे कुलिशं भवांश्च ।
पूर्वं तयोर्वीर्यमहत्सु कुण्ठं त्वं सर्वतोगामि च साधकञ्च ॥

उपालम्भार्थे यथा—

अवस्तुनिर्बन्धपरे कथं नु ते करोऽयमामुक्तविवाहकौतुकः ।
करेण शम्भोर्वलयीकृताहिना सहिष्यते तत्प्रथमापराधम् ॥

प्रश्नार्थे यथा—

का त्वं शुभे कस्य परिग्रहो वा किं वा मदभ्यागमकारणं ते ।
आचक्ष्व मत्वा वशिनां रघूणां मनः परस्त्रीविमुखप्रवृत्ति ॥

आख्यानार्थे यथा—

नूनमुन्नमति यज्वनां पतिश्शार्वरस्य तमसो निषिद्धये ।
पुण्डरीकमुखि दिङ्मुखं यतः कैतकैरिव रजोभिराहतम् ॥

प्रकृतिप्रत्ययसमुदायस्य प्रकृत्यर्थभागमुखेन भेदकं क्रियाविशेषणं, भावोत्पन्नेऽपि हि प्रत्यये कदाचित्समुदायः प्रत्ययमुखेन विशेष्यते, तीव्रः पाकः, तीव्रं पाक इति । नामरूपमव्ययरूपं कृद्रूपं तद्धितरूपं समासरूपमुपसर्गादिरूपमिति । तेषु नामरूपं यथा—

मन्दं मन्दं नुदति पवनश्चानुकूलो यथा त्वां वामश्चायं नदति मधुरं चातकस्ते सगन्धः ।
गर्भाधानक्षणपरिचयान्नूनमाबद्धमालास्सेविष्यन्ते नयनसुभगं खे भवन्तं बलाकाः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

**अव्ययरूपं यथा —**

प्रशान्तधर्माभिभवश्शनैर्विवान् विलासिनीभ्यः परिमृष्टपङ्कजः ।
ददौ भुजालम्बमिवात्तशीकरस्तरङ्गमालान्तरगोचरोऽनिलः ॥

**कृद्रूपं यथा—**

शय्यन्ते हतशायिकाः पथि तरुच्छायानिषण्णाध्वगैः
श्रीकण्ठायतनेषु धार्मिकजनैरास्यन्त उष्ट्रासिकाः ।
शून्ये तत्र निकुञ्जशाखिनि सखि ग्रीष्मस्य मध्यन्दिने
सज्जानां दयिताभिसारणविधौ रम्यः क्षणो वर्तते ॥

**तद्धितरूपं यथा–**

शतं वारानुक्तः प्रियसखि वचोभिस्सुपरुषैरसहस्रं निर्धूतः पदनिपतितः पार्ष्णिहतिभिः ।
कियत्कृत्वो बद्धाःपुनरपि न वेद्मि भ्रुकुटयस्तथाऽपि क्लिश्नन्मां क्षणमपि न धृष्टो विरमति॥

**समासरूपं यथा—**

इति प्रविश्याभिहिता द्विजन्मना मनोगतं सा न शशाक शंसितुम् ।
अथो वयस्यां परिपार्श्ववर्तिनीं विवर्तितानञ्जननेत्रमैक्षत ॥

**उपसर्गादिरूपं यथा–**

प्रसीद विश्राम्यतु वीर वज्रं शरैर्मदीयैः कतमस्तवारिः ।
बिभेतु मोघीकृतबाहुवीर्यः स्त्रीभ्योऽपि कोपस्फुरिताधराभ्यः ॥

कर्त्रादीनां स्वेभ्यः परे कारकविशेषणम् । तदपि षोढा, कर्तृविशेषणं कर्मविशेषणं करणविशेषणं संप्रदानविशेषणमपादानविशेषणमधिकरणविशेषणमिति । तेषु **कर्तृविशेषणं यथा–**

सा मङ्गलस्नानविशुद्धगात्री गृहीतवत्युद्गमनीयवस्त्रम् ।
निवृत्तपर्जन्यजलाभिषेका प्रफुल्लकाशा वसुधेव रेजे ॥

**कर्मविशेषणं यथा—**

अशोकनिर्भर्त्सितपद्मरागमाकृष्टहेमद्युतिकर्णिकारम् ।
मुक्ताकलापीकृतसिन्धुवारं वसन्तपुष्पाभरणं वहन्ती ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

करणविशेषणं यथा—

मुखेन सा पद्मसुगन्धिना निशि प्रवेपमानाधरपत्रशोभिना ।
तुषारवृष्टिक्षतपद्मसम्पदां सरोजसन्तानमिवाकरोदपाम् ॥

संप्रदानविशेषणं यथा—

तस्मै हिमाद्रेः प्रयतां तनूजां यतात्मने रोचयितुं यतस्व ।
योषित्सु तद्वीर्यनिषेकभूमिस्सैव क्षमेत्यात्मभुवोपदिष्टम् ॥

अपादानविशेषणं यथा—

विसृष्टरागादधरान्निवर्तितस्स्तनाङ्गरागारुणिताच्च कन्दुकात् ।
कुशांकुरादानपरिक्षतांगुलिः कृतोऽक्षसूत्रप्रणयो तया करः ॥

अधिकरणविशेषणं यथा—

सद्यः प्रवालोद्गमचारुपत्रे नीते समाप्तिं नवचूतबाणे ।
निवेशयामास मधुर्द्विरेफान् नामाक्षराणीव मनोभवस्य ॥

अनुप्रयोगार्थश्शेषः । स षोढा, लिडनुप्रयोगार्थः, लोडनुप्रयोगार्थः, कृदनुप्रयोगार्थः, यथाविध्यनुप्रयोगार्थः, अधिकानुप्रयोगार्थः, द्विर्वचनानुप्रयोगार्थ इति । लिडनुप्रयोगार्थो यथा—

न लङ्घयामास महाजनानां शिरांसि नैवोद्धतिमाजगाम ।
अचेष्टताष्टापदभूमिरेणुःखुराहतो यत्सदृशं गरिम्णः ॥

लोडनुप्रयोगार्थो यथा—

पुरीमवस्कन्द लुनीहि नन्दनं मुषाण रत्नानि हरामराङ्गनाः ।
निगृह्य चक्रे नमुचिद्विषा बली य इत्थमस्वास्थ्यमहर्दिवं दिवः ॥

कृदनुप्रयोगार्थो यथा—

सलीलमासक्तलतान्तभूषणं समासजन्त्या कुसुमावतंसकम् ।
स्तनोपपीडं नुनुदे नितम्बिना घनेन कश्चिज्जघनेन काचन ॥

यथाविध्यनुप्रयोगार्थो यथा—

स ते प्रियश्चेत्सुभगोपरोधैर्विचिन्तितैरस्य फलं न किञ्चित् ।
प्रियापराधो हि विचिन्त्यमानस्समूलकाषं कषतीव चेतः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तद्धितानुप्रयोगार्थो यथा—

परिक्षते वक्षसि दन्तिदन्तैः प्रियाङ्कशीता नभसः पतन्ती ।
नेह प्रमोहं प्रियसाहसानां मन्दारमाला विरलीकरोति ॥

द्विर्वचनानुप्रयोगार्थो यथा—

वदत वदत सत्यं रूपमीदृक्कदाचिद्यदि पुनरबलाया दृष्टपूर्वं मुखादि ।
जगति जितसमस्तारातिवर्गे .... मिव न दृष्टं मत्प्रसादाद्भवद्भिः ॥

चादिनिपातद्योत्यः समुच्चयादिः पदार्थधर्मः परिशेषः । सोऽनन्तप्रकारोऽपि षड्विधः इहोदाह्रियते। समुच्चयः, विकल्पः, उपमा, नियोगः, विनिग्रहः, प्रतिषेधः। तेषु समुच्चयो यथा—

इतो गमिष्याम्यथवेति वादिनी चचाल सा च स्तनभिन्नवल्कला ।
स्वरूपमास्थाय च तां कृतस्मितस्समाललम्बे वृषराजकेतनः ॥

विकल्पो यथा—

विभूषणोद्भासि पिनद्धभोगिवा गजाजिनालम्बि दुकूलधारि वा ।
कपालि वा स्यादथवेन्दुशेखरं न विश्वमूर्तेरवधार्यते वपुः ॥

उपमा यथा—

हस्तेन हस्तं परिगृह्य वध्वास्सरोजसूनुस्सुतरां बभासे ।
अनन्तराशोकलताप्रवालं प्राप्येव चूतः प्रतिपल्लवेन ॥

नियोगो यथा—

रूपं तदोजस्वि तदेववीर्यं तदेव नैसर्गिकमुन्नतत्वम् ।
न कारणात्स्वाद्विभिदे कुमारः प्रवर्तितो दीप इव प्रदीपात् ॥

विनिग्रहो यथा—

त्वमहनीव निबर्हय मानिनीः विरहिणः कु . . . ति ।
इति निवेशयति स्म कलापिना मनुगिरं नु गिरं जलदागमः ॥

निषेधो यथा—

न प्रसादमुचितं गमिता द्यौः नोद्धृतं तिमिरमद्रिवरेभ्यः ।
दिङ्मुखेषु न च धाम विकीर्णं भूषिता च रजनी हिमभासा ॥

यद्युत्पत्तौ सहकारिलाभः तदा सहार्थस्त्रिधा, अभिधीयमानः, प्रतीयमानो व्यवधीयमानश्च । तेष्वभिधीयमानो द्विधा, सहेन पर्यायेण च । तयोराद्यो यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अनेन यूना सह पार्थिवेन रम्भोरु कच्चिन्मनसो रुचिस्ते ।
शिप्रातरङ्गानिलकम्पितासु विहर्तुमुद्यानपरम्परासु ॥

द्वितीयो यथा—

अनेन सार्धं विहराम्बुराशेस्तीरेषु तालीवनमर्मरेषु ।
द्वीपान्तरानीतलवङ्गपुष्पैरपाकृतस्वेदलवा मरुद्भिः ॥

प्रतीयमानोऽपि द्विधा, विभक्तितो निपाताच्च । तयोराद्यो यथा—

स पौरकार्याणि विचिन्त्य काले रेमे विदेहाधिपतेर्दुहित्रा ।
उपस्थितं चारु वपुस्तदीयं कृत्वोपभोगोत्सुकयेव लक्ष्म्या ॥

द्वितीयो यथा—

तमन्वगच्छत्प्रथमो विधाता श्रीवत्सलक्ष्मा पुरुषश्च साक्षात् ।
जयेति वाचा महिमानमस्य संवर्धयन्तौ हविषेव वह्निम् ॥

व्यवधीयमानोऽपि द्विधा, वीप्सया भागेन च, 'सहकृता एव हि क्रियागुणद्रव्यैः प्रयोक्त्रा युगपद्व्याप्तुमिष्यन्ते, सहकृता एव च विभज्यन्ते । अर्थशब्दस्तु निवृत्तिवचनोऽपि विद्यते, यथा मशकार्थो धूम इति । तत्र वीप्सया यथा—

सुगन्धिनिश्वासविवृद्धतृष्णं बिम्बाधरासन्नचरं द्विरेफम् ।
प्रतिक्षणं सम्भ्रमलोलदृष्टिर्लीलारविन्देन निवारयन्ती ॥

भागेन यथा—

अलंकृताप्यन्वयरूपभूषणैर्न शोभते मां प्रति तावदङ्गना ।
बिभर्ति यावत्प्रमदासमागमे न शूरभार्याहतगर्वितं शिरः ॥

कार्यस्य कार्यिणो वा कारणं प्रति प्रयोजकत्वं तादर्थ्यम् । तत्षोढा, क्रियातादर्थ्यं, द्रव्यतादर्थ्यं, क्रियाद्रव्यतादर्थ्यं, द्रव्यक्रियातादर्थ्यं, प्रकृतिविकारतादर्थ्यं, क्रियाकारकतादर्थ्यमिति । तत्र क्रियातादर्थ्यं यथा —

पुनर्ग्रहीतुं नियमस्थया तया द्वयेपि निक्षेप इवार्पितं द्वयम् ।
लतासु तन्वीषु विलासचेष्टितं विलोलदृष्टं हरिणाङ्गनासु च ॥

द्रव्यतादर्थ्यं यथा—

प्रसन्नदिक्पांसुविविक्तवातं शङ्खस्वनानन्तरपुष्पवृष्टि ।
शरीरिणां स्थावरजङ्गमानां सुखाय तज्जन्मदिनं बभूव ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियाद्रव्यतादर्थ्यं यथा—

तस्याः प्रकामं प्रियदर्शनोऽपि न स क्षितीशो रुचये बभूव ।
शरत्प्रविष्टाम्बुधरोपरोधश्शशीव पर्याप्तकलो नलिन्याः ॥

द्रव्यक्रियातादर्थ्यं यथा—

अलभ्यशोकाभिभवेयमाकृतिर्विमानना सुभ्रु कुतः पितुर्गृहे ।
पराभिमर्शो न तवास्ति कः करं प्रसारयेत्पन्नगरत्नसूचये ॥

प्रकृतिविकारतादर्थ्यं यथा—

वन्यं फलं चार्तवमाहरन्त्यो बीजं च बालेयमकृष्टरोहि ।
विनोदयिष्यन्ति नवाभिषङ्गामुदारवाचो मुनिकन्यकास्त्वाम् ॥

क्रियाकारकतादर्थ्यं यथा—

गेहाद्याता सरितमुदकं हारिकानाजिगीषे
मङ्क्ष्यामीति श्रयसि यमुनातीरवीरुद्गृहाणि ।
गोसन्दायी विशसि विपिनान्येव गोवर्धनाद्रेः
किं त्वं राधे दृशि निपतिता देवकीनन्दनस्य ॥

हेतुविशेषेषु प्रयोजकः कारकश्च कारक एव, अकारकस्तु प्रपञ्च्यते । तत्र कार्यप्रसवयोग्यः कारकस्तु षोढा, लिङादिवाच्यः, सद्वाच्यः, निपातादिवाच्यः, तृतीयावाच्यः, पञ्चमीवाच्यः, प्रथमादिवाच्य इति । तेषु लिङादिवाच्यो यथा—

पुष्पं प्रवालोपहितं यदि स्यान्मुक्ताफलं वा स्फुटविद्रुमस्थम् ।
ततोऽनुकुर्यात् विशदस्य तस्यास्ताम्रोष्ठपर्यस्तरुचः स्मितस्य ॥

सद्वाच्यो यथा—

सा संभवद्भिः कुसुमैर्लतेव ज्योतिर्भिरुद्यद्भिरिव त्रियामा ।
सरिद्विहङ्गैरिव लीयमानैरमुच्यमानाभरणा चकाशे ॥

निपातादिवाच्यो यथा—

नैसर्गिकी .... .... .... ।
इतीव जङ्घायुगलं तदीयं चक्रे तुलाकोट्यधिरोहणानि ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तृतीयावाच्यो यथा—

तया दुहित्रा सुतरां सवित्री स्फुरत्प्रभामण्डलया चकाशे ।
विदूरभूमिर्नवमेघशब्दादुद्भिन्नया रत्नशलाकयेव ॥

पञ्चमीवाच्यो यथा—

अतोऽत्र किञ्चिद्भवतीं बहुक्षमां द्विजातिभावादुपपन्नचापलः ।
अयं जनः प्रष्टुमनास्तपोधने न चेद्रहस्यं प्रतिवक्तुमर्हसि ॥

प्रथमादिवाच्यो यथा—

उद्वेजयत्यङ्गुलिपार्ष्णिभागान्मार्गे शिलीभूतहिमेऽपि यत्र ।
न दुर्वहश्रोणिपयोधरार्ताः छिन्दन्ति मन्दां गतिमश्वमुख्यः ॥

हेतुरेव ज्ञापको लक्षणं; तत्षोढा, द्रव्यलक्षणं, इत्थंभूतलक्षणं, विकारलक्षणं, उत्पातलक्षणं, भावलक्षणं, क्रियालक्षणमिति । तेषु द्रव्यलक्षणं यथा—

तां प्रत्यभिव्यक्तमनोरथानां महीपतीनां प्रणयाग्रदूत्यः ।
प्रवालशोभा इव पादपानां शृङ्गारचेष्टा विविधा बभूवुः ॥

इत्थंभूतलक्षणं यथा—

कलक्वणितगर्भेण चञ्चुना चङ्क्रमोद्यतः ।
पारावतः परिक्रम्य रिरंसुश्चुम्बति प्रियाम् ॥

विकारलक्षणं यथा—

स बालभावाद्वपुषा चतुर्भुजो मुखेन पूर्णेन्दुनिभस्त्रिलोचनः ।
युवा कराक्रान्तमहीभृदुच्चकैरसंशयं संप्रति तेजसा रविः ॥

उत्पातलक्षणं यथा

गोनासाय नियोजितागदरजास्सर्पाय बद्धौषधिः
कण्ठस्थाय विषाय वीर्यमहतः पाणौ मणीन्बिभ्रती ।
भर्तुर्भूतगणाय गोत्रजरतोनिर्दिष्टमन्त्राक्षरा
रक्षत्वद्रिसुता विवाहसमये हीता च भीता च या ॥

भावलक्षणं यथा—

तथागतायां परिहासपूर्वं सख्या सखी वेत्रभृता बभाषे ।
आर्ये व्रजामोऽन्यत इत्यथैनां वधूरसूयाकुटिलं ददर्श ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियालक्षणं यथा—

बध्नन्नङ्गेषु रोमाञ्चं कुर्वन्मनसि निर्वृतिम् । नेत्रे चामीलयन्नेष प्रियास्पर्शः प्रवर्तते ॥

उपपदं षोढा, क्रियारूपं, नामरूपं, नामार्थरूपं, प्रत्ययरूपं, निपातरूपं, कर्मप्रवचनीयरूपमिति । तेषु क्रियारूपं यथा—

भवत्सम्भावनोत्थाय परितोषाय मूर्च्छते । अपि व्याप्तदिगन्तानि नाङ्गानि प्रभवन्ति मे ॥

नामरूपं यथा—

सुखैस्तेभ्यो विभावर्यस्तेभ्यो हितमहस्सदा । येषामकृत्रिमप्रेमा प्रिया पार्श्वं न मुञ्चति ॥

नामार्थरूपं यथा—

हुतहुताशनदीप्तिवनश्रियः प्रतिनिधिः कनकाभरणस्य यत् ।
युवतयः कुसुमं दधुराहितं तदलके दलकेसरपेशलम् ॥

प्रत्ययरूपं यथा—

नृपसुतमभितस्समन्मथायाः परिजनगात्रतिरोहिताङ्गयष्टेः ।
स्फुटमभिलषितं बभूव वध्वा वदति हि संवृतिरेव कामितानि ॥

निपातरूपं यथा—

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः । कान्तामुखस्यावशगस्तस्मै नृपशवे नमः ॥

कर्मप्रवचनीयरूपं यथा—

आलोचनान्ताच्छ्रवणे विवृत्य पीतं गुरोस्तद्वचनं भवान्या ।
निदाघकालोल्बणतापयेव माहेन्द्रमम्भः प्रथमं पृथिव्या ॥

शब्दान्तरसाहचर्यविरोधलिङ्गस्वराभिनयादयः प्रकीर्णम् । तत्र साहचर्यं यथा—

भवतु समदना रतये तिलकवती चारुचम्पकच्छाया ।
घनचन्दनधवलकुचाक्रान्ता तव विद्विषामटवी ॥

साहचर्यं यथा—

लक्ष्मणानुगतो रामस्त्यागीराम इवापरः ।
कौसल्येव बिभर्ति द्यौरभिषेकोज्ज्वलां श्रियम् ॥

विरोधो यथा—

हरिबाणाविमौ रोषादुभावपि धृतायुधौ । प्रवर्तमुद्यतौ वीरौ रणे रामार्जुनाविव ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

लिङ्गं यथा—

आप्याययति मित्रोऽयमस्य मित्रं पयोनिधिः ।
सोऽप्यमित्रश्शशी जातस्तदमैत्र्याद्य मे सखि ॥

स्वरो यथा—

यदि मे वल्लभा दूती तदाहमपि वल्लभा । यदि तस्यां प्रिया वाचस्तन्ममापि प्रिय प्रियाः ॥

अभिनयो यथा—

एते वयममी दाराःकन्येयं कुलजीवितम् । ब्रूत येनात्र वः कार्यमनास्था वा ह्यवस्तुषु ॥

प्रातिपदिकार्थस्त्रिधा, स्वार्थो, द्रव्यं, लिङ्गं च । तेषु शब्दात्मैव स्वार्थः । स द्विधा, स्वरूपमनुकार्यश्च । तयोः स्वरूपं द्विधा, सत्त्ववचनार्हमसत्त्ववचनार्हं च । तत्राद्यं यथा–

चूडामणिश्शिरोरत्ने तरलो हारमध्यगे । पर्यङ्कश्शयने प्रोक्त आवेशश्चापि वेश्मनि ॥

द्वितीयं यथा—

मन्ये शङ्के ध्रुवं प्रायो नूनमित्येवमादिभिः ।
उत्प्रेक्षा व्यज्यते शब्दैरिवशब्दोऽपि तादृशः ॥ इति ॥

अनुकार्यो द्विधा, अर्थवाननर्थश्च । तयोरर्थवान्यथा—

उन्नमय्य सकचग्रहमास्यं चुम्बति प्रियतमे हठवृत्त्या ।
हुंहु मुञ्च ममेति च मन्दं जल्पितं जयति मानवतीनाम् ॥

निरर्थको यथा—

अग्रशालमधिरुह्य नगस्य स्फारकण्ठकुहरोमदमत्तः ।
ह्रस्वदीर्घसविसर्गघुकारान् घोषयत्युषसि पाण्डुकपोतः ॥

उपात्तनिमित्तेनानुपात्तनिमित्तेन वा यत् श्रूयते गम्यते प्रत्यभिधीयते तद्द्रव्यम् । तद्द्विधा, आश्रयरूपमनाश्रयरूपं च । तत्र जात्यादिभिः प्रवृत्तिनिमित्तैर्यदाश्रीयते तदाश्रयरूपम्; यथा— गौः, अश्वः, शुक्लः, एकः, प्रस्थं, पलं, ऋजुः, पूर्वः, पाचकः, दण्डी, राजपुरुषः, चैत्रः, इति । तद्विपरीतमनाश्रयरूपं निपाताव्ययोपसर्गगतिकर्मप्रवचनीयादीनामर्थः यथा— अहं च त्वं च वृत्रहन्, कस्त्वामूरीकरिष्यति, कस्तं प्रति न यास्यति, स्वयं पर्यैतुमिच्छति । लिङ्गं द्विधा, शब्दलिङ्गमर्थलिङ्गञ्च । तयोरियमयमिदमित्यर्थव्यपदेशनिमित्तं शब्दसंस्कारहेतुरयमित्यर्थव्यपदेशकारणं पुमान् नपुंसकस्य झलच इति . . उपस्कारहेतुरिदामित्यर्थव्यपदेशकारणात् नपुंसकमिति । तदेतच्छुद्धमिश्रादिभेदात् षोढा विप्रथते । शुद्धं, मिश्रं, सङ्कीर्णं, उपसर्जनं,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

आविष्टं, अव्यक्तं च । तेष्वेकसंस्कारहेतुश्शुद्धम् ; खट्वा, वृक्षः, कुण्डं, स्त्री, पुमान्, नपुंसकमिति । संस्कारद्वयोपग्राहि मिश्रम्, मरीचिः, ऊर्मिः, अर्चिः, छर्दिः, कषायः, कवाटमिति । संस्कारत्रययोगि सङ्कीर्णम्, तटी तटः तटं, शृङ्खला शृङ्खलः शृङ्खलमिति । विशेष्यशब्दनियतविशेषणरूपमुपसर्जनम्, शुक्ला शुक्लः शुक्लं, पट्वी पटुः पट्विति । विशेषणत्वेऽपि नियतशब्दसंस्कारार्हमाविष्टम्, प्रकृतिः, विषयः, प्रधानं, भार्या, दाराः, कलत्रमिति । लिङ्गनिमित्तशब्दसंस्कारानर्हमव्यक्तम्, पञ्च, षट्, कति, उच्चैः । विशेष्यते अवच्छिद्यते द्रव्यं येन तच्छब्दस्यार्थे प्रवृत्तिनिमित्तमर्थधर्मोऽर्थलिङ्गविशेषणं गुणो भाव इति चाख्यातम् । तात्रिधा, गुणः परिमाणं संबन्ध इति । तत्र द्रव्ये स्वाद्युक्ते प्रत्ययजनको गुणो जातिः, गुणस्सङ्ख्या, संस्थानमवस्थानमित्यादि । यथा—गौः. ब्राह्मणः. पटुः. गौरः. एकः. अनेकः. हनूमान्. वासुदेवः. युवा. वृद्धः. ऋजुः. पूर्व इति । अननुरञ्जकमात्राभिधेयमवच्छेदकं परिमाणं तदध्वगौरवसङ्ख्यानसङ्घातक्षेत्रादिभेदादनेकधा । यथा—योजनं पर्वतः. फलं सुपर्णः. पुराणः कपर्दकाः. अक्षौहिणी बला. खारी व्रीहयः. निवर्तनं भूमिरिति । कृत्तद्धितसमास-प्रातिपदिकविशेषाणामर्थेषु प्रवृत्तिनिमित्तं संबन्धः । स त्रिधा, क्रियासंबन्धो द्रव्यसंबन्धः क्रियाद्रव्यसंबन्धश्च । तत्र क्रियासंबन्धो यथा, पाचक इति । द्रव्यसंबन्धो यथा—दण्डी राजपुरुष इति । क्रियाद्रव्यसंबन्धो यथा—आक्षिकः, निष्कौशाम्बिरिति । यदा पुनः जातिगुण-परिमाणादयश्शब्दाः प्राधान्येनाभिधीयन्ते भावप्रत्ययैर्वा प्रतिपाद्यन्ते तदैतेषां द्रव्यत्वमेव, न लिङ्गत्वम् । भावप्रत्ययो हि जातिगुणाज्जातिगुणे ; समासकृत्तद्धितात्तु संबन्धे, डित्थादेः स्वे रूपे, धवखदिराज्जातिसङ्घात इति । अन्ये तु स्वार्थो विशेषणं, द्रव्यं विशेष्यं, लिङ्गं स्त्रीनपुंसकमित्या-चक्षते । तच्च निपातगत्युपसर्गकर्मप्रवचनीयादिप्रातिपदिकार्थो इत्यभिधीयते । न हि निपातादिकं प्रवृत्तिनिमित्तमुपादायेदंतदिति व्यपदेशयोग्येषु सत्त्वभूतेष्वर्थेषु वर्तन्ते । अपि तु प्रवृत्तिनिमित्ता-नुपग्रहेणैवासत्त्वभूतं समुच्चयादिकमर्थमभिनिविशन्ते । तदाह—

तेषामुच्चावचार्थत्वात्सर्वसंबन्धदर्शनात् । अन्यतन्त्रतयोद्भूतेरसत्त्वार्थत्वमुच्यते ॥

अथ किममी वाचका उत द्योतका इति । तत्रैके वर्णयन्ति, 'तत्प्रयोगावसेयत्वाद्वाच्यस्तेषां, यथान्येषां गवादिकः ।' अन्वयव्यतिरेकनिबन्धना हि शब्दानामभिधेयव्यवस्था । ततश्च अनादिप्रयोगादवसीयमानः समुच्चयविचारणादिरर्थात्मा कथममीषां वाच्यो न भवेत् ? प्रतीयते चशब्दात्समुच्चयः ; अहं च त्वं च वृत्रहन्निति । विचारणा वा शब्दात्, हन्ताहं पृथिवीमिमां निदधानी हवेहवेति । एवमिवादिभ्य उपमानादयो गम्यन्त इति तद्वाच्यास्ते भवन्ति ।

अन्ये त्वाहुः— 'षष्ठ्यभावादस (त्वाच्च समुच्चयविकल्पयोः) ।
(अकामचरि) तैश्चैषां द्योतकत्वं सुनिश्चितम् ॥'

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तथाहि । प्लक्षन्यग्रोधयोः समुच्चय इति वाक्यप्रयोगे षष्ठी निर्दिश्यते । नैवम्; प्लक्ष-
न्यग्रोधयश्चेति । यथा च व्रीहियवयोर्विकल्पः प्रवर्ततामिति वाचकशब्दप्रयोगे सत्त्वभूतो
विकल्पशब्दार्थः क्रियया संबध्यते, नैवं व्रीहियवयोर्वेति । यथा च वृक्ष इत्येकेनापि वाचकेन
शाखादिमानर्थः प्रतीयते, नैवं समुच्चयो विकल्पो वा । यथा च भिक्षां देहि देहि भिक्षामिति
वाचकशब्दानां पौर्वापर्यप्रयोगे कामचारः, नैवं वृक्षश्च वृक्ष इति । यथा च वृक्षश्शोभन इति
वाचकस्य विशेषणयोगो दृश्यते, नैवं च शोभन इति । तदेवं वाचकशब्दवैधर्म्यात् द्योतका-
श्चादय इति निश्चीयते । स्मरति च सूत्रकारश्चादयोऽसत्त्व इति । निरुक्तकारोऽप्याह– भाव-
प्रधानमाख्यातं सत्त्वप्रधानानि नामानि चोपसर्गा उच्चावचेष्वर्थेषु पतन्तीति निपाता इति ।
सचैषामुच्चावचोऽनेकप्रकारोऽर्थः स्वतोऽनवगम्यमानात्मा पदान्तरसंबन्धोपहितप्रकरणाद्यनु-
विधानेनावसीयते । ततः स्वरूपमात्रेणाप्यर्थानवगतौ इतरप्रयोगापेक्षत्वात् द्योतका एवैते,
न वाचका इति । एतत्तु सर्वं सव्यभिचारमिति केचित् । तथाहि । वाचकेनाप्याख्यातेन द्योतितं
सत्त्वभूतार्थमपि च वाचकमाख्यातमास्यते भवद्भिरिति वाचकावपि प्रकृतिप्रत्ययौ नैव केवलौ
प्रयुज्येते । जुहोतीति वाचकविवर्तिपदं पौर्वापर्यनियमेनावतिष्ठते । राजपुरुष इति वाचकानामपि
चोपसर्जनपदानां विशेषणयोगो न दृश्यते । न हि भवति ऋद्धस्य राजपुरुष इति स्मृतेश्चेति
यदुच्यते तदप्ययुक्तम् । न हि व्याकरणेऽर्था आदिश्यन्ते, निरुक्तकारो वाचकतां मन्यते न तु
द्योतकतां, अतो व्यभिचारदर्शनात् कथमिवैतदुपपन्नं भवति ? उच्यते । वाचकत्वादाख्यात-
प्रयोगे शेषविवक्षायां षष्ठ्यपि दृश्यते ; न माषाणामश्नीयादिति । चादिप्रयोगे तु षष्ठी नैव
भवति । न च स्वभावस्यासत्त्वरूपता संबन्धेन द्रव्यवत् प्रकाशते । चादयः पुनर्यदत्यन्तमस्वतन्त्रं,
यस्य न शक्यते पदान्तरसंबन्धः, दृश्यते रूपमवगन्तुं, तदेवासत्त्वभूतमर्थमात्रमवगमयन्ति ।
प्रकृतिप्रत्ययाभ्यां च केवलाभ्यामप्यर्थोऽभिधीयते, दधि मधु इयानधुनेति । चादयस्तु नैव
केवलाः तमभिदधते । अथैवमुच्यते शब्दान्तराण्येवैतानि दध्यादीनि प्रयोगसमवायीनि . . . .
. . हे प्रकृतिप्रत्ययावपि न स्तः । कथमभिधीयते प्रकृतिप्रत्ययावपि केवलौ नार्थं ब्रूत इति वर्तौ
पदानां पुनरनियतप्रयोगत्वमपि दृश्यते, आहिताग्निरग्न्याहित इति । न चैवंप्रकारतावादिनां
शब्दान्तरमेव वा समासः । वावचनानर्थ्यं च स्वभावसिद्धत्वादिति । यदि वावर्तिनीपदानां
उपसर्जनं पूर्वमित्यादिना प्रकृतिप्रत्यययोरपि परश्चेति वचने गत्युपसर्गाणां ते प्राग्धातोरित्यनेन
प्रयोगनियमः ; प्रयोगनियमानामपि प्रयोगनियमो दृश्यते, तस्माद्व्यभिचार इति । उपसर्जनाना-
मपि च विशेषणयोगो दृश्यते, देवदत्तस्य गुरुकुलमिति । चादीनां तु नैतत्कदाचिदप्यस्ति,
व्याकरणे चार्थाः कथं नादिश्यन्त इति । शालीनकौपीने, अधृष्टाकार्ययोः, अगारैकदेशे प्रघणः
प्रघाणश्चेति । निरुक्तेऽप्युच्चावचस्यार्थस्य केवलान्निपातादनुपलब्धेः पदान्तरोपादानात्तु तदर्थाभि-
व्यक्तेर्निपातो द्योत्यते । अतो द्योतका एव न वाचकाश्चादय इति । अथ गत्युपसर्गकर्मप्रवच-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नीयानां का वार्ता ? उच्यते । गतीनां तावत्सदसदादीनामादरानादरादिवाच्यनिर्देशेनैव गतिसंज्ञाविधानादनिर्दिष्टवाच्यानामप्यूर्यादीनां वाचकत्वमेव गम्यते । उपसर्गास्तु वाचकाः द्योतकाः विशेषकास्सहाभिधायकाः कार्यार्था निरर्थकाश्च भवन्ति । कर्मप्रवचनीयाः पुनर्निपातवत् द्योतका एव । तदाह—

क्रियाविशेषजन्यानां संबन्धानां प्रकाशने। कर्मत्वं करणत्वं च भेदेनैवाश्रितं कथम् ॥

इह खलु संबन्धाः क्रियापूर्वकत्वात् करणानुविधायितया क्रियोपदर्शितविशेषं कारकमाश्रयन्ति । तत्र च भिन्नजातीयस्य युगपदेकया विभक्त्या वक्तुं शक्यत्वात् शेषसंबन्धाभिधानवेलायामशब्दोपादानः क्रियाकारकसंबन्धश्शब्दवता शेषसंबन्धेनानुमीयमानसन्निधिरवतिष्ठते । तच्चानुमानं शेषसंबन्धस्य स्वरूपसामर्थ्यान्नियतक्रियाविषयमनियतक्रियाविषयञ्च । नियतक्रियाविषयं यथा— . . . ना जना कर्तर्यपेक्षितकर्मविशेषे शेषलक्षणं पितापुत्रसंबन्धमुत्पादयतीति । सैव तस्मादनुमीयते । तथा वृक्षस्य शाखेत्याधाराधेयनिबन्धना क्षितिरपेक्षितकर्तृविशेषेऽधिकरणेऽवयवावयविलक्षणं शेषसंबन्धं निबध्नातीति सैव प्रतीयते । अनियतक्रियाविषयं यथा—राज्ञः पुरुष इति स्वस्वामिसाधनाभरणक्रयणापजयादिरनियतानेका क्रिया कर्ताशेषसंज्ञकं स्वस्वामिसंबन्धं संनिवेशयति । स चानियतानेकाक्रियापूर्वकत्वादपर्याप्तः क्रियाविशेषमनुमापयितुमिति स्वनिमित्तक्रियासामान्यमेवानुमापयति । एवंविधे विषये क्रियाविशेषणप्रकाशनाय कर्मप्रवचनीयाः प्रयुज्यन्ते । यथा—शाकल्यस्य संहितामनुप्रावर्षवर्षणयोर्हेतुफलभावो नियमयति क्रियापूर्वकः इत्येतदमुना प्रकाश्यते । यतः क्रियापदस्य विभक्तेरशक्यं कल्पयितुं क्रियाविशेषप्रकाशनमपि क्रियापदसन्निधानायत्तमसति क्रियापदे न युक्तम् । संबन्धोऽपि नास्याभिधेयः । तस्य विभक्तिप्रत्ययनिबन्धनत्वात् । यदि च कर्मप्रवचनीयस्तमभिदधीत, प्रातिपदिकार्थस्य व्यतिरेकोपजनो न स्यात् ; यथा— राजस्वामीति । प्रतीयते च लोके कर्मप्रवचनीययोगो संबन्धस्य निमित्तविशेषावच्छेदः । तस्मात्स तस्य प्रयोजक इत्यवसीयते । तदुक्तम्—

क्रियाया द्योतको नायं न संबन्धस्य वाचकः । नापि क्रियापदाक्षेपी संबन्धस्य तु भेदकः ॥

इति । ननु च नाप्रतीतायां निशमयतिक्रियायां तया संबन्धस्यावच्छेदश्शक्यते कर्तुम् । तदयमनुः क्रियामप्रत्याययत् संबन्धमवच्छिनत्तीति न युज्यते । अथास्य क्रियाप्रकाशनमन्यत्रादर्शनान्न कल्प्यते । संबन्धावच्छेदोऽपि मा प्रकल्पि, अन्यत्रादर्शनादेव । उच्यते । क्रियाभेदसमधिगतमात्मातिशयसंबन्धस्यावगमयन्नर्थसामर्थ्यात् क्रियाविशेषः प्रत्ययनिमित्तमनुः । अतोऽस्य क्रियावचनत्वमन्यतः क्रियाप्रतीतेर्न कल्प्यते । यदि वा निमित्तभेदोपधेयविशेषापरामर्शेन रूपभेदं संबन्धस्यावगमयन्ति कर्मप्रवचनीयाः । यथा— अधि ब्रह्मदत्ते पञ्चालाः, अभिमन्युः अर्जुनतः प्रतीति स्वस्वामिभावस्सादृश्यं च कर्मप्रवचनीयात्प्रतीयते । विशिष्टाधिकरणव-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

च्छेदास्तु संबन्धास्स्वरूपातिशयेन क्रियाभेदमधिगमयन्ति । यथा— पञ्चालानां परिपालनकरादानादयः कार्या ब्रह्मदत्तेन, अभिमन्युरध्यवसायसंप्रहरणादयस्त्स्तदशा अर्जुनेन, प्रक्रान्तसंबन्धवशात् अपप्रियन्ते । तदयमनुः संहिताप्रवर्षणयोस्संबन्धं हेतुफलभावेनावच्छिनत्ति । अध्ययनविशेषरूपत्वात्तु संहितायाः । तस्य च शब्दातिशयप्रकाशसामर्थ्यान्निशमनमन्त्रार्थगृहीतं न कर्मप्रवचनीयाधिगम्यामिति । तस्य तु दर्शनं, अनुः पश्चाद्भावाभिधाने प्रतीतसामर्थ्यो यथा—अनुरूपादानमिति । स इहापि तदर्थमेव भवितुमर्हतीति तस्य हेतौ विधीयमाना कर्मप्रवचनीयसंज्ञा न प्राप्नोति । संबन्धावच्छेदेऽप्येतत्तुल्यम् । अथ विषयवशाद्धेतौ वृत्तिः कल्प्यते । पश्चाद्भावेऽपि अविरोधः, यतः पौर्वापर्यमिह हेतुफलविषयम् । अयमेव तर्हि संबन्धावच्छेदः यदनियताधिकरणं पौर्वापर्यमिह हेतुफलविषयतयावच्छिद्यते । एतदेव च संबन्धावच्छेदहेतुत्वं पृथक्करणनिमित्तं निपातेभ्यः कर्मप्रवचनीयसंज्ञानां । कथं तर्हि अधिपरी अनर्थकौ, सुः पूजायाम्, अतिरतिक्रमणे च, अपिः पदार्थसंभावनान्ववसर्गगर्हासमुच्चयेष्वित्यमीषां कर्मप्रवचनीयत्वम् । न हि कश्चिदेभिस्संबन्धोऽवच्छिद्यते । सत्यमेतत् । किन्तु कार्यार्थमेषां अतद्धर्माणामपि शास्त्रे वाचनिककर्मप्रवचनीयत्वमाभिहितामिति ।

ननु च जात्यादिप्रवृत्तिनिमित्तोपग्राहिणो वृक्षादयः सत्ववचनाः । तद्विपरीताश्चादयो असत्ववचना इत्युच्यते । न च जातिर्नाम प्रत्यक्षादिसमधिगम्यं किञ्चित्प्रमेयमस्ति । तथा हि; असौ न प्रत्यक्षाप्रत्यक्षस्य पूर्वापराननुस्यूतस्वलक्षणत्वाज्जातेश्च पूर्वापरानुस्यूतरूपत्वात् । तदाह—

समानवृत्तिता नाम सामान्यस्य विशेषतः । कथं स्पृशति सापेक्षमनपेक्षाक्षजा मतिः ॥

तं पृष्टभाविनस्तु विकल्पास्स्वभावेनावस्तुविषयत्वान्न सामान्यसिद्धौ प्रभवन्ति । नाप्यनुमानं शब्दो वा सामान्यमवस्थापयति । तयोरपि विकल्पविषयत्वेन वस्तुव्यवस्थापकत्वायोगात् । वस्तुप्राप्तिस्तु भेदानध्यवसायनिमित्तवस्त्वध्यवसायाद्भाविष्यति । इतश्च न व्यक्तिव्यतिरिक्तसामान्यं कुवलयामलकबिल्वादिवद्भेदेनानुपलम्भाद्घटपटादिवच्च देशभेदाग्रहणात् व्यक्त्यग्रहे च घटपटादिवदेव तदनुपलब्धेर्व्यक्तिवृत्तित्वात्सामान्यस्य तदग्रहे तदनुपलब्धिरिति चेन्न । वृत्त्यनुपपत्तेः ।

किं प्रतिपिण्डं कार्त्स्न्येन वर्तते जातिरुतैकदेशेन ? पिण्डे सामान्यमेकत्र यदि कार्त्स्न्येन वर्तते, तत्रैवास्य पदार्थत्वम् । न स्यात् पिण्डान्तरे ग्रहः । एकदेशेन वृत्तौ तु गोत्वजातिर्न कुत्रचित् ॥ समग्राऽस्तीति गोबुद्धिः प्रतिपिण्डं कथं भवेत् ॥ न चास्य निरवयवत्वादेकदेशा विद्यन्ते । न चैकपिण्डे समाप्त्या वर्तमाना पिण्डान्तरेऽपि समाप्त्यैव वर्तितुमर्हति । समाप्तस्य न पुनरुत्पत्तिर्विना समाप्त्यन्तरानुपपत्तेः । न च तथाभूता काचिद्वृत्तिरुपलभ्यते । न च समवायात्मिका वृत्तिः । स ह्ययुतसिद्धानां भवति । अयुतसिद्धिस्सम्बन्धश्चेति विप्रतिषिद्धम् । द्रव्यगुणयोः अपृथक्सिद्धयोरपि सम्बन्धदर्शनान्नैवमिति चेन्न । तत्रापि गुणव्यतिरिक्तस्य गुणिनो भेदेनासिद्धेः ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अवयवावयविनोरपि पृथक्सिद्धेरभावान्न सम्बन्धः । नापि रूपरूपिलक्षणस्सम्बन्धो भविष्यतीति वक्तव्यम्, रूपार्थस्य निरूपयितुमशक्यत्वात् । किमयं रूपशब्दश्शुक्लादिगुणवचनस्स्वभाववचनो वा। शुक्लादिवचनत्वे नीरूपाणां पवनमनःप्रभृतीनां द्रव्याणां सामान्यशून्यता स्यात् । आकारवचनत्वेऽप्यवयवसन्निवेशरहितानां तेषामेव सामान्यवचनं प्राप्नोति । स्वभाववचनत्वे तु जातिजातिमतोरव्यतिरेक एव भवेत् । 'भाति हि विभेदेन स्वभावो न स्वभाविनः । शब्दातिरिक्ततैवेयं न तु वस्त्वतिरिक्तता ॥' अपि चेयं जातिः,

सर्वसर्वगतापि स्यात्पिण्डसर्वगतापि वा । सर्वसर्वगतत्वेऽस्याः कर्कादावपि गोमतिः ॥
अश्वधीश्शाबलेयादावुष्ट्रबुद्धिर्गजादिषु । पदार्थसङ्करश्चैवमत्यन्ताय प्रसज्यते ॥
अथाभिव्यक्तिसामर्थ्यनियमान्नैष सङ्करः । हितकर्कादिपिण्डानां गोत्वाभिव्यक्तिकौशलम् ॥
मैवं खण्डाद्यभिव्यक्तमपि गोत्वमनंशकम् । सर्वत्रैव प्रतीयेत न वा सर्वगतं भवेत् ॥
तदंशग्रहणे तस्य न हि कश्चिन्नियामकः । दीपवद्व्यञ्जकः पिण्डो न तु तं पिण्डवृत्ति तत् ॥
सर्वत्रागृह्यमाणं च सर्वत्रास्तीति को वदेत् । सर्वसर्वगतं तत्र न गोत्वमुपपद्यते ॥
पिण्डसर्वगतत्वे तु काममेतददूषणम् । किन्तु नैवाद्य जातायां गवि गोप्रत्ययो भवेत् ॥
पिण्डेनासीदसञ्जाते जातिर्जातेऽपि विद्यते । संक्रामति न चान्यस्मात्पिण्डादन्यत्र निष्क्रिया ॥
आयान्त्यपि न तत्पिण्डमपोज्झितपुरातनम् । न चांशैर्वर्तते चेति केयं व्यसनसन्ततिः ॥

तस्मादपोहरूपमलीकमेव सामान्यं, न परमार्थसदिति । ततश्च तदभावात्तद्वतोऽनुपपत्तिरिति । अत्रोच्यते । किं जात्यादेर्बाह्यस्य शब्दार्थस्याभावादपोहे पक्षपातः, उत प्रतीतिबलेनेति । न तावत्प्रतीतिबलेन, प्रतीतेरनुगताकारविषयत्वेनापोहपरिपन्थित्वात् । नापि जातेरसत्त्वं प्रत्यक्षेण, स्वलक्षणवदावेदितस्वरूपत्वात् ।

आद्यमेव हि विज्ञानमर्थसंस्पर्शि चाक्षुषम् । न तदुत्तरभावीति किमिदं राजशासनम् ॥
तदेवास्तु प्रमाणं वा तेनापि त्वधिगम्यते । व्यावृत्तं वस्तुनो रूपं नानुगामीति का प्रमा ॥
भवेद्यदि विशेषैकविषयं निर्विकल्पकम् । सामान्याध्यवसायोऽयमकस्मात्कथमुद्भवेत् ॥

न चैतच्छाब्दरूपम् । यतः,

पश्यत्यनुगतं रूपमविज्ञातेऽपि वाचके । दाक्षिणात्य इवाकस्मात्पश्यन्नुष्ट्रपरम्पराम् ॥

अपि च शाबलेयपिण्डमवलोकितवतः कालान्तरे बाहुलेयपिण्डं पश्यतश्शाबलेयपिण्डस्मरणमुत्पद्यते। तत्सामान्याभावे न घटते । न ह्यन्यस्मिन्दृष्टेऽन्यस्मरणनिमित्तं किञ्चिदस्ति । तयोरनुगतरूपाभ्युप-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

गमे तदुपपद्यते नान्यथेति । किञ्च व्यक्त्यन्तरदर्शनेऽपि स एवायं गौरिति प्रत्यभिज्ञायते । तदप्यनुगतरूपाग्रहणे न युज्यते । न च व्यक्तिरेव प्रत्यभिज्ञायते, व्यक्तिभेदस्य प्रत्यक्षसिद्धत्वात् । यत्र च लघुतरपरिमाणतिलमुद्गादिप्रचयसन्निधानेऽवच्छिन्नस्वलक्षणग्रहणं नास्ति । तत्रानुवृत्तमेव रूपमिन्द्रियेण गृह्यते । तस्माद्विशेषवत्सामान्यापह्नवो न युक्तः ।

तस्मात्पूर्वाक्षसम्पाते तुल्यत्वमवगम्यते । नानात्वं चेति सामान्यभेदौ द्वावपि वास्तवौ ॥
सामान्यमिदमित्येवमथ तत्रानुपग्रहः । व्यावृत्तमिदमित्येवं किंवा बुद्धिस्स्वलक्षणा ॥
समानवृत्तिसापेक्षं न च सामान्यवेदनम् । तत्र सन्निहितत्वात्तु व्यक्तिवन्नानुपग्रहः ॥
समानवृत्त्यपेक्षत्वात्सामान्यस्यानुपग्रहे । विशेषोऽपि च माग्राहि व्यावृत्तिं स ह्यपेक्षते ॥
अनुवृत्तिर्हि येष्वस्य का तेषां ग्रहणे गतिः । व्यावृत्तिरपि येभ्योऽस्य का तेषां ग्रहणे गतिः ॥
अथानुवृत्तिव्यावृत्तिनैरपेक्ष्येण केवलम् । वस्त्वेव गृह्यते कामं कीदृक्तदिति कथ्यताम् ॥
निर्विकल्पकवेलायां निर्देष्टुं तन्न शक्यते । तदुत्थास्तूभयत्रापि साक्ष्यं ददति निश्चयाः ॥
यच्च वृत्तिविकल्पादिदूषणं तत्र वर्णितम् । तत्प्रत्यक्षमहिम्नैव सर्वं प्रतिहतं भवेत् ॥

यत्तावदुक्तं कुवलयामलकादिवदनवभासादिति तत्र प्रतीतिभेदो दर्शित एव । यत्तु देशभेदेनाग्रहणात्, तदग्रहे तद्बुद्ध्यभावादिति तत्र जातेस्तदाश्रितत्वं कारणं, नासत्त्वम् । यदप्युक्तं वृत्त्यनुपपत्तेरिति तत्राप्युच्यते, प्रतिपिण्डं कार्त्स्न्येनैव जातिर्वर्तत इति पिण्डान्तरे तदुपलम्भो अस्त्येव । एकदेशास्तु जातेर्न सन्त्येव ।

केदमन्यत्र दृष्टं चेदहो निपुणता तव । दृष्टान्तं याचसे यस्त्वं प्रत्यक्षेऽप्यनुमानवत् ॥

किंनामधेया वृत्तिरियमिति चेन्न नामधेयमस्याः जानीमः, पिण्डसमवेता जातिरित्येव प्रचक्ष्महे । नन्वयुतसिद्धयोस्सम्बन्धः समवायः, स विप्रतिषेधादेव निरस्तः न शक्यते निरसितुम् ।

प्रतीतिभेदाद्भेदोऽस्तु देशभेदस्तु नेष्यते । तेनावकल्पते वृत्तिस्समवायस्सतूच्यते ॥

अर्थान्तरत्वं चैतयोर्जातितुल्यन्यायतया सिद्धमेव । अवयवावयविनोर्गुणगुणिनोश्चेयमेव वृत्तिः । यदप्युच्यते— 'नानिष्पन्नस्य सम्बन्धो देशभेदश्च तयोर्नास्तीति विस्पष्टमयुतसिद्धत्वम् । जातिसम्बन्धं चेत्येकः काल इति वदद्भिः निष्पत्तौ युतसिद्धता ।' इति । तदपि परिहृतमाचार्यैः ।

या चेह वृत्तिस्तत्सूत्रभूतकण्ठगुणादिषु । जात्यादीनामनङ्गत्वात्ताभ्यां वृत्तिर्विलक्षणा ॥

यदपि सर्वसर्वगतत्वं पिण्डसर्वगतत्वं च विकल्प्य दूषितं तदपि तस्माद्वृत्त्यनुपपत्तेरित्यदूषणम् । यत्किञ्चित् यथाप्रतीति तदभ्युपगमात् सर्वसर्वगा जातिरिति तावदुपेयते ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सर्वत्र ग्रहणं तस्या व्यञ्जकव्यक्तसन्निधेः। व्यक्तिर्व्यञ्जकतामेति जातेर्दृष्टैव नान्यथा॥
दृष्टिर्यत्र यदात्वस्यास्तदा तत्रैव तन्मतिः। सर्वत्र विद्यते जातिर्नतु सर्वत्र दृश्यते॥
तदभिव्यञ्जिका यत्र व्यक्तिस्तत्रैव दृश्यते। व्यक्तेरन्यत्र सत्त्वेऽस्याः किं प्रमाणं तदुच्यते॥
इहाप्यानीयमानायां गवि गोत्वोपलम्भनम्। गोपिण्डेन सहैकस्या नचागमनसम्भवः॥
देहेनेवात्मनस्तस्मादिहाप्यस्तित्वमिष्यताम्।
अभिव्यक्तिस्तुतत्काला यत्काले व्यक्तिदर्शनम्॥
तस्मात्सकृदभिव्यक्ता नान्यदापि प्रतीयते। अभिव्यक्तिश्च तद्देशा यद्देशा व्यक्तिरीक्ष्यते॥
तस्मादस्मिन्नभिव्यक्ता न देशेऽन्यत्र दृश्यते। पिण्डसर्वगतत्वेऽपि स्वयूथ्यैः कश्चिदाश्रिते॥
भविष्यत्यन्यजातायां गवि गोधीस्तयाग्रहात्। जायमानैव हि व्यक्तिर्जायते जातियोगिनी॥
एक एवहि कालोऽस्या जातिसम्बन्धजन्मनोः। नेह जातेः पुरास्तित्वं नचसंक्रान्तिरन्यतः॥
किंतु स्वहेतोस्सा व्यक्तिस्तादृशैवोपजायते। कथमेतदितीदं तु येन पर्यनुयुज्यते॥
इदमप्यपरं हन्त तेन पर्यनुयुज्यताम्। वृषः पिशङ्गो गौः कृष्णा सा च नीलतृणाशिनी॥
ताभ्यामुत्पादितो वत्सःकथं भवति पाण्डुरः। यथा रूपादिसम्बन्धा सा व्यक्तिरुपलभ्यते॥
तथैव जातियुक्तेति का ते व्यसनसन्ततिः। अगोव्यावृत्ततायां च नैष प्रश्नो निवर्तते॥
तस्मादगोनिवृत्तं तदन्यजातं स्वलक्षणम्। तस्माद्वस्तुस्वभावस्य विदित्वाननुयोज्यताम्॥
चोद्यचुञ्चुत्वमुत्सृज्य प्रतिपत्तिर्निरूप्यताम्॥

प्रतिपत्तिश्च विशेषेष्विव सामान्येऽपि निरपवादा दर्शितैव। तस्माद्विशेषवदप्रत्याख्योऽयं सामान्य इति।

उपाधिरेवं त्रिविधःप्रधानमपि च त्रिधा। त्रिधोपस्कारवान्प्रातिपदिकार्थश्च वर्णितः॥
वाचकत्वं निपातानां द्योतकत्वं च निश्चितम्। कर्मप्रवचनीयानामुक्ता सम्बन्धसङ्गतिः॥
अथो विभक्त्यर्थविधस्त्रिधोच्यते त्रिधैव वृत्त्यर्थपदार्थनिर्णयः।
क्रियादिवाक्यार्थनिवर्तनात्ततस्त्रिधैव वाक्यार्थगतिः प्रपञ्च्यते॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे उपाध्याद्यर्थचतुष्टयप्रकाशो नाम पञ्चमः प्रकाशः॥



CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

॥ श्रीः ॥

# षष्ठः विभक्त्यर्थादिचतुष्टयप्रकाशः

विभक्त्यर्थस्त्रिधा, सङ्ख्या, कारकं, शेषश्च । तेषु कारकसम्बन्धिगतैकत्वद्वित्वबहुत्वानि सङ्ख्या । सा षोढा, आभिधानिकी, वैवक्षिकी, नैमित्तिकी, पारिभाषिकी, वैभाषिकी, पारिशेषिकी च । तत्राभिधानिकी यथा— आपः, दाराः, लाजाः, द्वयं, अनेकं, नियुतमिति । अत्राभिधानतो बहुवचनैकवचने एवेत्याभिधानिकी । वैवक्षिकी यथा— रोदसी रोदस्यौ, कवरी कबर्यः, स्तनौ स्तनाः, विशाखा विशाखे विशाखाः, दृक् दृशौ दृशः, जगत् जगती जगन्ति । अत्र विवक्षयैकत्वद्वित्वबहुत्वानीति वैवक्षिकी । नैमित्तिकी यथा— वृक्षः, शोभनः, दम्पती, पितरौ, अक्षाः, गभस्तय इति । अत्र वस्तुनो निमित्तस्य सद्भावान्नैमित्तिकी । पारिभाषिकी यथा— मार्दङ्गिकपाणविकं, पुरुषौ, खलतिकं, वनानि, गोदौ, ग्रामः, तिष्यपुनर्वसू, तारकाः, पञ्चाला जनपदः, स चाहं च पचाव इति । अत्र द्वित्वबहुत्वादिषु एकत्वादिपरिभाषणमिति पारिभाषिकी । वैभाषिकी यथा— अश्ववडवम्, अश्ववडवौ, प्लक्षन्यग्रोधम्, प्लक्षन्यग्रोधाः, पूर्वे फल्गुन्यौ, पूर्वाःफल्गुन्य इति । अत्र विभाषयैकत्वद्वित्वबहुत्वानीति वैभाषिकी । पारिशेषिकी यथा— एकः द्वौ बहवः, उभौ द्वित्राः, अर्धतृतीया इति । अत्रैकाद्युक्तसङ्ख्यापरिशेषे स्यादय इति पारिशेषिकी । तदुक्तम्—

निमित्तमेकमित्यत्र विभक्तानामधीयते । तद्गतस्तु यदेकत्वं विभक्तिस्तत्र वर्तते ॥

कारकं षड्विधमभिहितं पुरस्तात् । तद्द्वितीयादिवाच्यत्वेन पृथक्पृथक् षट् प्रकारं प्रथते । तत्र कर्म द्वितीयावाच्यम्–कटं करोति । तृतीयावाच्यं–मात्रा सञ्जानीते । चतुर्थीवाच्यं—न त्वा शुने मन्ये । पञ्चमीवाच्यं— परि त्रिगर्तेभ्यो वृष्टो देवः । षष्ठीवाच्यं— मातुस्स्मरति । सप्तमीवाच्यं— अधीती व्याकरणे । कर्ता द्वितीयावाच्यः, गमयति ग्रामं देवदत्तम् । तृतीयावाच्यः, चैत्रेण कृतम् । चतुर्थीवाच्यः, मूत्राय कल्पते यवागूः । पञ्चमीवाच्यः, उपाध्यायादधीते । षष्ठीवाच्यः, व्यासस्य कृतिः । सप्तमीवाच्यः, ब्राह्मणेषु भुञ्जानेषु वृषला आसते । करणं द्वितीयावाच्यं, अक्षान्दीव्यति । तृतीयावाच्यं, दात्रेण लुनाति । चतुर्थीवाच्यं, शताय परिक्रीतः । पञ्चमीवाच्यं, स्तोकान्मुक्तः । षष्ठीवाच्यं, सर्पिषो जानीते । सप्तमीवाच्यं, अक्षेषु दीव्यति । सम्प्रदानं द्वितीयावाच्यं, देवदत्तमभ्यसूयति । तृतीयावाच्यं, दास्या सम्प्रयच्छते । चतुर्थीवाच्यं,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

देवाय ददति । पञ्चमीवाच्यं, गुरोरारभ्य गाः प्रयच्छति । षष्ठीवाच्यं, मतः पृष्ठं ददाति । सप्तमीवाच्यं, पुष्पेषु स्पृहयति । अपादानं द्वितीयावाच्यं, अर्जुनं योद्धारः । तृतीयावाच्यं, धनुषा विध्यति । चतुर्थीवाच्यं, श्राद्धाय निगृह्लते । पञ्चमीवाच्यं, ग्रामादागच्छति । षष्ठीवाच्यं कृष्णा गवां संपन्नक्षीरतमा । सप्तमीवाच्यं, भुक्त ओदनः कंसपात्र्याम् । अधिकरणं द्वितीयावाच्यं, ग्राममधिवसति । तृतीयावाच्यं, समेन धावति । चतुर्थीवाच्यं, युद्धाय सन्नह्यति । पञ्चमीवाच्यं, क्रोशाद्विध्यति । षष्ठीवाच्यं, गवामीश्वरः । सप्तमीवाच्यं, तीर्थ उपवसतीति । कारकातिरेकी क्रियाकारकपूर्वकः संबन्धविशेषः । स त्रिधा, उक्तादन्यः, कारकेभ्योऽन्यः, कारकाणामविवक्षा च । तेषु उक्तादन्यत्वे भिन्नसम्बन्ध्यपेक्षः, अभिन्नसम्बन्ध्यपेक्षश्च । तयोराद्यो राज्ञः पुरुष इति यथा—

पत्युश्शिरश्चन्द्रकलामनेन स्पृशेति सख्या परिहासपूर्वम् ।
सा रञ्जयित्वा चरणौ कृताशीर्माल्येन तां निर्वचनं जघान ॥

द्वितीया राहोश्शिर इति यथा—

शिखिच्छदच्छत्रपतत्रमण्डलीभरोपरुद्धं मुखमेणचक्षुषः ।
मुखेन राहोरभियोक्तुमुद्यतं कलापतौ बिम्बमिव व्यराजत ॥

कारकेभ्योऽन्यत्वे उपात्तक्रियोऽनुपात्तक्रियश्च । तयोराद्योऽन्नस्य हेतोर्वसतीति । यथा—

एकातपत्रं जगतः प्रभुत्वं नवं वयः कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥

द्वितीयो ब्राह्मणस्य तुल्यो यथा—

कुलेन कान्त्या वयसा नवेन गुणैश्च तैस्तैर्विनयप्रधानैः ।
त्वमात्मनस्तुल्यममुं वृणीष्व रत्नं समागच्छतु काञ्चनेन ॥

कारकविवक्षायां द्रव्यापेक्षः क्रियापेक्षश्च । तयोराद्यः साधोस्स्वं धनं रोचत इति, यथा—

दत्तमात्तमदनं दयितेन व्याप्तमातिशयिकेन रसेन ।
सस्वदे मुखसुरं प्रमदाभ्यो नाम रूढमपि च व्युदपादि ॥

द्वितीयो न माषाणामश्नीयादिति यथा—

निवार्यतामालि किमप्ययं वटुः पुनर्विवक्षुः स्फुरितोत्तराधरः ।
न केवलं यो महतां विभाषते शृणोति तस्मादपि यस्स पापभाक् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सहार्थतादर्थ्यहेतुलक्षणोपपदसम्बोधनादयस्तु संबन्धविशेषा उपस्काराधिकारेऽभिहिता इति नेह प्रतन्यन्ते। ननु च सम्बन्धस्य क्रियाकारकपूर्वत्वात् कारकेष्वेव शेषसम्बन्धस्याप्यन्तर्भाव इति सङ्ख्याशक्तिश्च विभक्त्यर्थः। तत्र जातौ पदार्थजात्यभिधायिनः प्रातिपदिकस्य सङ्ख्याकारकाभिधायिन्या विभक्त्या सम्बन्धो न घटते। न हि जातेः सङ्ख्याशक्तियोगस्संभवति। उच्यते, जात्यविनाभावेन लक्षिताया व्यक्तेः सङ्ख्यासन्धियोगादेकार्थसमवायलक्षणस्सम्बन्धो भविष्यति। नैवम्; यथानन्त्यव्यभिचाराभ्यां भेदवर्तीं व्यक्तिमशक्ताः प्रकृतयोऽभिधातुमित्यभिन्नामव्यभिचारिणीं च जातिमाचक्षते। तदाधारभेदाद्भिन्नामानन्त्यव्यभिचाराभ्यामशक्ताः विभक्तयश्शक्तिं सङ्ख्यां चाख्यातुमतस्तदाधारां शक्तिसङ्ख्याजातिमाचक्षते। ततश्च प्रकृत्यर्थसम्बद्धाया अपि व्यक्तेर्विभक्त्यर्थेन शक्तिसङ्ख्यासामान्येनासम्बन्धादनुपपन्न एव प्रकृतिप्रत्यययोः समभिव्याहारः। नानुपपन्नः, एकार्थसमवेतसमवायेन तदुपपत्तेः। कथं पुनस्सामान्याभिधानेनाभिधीयमानयोस्सङ्ख्याद्रव्ययोः परस्परेण सम्बन्धः। यथाभिधीयमानयोः। यथाभिशब्देनाभिहितावर्थौ बुद्धौ विपरिवर्तमानौ मिथस्सम्बध्येते तथा शब्देनाभिहितादर्थात् प्रतीयमानावपि परस्परेण सम्बन्धमनुभविष्यत इति। किं पुनरियं सङ्ख्या शक्तिर्वा नियोगतो जातिमवच्छिनत्ति? नेत्याह। न हि ग्रहं संमार्ष्टीति श्रूयमाणमेकवचनमेकत्वसङ्ख्यां क्रियाङ्गभावेन प्रतिपादयति। नापि सक्तून् जुहोतीति द्वितीयाश्रुतिः सक्तूनां होमक्रियायां कर्मशक्तिमभिधत्ते। अपि त्वक्षान्दीव्यतीतिवत्संबन्धसामान्यतिरोहितकर्मरूपात् सक्तून् साधकतमत्वेन होमकर्मणि नियुङ्क्ते। क्वचित्तु तद्रूपयैव विभक्तिश्रुत्या संख्याकर्मादिशक्तीनां क्रियास्वाङ्गभावोऽवबोध्यते। यथा पशुमालभेत व्रीहीनवहन्तीति। कुतः पुनरिदं श्रुत्युपात्ते अपि क्वचिदेव सङ्ख्याशक्ती विवक्ष्येते? तत्र तावत्सङ्ख्यां प्रति श्रूयते सत्त्वभूतमिदंतदिति व्यपदेशयोग्यं वस्तु न शक्यते सङ्ख्यामन्तरेण शब्दैरभिधातुम्; ससंख्यानामेव शब्दानां सत्त्वाभिधायकत्वात्। अतो नान्तरीयकमुपादानं संख्याया इति सत्त्वनिर्देशे संख्या न विवक्ष्यते। यथा ब्राह्मणो न हन्तव्य इति। एवं च जात्यापि विना वस्तुमात्रस्य संप्रमुग्धत्वाद्विवेकेनाभिधानमशक्यम्। अतो नान्तरीयकं जात्युपादानमिति जातेरप्यविवक्षा प्राप्नोति। अपर आह, यत्र संख्यापदैरेकादिभिस्संख्या अभिधीयते, तत्र नियोगतः कर्माङ्गभावेन विवक्ष्यते। यथा— एकां गां ददाति, द्वाभ्यां खनति, त्रीन्पशूनालभत इति। एकादिशब्दरूपाद्धि सा प्रतीयमाना न शक्यमविवक्षितुम्। अन्यत्र तु शब्दसंस्कारमात्रपरत्वादेकवचनादेरविवक्षा यथा—गौः पदा न स्प्रष्टव्या। एतदपि नास्ति यस्योभयं हविरार्तिमार्च्छेदित्येवमादावुभयादिशब्दोपादानादप्यविवक्षादर्शनात्। अन्ये मन्यन्ते— जात्याख्यायामेकस्मिन्नन्यतरस्यामिति ज्ञापकादेकबहुवचनं च न विवक्ष्यते। द्विवचनं तु विवक्ष्यते। यथा—सारस्वतो भवन इति। तदप्ययुक्तं, द्विवचनस्यापि अविवक्षादर्शनात्। यथा—

यद्येतौ व्याधितौ स्यातां देयं स्यादिदमौषधम्।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यतस्तदौषधमेकस्यापि दीयमानं वातादिविकारं शमयितुं शक्नोति ; एवं तर्हि यत्र पराङ्गतया जातिर्विधीयते, तत्र संख्या विवक्ष्यते । यत्र तु स्वसंस्कारप्रतिपत्तयेऽनूद्यते तत्र न विवक्ष्यते । यथा–पशुना यजेत, ग्रहं संमार्ष्टीति । तदेतदुभयमपि उदाहरणमात्रेणाशक्यं प्रतिपत्तुमिति युक्तिरभिधातव्या । सेयमुच्यते । पशुना यजेतेति यागस्य फलवत्तया प्राधान्यं तदङ्गं पशुः, अङ्गं च यत्प्रधानस्योपकरोति । एकेनैव पशुना कृतः प्रधानस्योपकार इति द्वितीयो नोपादीयते । यदि हि यस्य यावन्तः पशवस्सन्ति स तावत उपादत्त इत्याश्रीयते । प्रकृतस्य यागस्यैकेन पशुना समापितत्वादितरवैयर्थ्यं माभूदिति यागान्तराणि क्रियन्ते । गुणेन द्रव्येणाप्रधानं यागः प्रयुक्तस्स्यात् । न चैष न्यायो यद्गुणः प्रधानं प्रयुङ्क्ते । किञ्च पशुमालभेत पशुना यजेतेत्यादौ क्रियाङ्गभावेनाप्रज्ञातस्य पशोस्साधनभावप्रख्यापनायेदमुत्पत्तिवाक्यम् । तत्र शब्ददर्शनावसेयत्वादर्थस्य यथाभूतं शब्द आह तथाभूतस्सोऽर्थोऽनुगततया समाश्रीयते । शब्देऽन्वयव्यतिरेकाभ्यां प्रकृतेर्जातिरिव विभक्तेस्संख्याभिधेयत्वेनावधार्यते । यदि च द्वितीयस्य पशोरुपादानमन्तरेण शब्दार्थो न समाप्येत, क्रिया वा न निवर्त्येत, तदोपादीयेतापि द्वितीयम् । परत्वजातेश्च प्रतिव्यक्त्यविकल्पात्मनः समाप्तत्वादेकपश्ववदानैश्च यागक्रियाभिनिर्वृत्तेर्द्वितीयो नोपादीयते । न च पशुना यजेतेत्यस्यास्संख्याया विरोधिनी संख्योत्पत्तिवाक्यगता काचिद्विद्यते । यदनुरोधादियं त्यज्येत, यस्मादिदमेव पशोरुत्पत्तिवाक्यं, अतश्शब्दवत्त्वात् सङ्ख्यान्तरेण चाविरोधात् । पशुना यजेतेत्यादौ सङ्ख्या विवक्ष्यते । ग्रहं संमार्ष्टीत्यत्र तु न विवक्ष्यते । यस्मात् प्राजापत्या नवग्रहा भवन्तीत्यादौ ग्रहाणामुत्पत्तिवाक्ये या अनेकत्वसङ्ख्या सा प्रधानविषया, तत्र ग्रहाणां विधीयमानत्वात् । ग्रहं संमार्ष्टीत्यत्र तु या एकत्वसंख्या सा शेषविषया, सम्मार्गस्य विधीयमानत्वात्, तदधिकरणसंपादनार्थत्वात् ग्रहशब्दस्य । न च युक्तं यत्प्रधानसम्बन्धिनी संख्या शेषसंख्यया बाध्यते । ननु चोत्पत्तिवाक्यवशेनानेक एव ग्रहो गृह्येत । ग्रहमित्येतस्माच्चैकवचनादेकस्सम्मृज्येत । किमत्र बाधितं स्यात् ? एवं तर्हि विधानवाक्ये पूर्वमेव प्रज्ञाताङ्गभावाः सम्मार्गमपूर्वं विधातुं केवलं ग्रहमित्यनेन स्मृतौ संनिवेश्यन्ते । ग्रहस्मृतिश्चानुभवसामर्थ्यादुद्भवन्ती यथानुभूतानेवार्थान्दर्शयतीति नैको ग्रहस्संमृज्यते । ननु च यथा पूर्वानुभूतचमसाद्यनेकपदार्थसन्निधौ संमार्गविधानाय ग्रहश्रुतिर्ग्रहाणामेव स्मारयति न चमसादीनां तथैवानेकग्रहसन्निधावेकवचनमेकस्यैव स्मारयेत् । येन हि बहवोऽनुभूतास्तेनैकोऽप्यनुभूत एव । सत्यमेतत् । किन्तु प्रतीयमानोऽप्यसौ संख्याभेदः क्रियां प्रत्यविधीयमानत्वादसमर्थः क्रियामेकस्मिन्नवस्थापयितुम् । अविधीयमानश्च संख्याभेदः, यतोऽत्र श्रुत्या ग्रहस्य संमार्गो विधीयते । तदेतावति पर्यवसितं वाक्यम् । न चापरश्शब्दोऽस्ति, येनैकस्य स विधीयेत । न चैकश्शब्द उभयं शक्नोति विधातुम् ; अप्रज्ञातं संमार्गं प्रज्ञातस्य चैकत्वेन संबन्धमिति प्रवृत्तिभेदात् । अथ ग्रहैकत्वाभ्यां विशिष्टस्संमार्गो विधीयते । न भिद्येत प्रवृत्तिः ; अर्थस्तु नैवं, यतो ग्रहार्थः

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

संमार्गस्तस्य प्रयोजनवत्त्वात् । विभक्तिविशेषश्च प्राधान्यं ग्रहस्य दर्शयति । अतो न विधीयते
सङ्ख्या । इह तर्हि कथं चित्रगवीं बध्नातीति चित्रो गुणो विधीयते, यतोऽत्रापि गोरस्वतन्त्री-
कारस्तस्याश्च चित्राया इति भिद्यते प्रवृत्तिः; गुणद्रव्ययोगस्य श्रुत्यैवाभिधीयमानत्वात् तद्विषय-
त्वाच्च । क्रियाया नात्रापराध इति चेत् ग्रहमित्यपि श्रुतिरेव सङ्ख्यायास्तदधिकरणस्य च द्रव्यस्य
क्रियाङ्गभावमभिधत्ते । तथा शोणं योजयेदित्येकशब्दोपादानयोर्जातिगुणयोरङ्गीकरणम् । एवं
तर्हि स्वार्थायां प्रवृत्तौ सङ्ख्याभेदस्य विधातुमशक्यत्वादविवक्षिता सङ्ख्या । यथा ग्रहं संमार्ष्टीति ।
अत्र ग्रहार्थत्वात्संमार्गस्य प्रधानं ग्रहाः, तदङ्गं संमार्गः । पशुना यजेत, शोणं योजयेत्, चित्रगवीं
बध्नातीत्यादौ तु यागादिकर्मार्थत्वात् पश्वादीनामप्रधानानां ससङ्ख्यानां सगुणानां च विशिष्टानामेव
विधानमिति विवक्ष्यते सङ्ख्यागुणश्चेति । आचार्यप्रवृत्तिरप्येतदेव ज्ञापयति प्रधाने संख्या
न विवक्ष्यते, गुणे तु विवक्ष्यत इति । तथा हि । सरूपाणामेकशेष इति कर्मसाधने शेषशब्दे
शेषशब्दाभिधेयस्य द्रव्यस्य साधुत्वाद्याख्यानेनाभिधीयमानससंस्कारत्वात् प्राधान्यम् । अतः
स्वार्थे प्रवर्तमानस्याविवक्षितसङ्ख्यात्वादेकशब्दोपादानं कृतमेकश्शिष्यत इति । तदेतल्लिङ्गं
प्रधानस्याविवक्षिता संख्येति । एवं सुबन्तं सुबन्तेन समस्यत इति संख्याया अङ्गीकरणात् बहूनां
समासो न भवति । यथा—महत्कष्टं श्रित इति । अत्र ह्येवंप्रकारावयवसन्निवेशावच्छिन्नस्समु-
दायस्साधुरित्यन्वाख्यायते । अतोऽवयवपरामर्शोपायेन समुदायस्य संस्काराधानप्रक्रमे प्रधानं
समुदायस्तमुद्दिश्य प्रवर्तमाना अवयवा उपात्तसङ्ख्याविशेषाङ्गीकरणेन प्रवर्तन्ते । यत्र तु
यत्नान्तरमारभते तत्र बहूनामपि भवति । यथा—कालाः परिमाणिनेति । बहुवचनात् द्व्यहजातः,
इति । यथा च बहुव्रीहिद्वन्द्वविधावनेकग्रहणान्मत्तबहुमातङ्गं वनं, धवखदिरपलाशा इति ।
क्वचित्पुनर्गुणेऽपि सङ्ख्या न विवक्ष्यते । यत्र तदविवक्षया प्रधानान्तरस्य सिद्धिर्भवति । यथा—
कर्तुरीप्सिततमं कर्मेति । अत्र हीप्सिततमस्य कर्मसंज्ञायां विधीयमानावच्छेदाया ईप्साया अव-
च्छेदायोपादीयमानः कर्ता यद्याश्रितैकत्वसंख्यः प्रतीयेत, अनेकस्येप्सितं वस्तु कर्मसंज्ञासंबन्धा-
दपेयात् । अतः प्रधानसंस्कारोपरोधतिरस्काराय कर्तानपेक्षितसंख्याविशेषस्समाश्रीयते । ननु च
प्रयोजनमिदं प्रधानान्तरसिद्धिः । तस्मादविवक्षायामुपपत्तिर्वक्तव्या । इयमुच्यते । सामान्य-
निबन्धनत्वादीप्सिततमशब्दस्य संबन्धिनामविशेषेण प्रसक्तौ साधनान्तरोच्छित्तये कर्तृग्रहणं
क्रियते । तदुपात्तविपरीतप्रतिषेधमात्रोपक्षयमसमर्थं संख्याभेदमङ्गीकर्तुमिति ।

शक्तिः पुनरप्रधाने प्रधाने वा संख्यावति विभक्त्या विधीयमाना विवक्षामेवानुरुध्यते ।
एवं च यथा पश्वादीनां ससंख्यानां तथा ग्रहादीनामसंख्यानामेव क्रियासु साधनभावो भवति ।
कथं पुनः पश्वादिगता संख्या साधनत्वेनावगम्यते, यावता प्रातिपदिकार्थस्य साक्षात्पारंपर्येण
वा संबन्धिसाधनत्वं संख्या च विभक्त्या विधीयते । न तु संख्यासाधनत्वयोः परस्परेण
संबन्धोऽस्ति । एवं तर्हि प्रथमतरं व्यक्तिस्संख्यया संबध्यते । संख्या संसर्गप्राप्तातिशया तु

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

बुध्द्वेदमेव भगवान्ददर्श खलु बादरिः । न द्रव्यगुणसंस्कारव्यतिरिक्तेऽस्ति शेषता ॥
वेदाद्गुरुनियोगाद्वा शासनाद्वा महीभुजः ।
न सचेताः क्रियां कांचिदनुतिष्ठति निष्फलाम् ॥

अत्रोच्यते, शब्दप्रमाणका वयं यच्छब्द आह तदस्माकं प्रमाणं ; तर्हि स्वर्गकामपदमपि शब्द एव। तस्याप्यत्रान्वयो वक्तव्यः । ननु च कर्तृपदमेकं कर्ता च क्रियार्थ इति, नैवम् । न कर्तृपदं स्वर्गकाम इति, अपि त्वधिकारिपदं । स्वर्गे कामोऽस्य स्वर्गं वा कामयते, स्वर्गकामनाविशिष्टः पुरुषोऽस्मात्पदादवगम्यते । तदत्र काम्यमानः स्वर्गः कथं यागक्रियया संबध्यते ? स्वर्गस्य निरतिशयप्रीतिरूपत्वात्, न प्रीतिरद्रव्यत्वात् क्रियाङ्गभावं भजते । न च प्रीतेः क्रियार्थत्वमुपपद्यते । प्रीत्यर्थमन्यन्नान्यार्था प्रीतिरिति । एवं च क्रियासाधनानुपदेशात् न कर्तृसमर्पकत्वेन स्वर्गकामपदसमन्वयः । अपि त्वधिकारिसमर्पकत्वेन । अथ कोऽयमधिकारी नाम ? कर्मणः स्वामी । ननु च कर्तैव कर्मणः स्वामी । नैवं स्वामी । स कर्ता न तत्स्वामी । ननु क्रियाकारकसंबन्धव्यतिरेकेण कोऽन्यः कर्मणः पुरुषस्य च सम्बन्धः । उच्यते, ममेदं कृत्यं अहमत्र स्वामीति स्वस्वामिभावमशक्यमाशङ्क्य पाश्चात्यः क्रियाकारकसम्बन्धो गम्यते । पाश्चात्य इत्यत्र किं प्रमाणमिति चेत् अनुपादेयविशेषणविशिष्टस्य पुंसो निर्देशस्तस्मादधिकृतस्य कर्तृत्वं, न कर्तुरधिकार इति । इत्थं च स्वर्गकामस्याधिकारो निर्वहति यदि तत्कर्म स्वर्गार्थं स्यात् स्वर्गोऽपि भोग्यो भवेत् । कथमहं स्वर्गं प्राप्नुयामित्येवं साध्यत्वेन स्वर्गमिच्छन् स्वर्गकाम उच्यते । यदि च न स्वर्गसाधनं कर्म स्यात् तद्विरुद्धमिदमापतति । स्वर्गं कामयते यागं करोति अन्यदिच्छत्यन्यत्करोतीति । अतः कर्मणि काम्यमाने साधनतां प्रतिपद्यमानः स्वर्गकामस्तान्निवाधिक्रियते । न चानधिक्रियमाणस्तत्र सम्बध्यते । तदेवमधिकृतत्वेन स्वर्गकामस्य कर्मणि सम्बन्धात् स्वर्गयागयोश्च साध्यसाधनभावावगममन्तरेणाधिकारस्यानिर्वाहादवश्यं क्रियायां साधनत्वं स्वस्यैव साध्यत्वमभ्युपगन्तव्यम् । अतश्च क्रियायाः फलं प्रति गुणभावादप्राधान्यमप्राधान्याच्च न वाक्यार्थत्वम् । तदुक्तं—"कर्माण्यपि हि जैमिनिः फलार्थत्वा" दिति । का चेयं क्रिया ? वाक्यार्थ इत्युच्यते, य एष यागादिर्भावार्थो धातुवाच्य, उत प्रत्ययार्थः, कश्चिदतिरिक्त इति । तत्र भावार्थस्य काम्यमानसाधनत्वादप्राधान्यमुक्तमेव। प्रत्ययार्थस्तु काम्यमानभावार्थगतसाध्यसाधनसम्बन्धापरित्यागेनैव वाक्यार्थतां प्रतिपद्यते । तस्मान्न क्रियामात्रपर्यवसायी वाक्यार्थ इति ।

किमिदानीं फलस्यैव वाक्यार्थत्वं प्रचक्ष्महे । तद्धि प्रधानं साध्यं च तदर्थो ह्यखिलः श्रमः ॥

नैवम् ; यथा क्रियायाः फलार्थत्वादप्राधान्यं एवं फलस्यापि पुरुषार्थत्वात् । नहि स्वर्गः स्वतन्त्र एव सत्तां लभतामिति पुरुषो यतते । अपितु स्वोपभोग्यतयैनमभिलषति, तदाह—"फलं च पुरुषार्थत्वात्"। तर्हि, पुरुष एव वाक्यार्थो भवतु । नैवं ; यजमानसंमितौदुम्बरी भवतीति तस्यापि क्रियाङ्ग-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

त्वात् । तदाह, पुरुषश्च कर्मार्थत्वादिति । इत्येवं क्रिया फलार्था, फलं पुरुषार्थं, पुरुषः क्रियार्थ इति चक्रके पतिताः कस्य प्राधान्यं शिष्मः । उच्यते, पुरुषस्तावन्न वाक्यार्थः पदार्थानां मिथः संसर्गेऽपि अव्ययकारकविशेषणार्थोपगृहीतस्याख्यातार्थस्यैव प्राधान्येन वाक्यार्थत्वात् । ननु चाख्यातेऽपि यजेतेत्येवमादौ कर्तर्येव लकारः । मैवम् ; योऽयं लकारो नाम सिद्धं हि साध्यायोपादीयत इति प्रत्ययार्थोऽपि कर्ता प्रकृत्यर्थे क्रियायामेव न्यग्भवति, फलमपि न वाक्यार्थः सिद्धासिद्धविकल्पानुपपत्तेः । सिद्धस्य तावत्फलस्याभिधानमेव नास्ति, काम्यमानत्वेन निर्देशात् ॥

साध्यमानत्वपक्षे तु साक्षात्तत्सिद्ध्यवेदनात् । व्यापारएव तन्निष्ठो वाक्यार्थ इति युज्यते ॥
अतएव हि वाक्यार्थं भावनां प्रतिजानते । यथोचितफलांमशत्रयसंबन्धबन्धुराः ॥

भाव्यनिष्ठो हि भावकव्यापारो भावनेति ।

सैष द्वादशभेदोऽर्थः क्रियादिःप्राक्प्रकीर्तितः ।
वाच्यो विशेष्यः शब्दस्य प्रत्याय्योह्यभ्युपेयते॥ ॥

नचैतद्वाच्यं ; वाक्यस्यैव प्रत्यायकत्वं न पदानां, यतो यथा गुडशब्दो गुडद्रव्यमभिधत्ते तथा प्रत्याययत्यपि तदविनाभाविमाधुर्यं, यदि वा पदान्येव संहत्यार्थमभिदधति वाक्ये ॥

आख्यातशब्दो वाक्यपदसङ्घातो वाक्यमित्यपि दर्शनानि विद्यन्ते । क्रियादयश्च पदार्थ एवान्तर्भवन्ति । तथाहि ; धात्वर्थः क्रिया, तां कालो विशिनष्टि, प्रत्ययार्थः कारकं तत्पुरुषो विशेषयति । तस्योभयस्याप्युपाधयोऽप्यवच्छेदका भवन्ति ; सम्भूय प्रकृतिप्रत्ययौ प्रत्ययार्थं ब्रूतः । यं तं प्रधानमामनन्ति स भेदाभेदाभ्यामुपस्कारार्थविशिष्टप्रातिपदिकार्थव्यपदेशं लभते । तस्य शक्तिसङ्ख्याभिव्यक्तये विभक्तिस्तदन्तं पदं पदानामपदानां च सामर्थ्ये वृत्तिः, वृत्तानामपि च कृत्तद्धितसमासानां पुनः प्रातिपदिकसंज्ञायां सुबुत्पत्तेः पदसंज्ञेति वाक्यं पुनरखण्डवाक्यार्थपक्षे वाचकमपि भवति । तत्र शब्दस्यार्थाभिधानसामर्थ्यं वाचकता । सा त्रिधा, मुख्या, गौणी, लक्षणा च । यथा— गौर्गच्छति, गौर्वाहीकः, गोषु निवसतीति । आसां च विशेषान् विशेषेणाग्रतो वक्ष्यामः । तेषु हि प्रबुद्धेषु प्रबुद्धाप्रबुद्धैः प्रसिद्धपदसामानाधिकरण्योपदेशवृद्धव्यवहारेभ्योऽधिगतेषु संज्ञासंज्ञिसम्बन्धबलेन शब्दस्तटस्थ एव गोत्वमर्थं प्रत्याययति । तदाहुः—

प्रसिद्धपदसामानाधिकरण्यात्प्रतीयते । अप्रसिद्धपदस्यार्थ श्चूते रौति पिको यथा ॥
तथाहि रौति यश्चूते पिकः स इति निश्चयः । उपदेशाद्यथार्थोऽयं पनसाख्यः प्रकाशते ॥
व्यवहारात्तु शब्दार्थसम्बन्धरलिप्रमाणकः । वृद्धशब्दाभिधेयानि प्रत्यक्षेणात्र पश्यति ॥
श्रोतुश्च प्रतिपन्नत्वमनुमानेन चेष्टया । अन्यथानुपपत्तौ च वेत्तिशक्तिद्वयाश्रयाम् ॥ इति ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

स्वावच्छेदेन विशिष्टज्ञानजनकता विशेषणत्वम्। तत्त्रिधा, भेदकमनुरञ्जकमुपलक्षकं च। यथा—विश्वजिता यजेत, श्वेतं छागमलभेत, लोहितोष्णीषा ऋत्विजः प्रचरन्तीति। न च गोत्वादयः कदाचिदपि शब्दानुवेधवन्ध्यबोधाविषयतां प्रतिपद्यन्ते। तथाहि; 'अयं गौः पृश्निरक्रमीत्' इत्यादौ यथा जातिगुणक्रियावच्छिन्नविषयावभासिनि सविकल्पके, तथा निर्विकल्पके विज्ञाने शब्दविशिष्ट एवार्थः परिस्फुरति। तदाह—

न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥

नचैतद्वाच्यं;

अस्तीत्यालोचनाज्ञानं प्रथमं निर्विकल्पकम्। बालमूकादिविज्ञानसदृशं शुद्धवस्तुजम्॥

यतो बालादयो जन्मान्तरानुभवोपजनितनानासंस्कारजातयो जात्याद्युल्लेखेनैव तंतमर्थं प्रतियन्ति। तथाहि; तदहर्जायमानस्यापि बालकस्य पुरतो विदग्धवनिताः प्रदीपं न प्रस्थापयन्ति कर्कटोन्मा भविष्यतीति। अथ तथात्वातथात्वयोस्स्थितिं प्रति हेतुत्वात्प्रत्यायकत्वं कथं पुनरतथाभूतमर्थं शब्दस्तथा प्रत्याययति? शब्दशक्तिमाहात्म्यात्। शब्दशक्त्युपजनिता हि बुद्धयः स्वबीजपरिपाकवशादाकारविशेषवत्य उपजायमानाः सत्यपि वस्तुनोऽभेदे भेदमुपदर्शयन्ति। तद्यथा—राहोः शिरः, शिलापुत्रकस्य शरीरमिति। तदुक्तं—

मायेन्द्रजालप्रख्योऽयं प्रविभागः प्रकल्प्यते।
शब्दशक्तिमहिम्नैव निर्विभागेऽपि वस्तुनि॥

अन्ये त्वाहुः—"न वस्तुनोऽधिकं रूपं न शब्दस्याधिकार्थता। शब्दः शब्दान्तरोपाधेरधिकार्थः प्रतीयते॥" तद्यथा, पुरुष इति पुरुषमात्रं, राज्ञ इति शब्दान्तरसन्निधेस्तु सएव विशिष्टः प्रतीयते पुरुषविशेषोऽयं राजपुरुष इति। एवं भवतिपचतीत्यादावपि पचतीति क्रियामात्रप्रतीतिः, भवतीति तु पदोपाधिः कर्तृशक्तिप्रयुक्ता प्रतीयते। अपरे तु मन्यन्ते, सकलविकल्पोल्लेखविरहितेऽपि वस्तुनि शब्दाः स्वमहिम्नैव नानाविधबुद्ध्युत्पत्तिकारणीभूताः शक्तीः सन्निवेशयन्ति, यद्वशादभिन्नरूपमपि वस्त्वन्यथाचावभासत इति। तथाहि, कथकः कंसं घातयतीत्युक्ते कंसवधमाचष्ट इति प्रतीयते। यदात्विन्द्रः कंसं घातयतीति प्रयोगस्तदा कंसघ्नं तमुपेन्द्रं इन्द्रः प्रयुङ्क्त इति। अन्ये तु कथकः कंसं घातयतीत्यत्रापि प्रयोजकं व्यापारं ब्रुवते,। यतः—"शब्दोपहितरूपांस्तान् बुद्धेर्विषयतां गतान्। प्रत्यक्षमिव कंसादीन् साधनत्वेन मन्यते॥" तेषां चोत्पत्तेःप्रभृत्याविनाशात् स वृद्धीराचक्षाणः परानपि तथैव प्रत्याययति। तथा वक्कारो भवन्ति गच्छ हन्यते कंसः, किं गतेन, हतः कंस इति। अथापरेषां दर्शनं;

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विकल्पयोनयः शब्दा विकल्पाःशब्दयोनयः ।
तेषामन्योन्यसम्बन्धो नार्थं शब्दाः स्पृशन्त्यपि ॥

तद्यथा—

गुणानुरागमिश्रेण यशसा तव सर्पता । दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥
अत्रार्धकुङ्कुमेत्युक्ते सौरभादिगुणान्विता । यशोऽनुरागयोर्वर्णप्रक्लृप्तिरवगम्यते ।
वधूशब्देन तु दिशां नायिकात्वं प्रतीयते । न च सम्बन्धगन्धोऽपि वास्तवस्तेषु विद्यते ॥

तदुपज्ञं चैष लौकिकःप्रवादः ।

अतहट्ठिएवि तहतहसंठिएव्वहिअअम्मि जाणिवेतसेइ ।
अत्थविसेसे सा जअइ विअउकइगोअरा वाणी ॥

भवतु नामशब्दस्य वाचकत्वपक्षेऽपि पक्षानुप्रवेशादर्थातथात्वेऽपि तथा प्रत्यायकत्वम् । विशेषण-पक्षे तु कथमिवैतदुपपद्यते ? विशेषणेन हि प्रधानानुयायिना भवितव्यम् । प्रधानेन त्वविचलित-स्वार्थेन । नैवं, विशेषणमपि शब्दोऽनुरञ्जकत्वेनार्थमध्यासीनः कुतश्चिदुपाधेरन्यथावभासमानः स्वाश्रयमप्यन्यथावभासयति । तद्यथा—

मगधेषु स्तनौ पीनौ कलिङ्गेष्वक्षिणी शुभे । बाहूप्रलम्बावङ्गेषु वङ्गेषु चरणौ मृदू ॥ इति ।

अत्र स्तनादयो जातिशब्दाः सव्यत्वदक्षिणत्वजातिद्वयैकार्थसमवायोपाधेरेकत्वयोगिनोऽपि द्वित्वे-नावभासमानाः स्वाश्रयानपि तथैवावभासयन्ति । एतेन व्यक्तौ पदार्थे बहूनामपि द्वित्वावभासो व्याख्यातः । तद्यथा—

दैत्याधिपप्राणमुषां नखानामुपेयुषा भूषणतां क्षतेन ।
प्रकाशकार्कश्य गुणौ दधानाः स्तनौ तरुण्यः परिवव्रुरेनम् ॥

अत्र विशिष्टनखक्षतभूषादिविशेषोपादानात्सुव्यक्तैव स्तनशब्दस्य व्यक्त्यर्थतेति । एवं कदा पूर्वाः फल्गुन्य इति चन्द्रमसा सह योगे बहुत्वविवक्षायां द्वयोरपि बहुत्वेनावभासः । कदा तिष्यपुनर्वसू इति तारकानपेक्षनक्षत्रद्वित्वविवक्षायां बहूनामपि द्वित्वेनावभासो भवति । अथ यथा चन्द्रयोगस्याविवक्षायां तारकागतद्वित्वसङ्ख्यया पूर्वे फल्गुन्याविति भवति । एवं चन्द्रमसा सह योगस्य तारकासङ्ख्यायाश्च विवक्षितत्वे भवितव्यं, तिष्यपुनर्वसव इति प्रयोगेण न भवितव्यम् । नहि लोके तादृशी विवक्षा विद्यते; विवक्षा च कुलवधूरिव न लोकमर्यादामतिक्रामति ।

तद्यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

जनाय शुद्धान्तचराय शंसते कुमारजन्मामृतसंमिताक्षरम् ।
अदेयमासीद्वयमेव भूपतेः शशिप्रभं छत्रमुभे च चामरे ॥

ननु चार्थोपाधेरप्यर्थोऽन्यथाभासमानो दृश्येत । तद्यथा—

पायाद्वो रचितत्रिविक्रमतनुर्देवः स दैत्यान्तको
यस्याकस्मिकवर्धमानवपुषस्तिग्मद्युतेर्मण्डलम् ।
मौलौ रत्नरुचिः श्रुतौ परिलसत्ताटङ्ककान्तिक्रमात्
जातं वक्षसि कौस्तुभाभमुदरे नाभीसरोजोपमः ॥

ततश्च न ज्ञायते किमयमर्थोपाधिनिबन्धनोऽर्थस्यान्यथावभासः उत शब्दोपाधिनिबन्धन इति । चिरं जीव, यदवतीर्ण इव प्रतिपाद्यार्थपदवीं दृश्यसे, पृच्छाम्यायुष्मन्तं कएषोऽर्थोनाम, किं ब्रवीषि यःशब्देन प्रतिपाद्यते, अथ गौरित्यत्र कः शब्दार्थः ? किमात्थ सास्नादिमान्पिण्ड इति, कथं स्वरूपमपि पृष्टः शब्देनैव व्यपदिशसि । किमवोचत् शब्दाख्यविशेषणानुरक्तस्य कस्य स्वरूपमन्यथाख्यातुं न शक्नोमि । शब्दापरित्यागलब्धप्रकाशयैव च तदनुभूत्यानुभवामि । तर्हि शब्दात्पृथगर्थतत्त्वस्य व्यपदेष्टुमनुभवितुं चाशक्यत्वाच्छब्दस्यैवायमध्यासो विवर्तो विपरिणामो वार्थो नाम नान्यः कश्चिदिति निश्चीयताम्, युक्तं चैतत्, नहि निरूपयन्तोऽपि शब्दाद्विभिन्नमर्थतत्त्वमुपलभामहे । अन्येऽपि चैवमाहुः—

अविभागोऽपि बुध्यात्मा विपर्यासितदर्शनैः । ग्राह्यग्राहकसंवित्तिभेदवानिवलक्ष्यते ॥
ग्रहीतृग्रहणग्राह्यमायापथपरिच्युताम् । नमामः परमानन्दज्योतीरूपां सरस्वतीम् ॥ इति ।

कः पुनरयं विवर्तो नाम । उच्यते, एकस्य तत्त्वादप्रच्युतस्य सन्निवेशविशेषादिभिरसत्यप्रविभक्तान्यरूपोपग्राहिता विवर्तः । तत्र यथा जलादयः कल्लोलादिरूपेण सर्पादयः कुण्डलादिरूपेण नीलादयश्चित्रादिरूपेण विवर्तन्ते तथा शब्दतत्त्वमविद्योपाधेस्तेनतेनार्थरूपेण तथातथा विवर्तन्ते । तद्यथा—

व्यपगतघनपटलमचलजलनिधिसदृशवपुरम्बरतलम् ।
अञ्जनचूर्णपुञ्जश्यामलं शार्वरं तमः ॥

इति । अथ यथा शब्दस्यार्थो विवर्तस्तथार्थस्य शब्दो यदि भवेत् को दोषः स्यात् ? न कश्चित् । किन्तु—

वाग्रूपता चेदुत्क्रामेदवबोधस्य शाश्वती । न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शनी ॥
इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् । यदि शब्दाह्वयं ज्योतिरासंसारं न दीप्यते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

ननु चाभिधीयमानतेव प्रतीयमानतापि वाक्यार्थधर्मो विद्यते। यथा चोच्यते,

प्रतीयमानं पुनरन्यदेव वस्त्वस्ति वाणीषु महाकवीनाम्।
यत्तत्प्रसिद्धावयवातिरिक्तमाभाति लावण्यमिवाङ्गनासु॥

तस्य च वाक्यार्थभावनोत्तरकालमवगतेरध्यासपक्षे विवर्तपक्षे वा कथमिवोपपत्तिर्भवति? उच्यते, विपरिणामाद्भविष्यति वस्तुनो अवस्थान्तरगमनं विपरिणामः; तत्र यथा मृदादयो घटादिरूपेण क्षीरादयो दध्यादिरूपेण चैत्रादयो युवादिरूपेण विपरिणमन्ते तथेदं शब्दब्रह्माप्यविद्योपाधेः तेनतेनार्थरूपेण तथातथा विपरिणमते। तद्यथा—सन्ति मे पञ्च पुत्राः, मातरं पितरं शुश्रूषितवानस्मि, योऽहं युवा द्रमिडदेशे द्रमिडकन्याभिः सहावसं सोऽहमिदानीं पश्चिमे वयसि गङ्गातीरे तपश्चरामीति। अत्र च शब्दार्थयोः पृथगवभासाद्वाक्यार्थस्याभिधीयमानतायां प्रतीयमानतायां वा नानुपपत्तिः, न चैतावता शब्दव्यापारो विरंस्यति। यतस्तात्पर्यमस्य ह्यग्रतो विशेषेण वक्ष्यमाणमास्ते। तस्योदाहरणमात्रं—

प्रातश्रीरेष कस्मात्पुनरपि मयि तंमन्थखेदं विदध्यात्
निद्रामप्यस्य पूर्वामनलसमहसो नैव संभावयामि।
सेतुं बध्नाति कस्मादयमिह सकलद्वीपनाथानुयात-
स्त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पःपयोधेः॥

अत्र वर्णनीयराजविशेषस्य दिग्विजयिनो यथाश्रुतवाक्यार्थोऽभिधीयमानस्त्वय्याति पदे विष्णवध्यासावतारः समस्तीति प्रतीयमानस्तदवतारान्तराणां निद्रालसत्वादिदोषयोगादस्य च तद्व्युदासात्। ततो वैशिष्ट्यप्रतिपादनं तात्पर्यं यस्य काव्येषु ध्वनिरिति प्रसिद्धिः। तदुक्तं—

तात्पर्यमेव वचसि ध्वनिरेव काव्ये सौभाग्यमेव गुणसम्पदि वल्लभस्य।
लावण्यमेव वपुषि स्वदतेऽङ्गनायाः शृङ्गार एव हृदि मानवतो जनस्य॥

कः पुनः काव्यवचसोः ध्वनितात्पर्ययोर्विशेषः। उच्यते—

यदवक्रं वचश्शास्त्रे लोके च वच एव तत्। वक्रं यदर्थवादादौ तस्य काव्यमिति स्मृतिः॥
यदभिप्रायसर्वस्वं वक्तुर्वाक्यात्प्रतीयते। तात्पर्यमर्थधर्मस्तच्छब्दधर्मः पुनर्ध्वनिः॥
सौभाग्यमिव तात्पर्यमान्तरो गुण इष्यते। वाग्देवताया लावण्यमिव बाह्यस्तयोर्ध्वनिः॥
अदूरविप्रकर्षात्तु द्वयेन द्वयमुच्यते। यथासुरभिवैशाखौ मधुमाधवसंज्ञया॥ इति॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

विभक्त्यर्थोऽथ वृत्त्यर्थः पदार्थश्चोपवर्णितः । भावनादिप्रभेदेन वाक्यार्थश्च प्रकीर्तितः ॥
क्रियायाश्च पदार्थत्वाद्वाक्यार्थत्वमुपाकृतम् । कृतं च भावनायास्तदपदार्थत्वहेतुकम् ॥

वाच्या विशेष्याः प्रत्याय्याः शब्दस्योक्ताः क्रियादयः ।
अध्यासविपरीणामविवर्ताश्चास्य तान्प्रति ॥

विभक्तिवृत्त्यर्थवतोरुपस्क्रिया प्रधानयोर्धाम पदार्थ इष्यते ॥
पदं पदार्थस्य तु वाक्यगोचरो भवेद्यतोऽर्थस्तदतो निरूप्यते ॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे
विभक्त्यर्थादिचतुष्टयप्रकाशो नाम षष्ठः प्रकाशः



CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

॥ श्रीः ॥

# सप्तमः केवलशब्दसम्बन्धशक्तिप्रकाशः

तत्राभिधाविवक्षातात्पर्यप्रविभागव्यपेक्षासामर्थ्यान्वयैकार्थीभावदोषहानगुणोपादानालङ्कार-रसावियोगरूपाः शब्दार्थयोर्द्वादश समर्थाः साहित्यमित्युच्यते । तेषु शब्दस्यार्थाभिधायिनी शक्तिर-भिधा । तया स्वरूप इवाभिधेये प्रवर्तमानः शब्दो वृत्तित्रयेण वर्तते, ताश्च मुख्या गौणी लक्षणेति तिस्रः । तत्र साक्षादव्यवहितार्थाभिधायिका मुख्या । गम्यमानशौर्यादिगुणयोगव्यवहितार्था गौणी । स्वार्थाविनाभूतार्थान्तरोपलक्षणा तु लक्षणेति । तथाहि; गौरित्ययं शब्दो मुख्यया वृत्त्या सास्ना-दिमन्तमर्थं प्रतिपादयति, सएव तिष्ठन्मूत्रतादिगुणसम्पदमपेक्षमाणो यदा बाह्लीके वर्तते तदा गौणीं वृत्तिमनुवदति । तदाह,

रूढ्या यत्र सदर्थोऽपि लोके शब्दो निवेशितः ।
स मुख्यस्तत्र तत्साम्याद्गौणोऽन्यत्र स्खलद्गतिः ॥

यदा तु शब्दः स्वार्थतः क्रियासिद्धौ साधनभावं गन्तुमसमर्थस्तदाभिधेयाविनाभूतमर्थान्तरं लक्षयति । तदा सा च लक्षणा वृत्तिः । यथा गङ्गायां घोषः प्रतिवसति । अत्र गङ्गाशब्दो विशिष्टोदकप्रवाहे निरूढाभिधानशक्तिः । स च घोषकर्तृकायाः प्रतिवसनक्रियाया अधिकरणभावं गन्तुमसमर्थः स्वार्था-विनाभूतं तटं लक्षयति । तदुक्तम्—

अभिधेयाविनाभूतप्रतीतिर्लक्षणेति या । सैषा विदग्धवक्रोक्तिजीवितं वृत्तिरिष्यते ॥

प्रत्येकं चैतास्तिस्रोऽपि द्विधाभूय पृथक् षोढा भिद्यन्ते । तत्र मुख्या द्विधा, तथाभूतार्था, तद्बाधा-पत्तिश्च । तयोः तथाभूतार्था षोढा, जातिविषया, व्यक्तिविषया, आकृतिविषया, गुणविषया, क्रिया-विषया, संबन्धविषया चेति । तत्र गौरश्वः पुरुषो ब्राह्मण इत्यादिर्जातिविषया, यथा—

प्रसन्नाः कान्तिहारिण्यो नानाश्लेषविचक्षणाः ।
भवन्ति कस्यचित्पुण्यैर्मुखे वाचो गृहे स्त्रियः ॥

यथा वा—

योरत्थणीए बहुणो हळाए सामए मंदगमणाए ।
कोरच्छिपेच्छिरीए वहुप्पए एक्कमहिसीए ॥

यथा वा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

निजनयनप्रतिबिम्बैरम्बुनि बहुशः प्रतारिता कापि ।
नीलोत्पलेषु विमृशति करमर्पयितुं कुसुमलावी ॥

चित्रबिम्बभ्रमकिमाद्यर्थवाचिन्याकृतिविषया यथा—

इङ्गुदीपादपः सोऽयं शृङ्गिबेरपुरे पुरा । निषादपतिना यत्र स्निग्धेनासीत्समागमः ॥

यथा वा—

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात्पश्चात् ।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा ॥

श्वेतः कर्कशः कृशः स्थूल इत्यादिर्गुणविषया यथा—

श्यामलाः प्रावृषेण्याभिर्दिशो जीमूतपङ्क्तिभिः । भुवश्च सुकुमाराभिर्नवशाद्वलराजिभिः ॥

यथा वा—

ताम्बूलबहलरक्तः प्रियभुक्तो धूसरः सपर्यन्तः ।
बालाधरोऽधिरोहति कुसुमरुचः काञ्चनारस्य ॥

पक्ता पचन् पक्वः पच्यमान इत्यादिक्रियाविषया यथा—

दातुःस्थातुर्द्विषां मूर्ध्नि यष्टुस्तर्पयितुः पितॄन् ।
युध्यभग्नविपन्नस्य किं दशास्यस्य शोचसि ॥

यथा वा—

कुविआओपसाण्णाओ ओरुण्णमुहीओ विहसमाणीओ ।
जहगहिआ तहहिअअं हरन्ति उच्छुण्णमहिळाओ ॥

पिता माता शत्रुः सूनुरौपगव इत्यादिः संबन्धविषया यथा—

सूर्याचन्द्रमसौ यस्य मातामहपितामहौ । स्वयंवृतपतिर्द्वाभ्यामुर्वश्या च भुवा च यः ॥

यथा वा—

सपदि सखीभिर्निभृतं विरहवतीस्त्रातुमत्र भज्यन्ते ।
सहकारमञ्जरीणां शिखोद्गमग्रन्थयः प्रथमे ॥

अर्थस्यातथात्वेऽध्यासादिभिस्तथात्वापादनं तद्भावापत्तिः । सापि षोढा, अध्यासात्मिका, कल्पनात्मिका, विवर्तात्मिका, विपरिणामात्मिका, विपर्ययात्मिका, प्रवादात्मिका चेति । तत्र जानतोऽप्यतास्मिंस्तदेतदित्यारोपणमध्यासः । यथा—

अइदिअर किंणपेच्छसि आआसं किमुहा पुळोएसि ।
जाआए बाहुमूले मिअद्धअंदाणपरिपाडी ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यथा वा—

कमलमनम्भसि कमले च कुवलये तानि कनकलतिकायाम् ।
सा च सुकुमारसुभगेत्युत्पातपरम्परा केयम् ॥

असतोऽप्युत्प्रेक्षाकल्पना यथा—

गुणानुरागमिश्रेण यशसा तव सर्पता । दिग्वधूनां मुखे जातमकस्मादर्धकुङ्कुमम् ॥

यथा वा—

अनिराकृततापसम्पदं फलहीनां सुमनोभिरुज्झिताम् ।
खलतां खलतामिवासतीं प्रतिपद्येत कथं बुधो जनः ॥

वस्तुनः सन्निवेशविशेषेणावस्थानं विवर्तः । यथा—

उत्फुल्लस्थलनलिनीवनादमुष्मादुद्धूतः सरसिरुहोद्भवः परागः ।
वात्याभिर्वियति विवर्तितः समन्तादाधत्ते कनकमयातपत्रलक्ष्मीम् ॥

यथा वा—

अस्मिन्नीषद्वलितविषमस्तोकविच्छिन्नमुग्नः किञ्चिल्लीनो विपिनविनतः पुञ्जितश्चोत्थितश्च ।
धूमोद्गारस्तरुणमहिषस्कन्धनीलो दवाग्नेः स्वैरं सर्पन् सृजति गगने गत्वरान्पत्रभङ्गान् ॥

वस्तुनोऽवस्थान्तरोपगमनं विपरिणामः । यथा—

य एते यज्वानः प्रथितमहसो येऽप्यवनिपाः मृगाक्ष्यो याश्चताः कृतमपरसंसारिकथया ।
अहो ये चाप्यन्ये फलकुसुमनम्रा विटपिनो जगत्येवंरूपा विलसति यदेषा भगवती ॥

यथा वा—

च्युतामिन्दोर्लेखां रतिकलहभग्नं च वलयं समं चक्रीकृत्य प्रहसितमुखी शैलतनया ।
अवोचद्यंपश्येत्यवतु स शिवः सा च गिरिजा सच क्रीडाचन्द्रो दशनकिरणापूरिततनुः ॥

मिथ्याज्ञानं विपर्ययः । यथा—

हृतोष्ठरागैर्नयनोदबिन्दुभिः निमग्ननाभेर्निपतद्भिरङ्कितम् ।
च्युतं रुषा भिन्नगतेरसंशयं शुकोदरश्याममिदं स्तनांशुकम् ॥

यथा वा—

माभैः शशाङ्क मम शीधुनि नास्ति राहुः खे रोहिणी वसति कातर किं बिभेषि ।
प्रायोविदग्धवनितानवसङ्गमेषु पुंसां मनः प्रचलतीति किमत्र चित्रम् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अवस्तुष्वपि वस्तुवन्मिथ्याप्रसिद्धिः प्रवादः। यथा—

गन्धर्वपुरसुरायुधकुरङ्गतृष्णान्धकाररूपाणि।
असतामसत्यदुर्ग्रहदुरापमलिनानि वृत्तानि॥

यथा वा—

रत्नच्छायाव्यतिकरमिव प्रेक्ष्यमेतत्पुरस्ता द्वल्मीकाग्रात्प्रभवति धनुःखण्डमाखण्डलस्य।
येन श्यामं वपुरतितरां कान्तिमापत्स्यते ते बर्हेणेव स्फुरितरुचिना गोपवेषस्य विष्णोः॥

गौणी द्विधा, गुणनिमित्ता उपचारनिमित्ता च। तत्र यस्यां द्वयोर्वचनयोस्सामानाधिकरण्येन वैयधिकरण्येन वा प्रयोगः विशेषणविशेष्यभावान्यथानुपपत्त्यैकस्य प्रतीयमानाभिधीयमानगुणद्वारकः सम्बन्धो भवति। सा गुणव्यवहितार्था गुणनिमित्ता। तत्र च—

संसर्गिभेदकं यद्यत्सव्यापारं प्रतीयते। गुणत्वं परतन्त्रत्वात्तस्य शास्त्र उदाहृतम्॥

गुणः स्वार्थो विशेषणं प्रवृत्तिनिमित्तमिति चैकोऽर्थः। स धर्मगुणक्रियाकृतिजातिस्वरूपादिभेदादनन्तः। तत्सम्बन्धेन यद्यपि तन्निमित्ता वृत्तिरनन्तप्रकारैव कल्प्यते तथापि तस्याः षडेव विकल्पा भवन्ति। मुख्यविषयः, अमुख्यविषयः, भेदविषयः, अभेदविषयः, विशेषणविषयः, अविशेषणविषय इति। तत्र द्वयोरपि मुख्यविशेष्यार्थयोर्धर्मादिनिमित्तमेकस्येतरविशेषणत्वं भवति स मुख्यविषयः। स धर्मनिमित्तः समासे यथा—

यो हि दीर्घासिताक्षस्य विलासवलितभ्रुवः। कान्तामुखस्यावशगस्तस्मै नृपशवे नमः॥

स एवासमासो यथा—

गौर्गौः कामदुघासम्यक्प्रयुक्ता स्मर्यते बुधैः। दुष्प्रयुक्ता पुनर्गोत्वं प्रयोक्तुः सैव शंसति॥

क्रियानिमित्तः समासो यथा—

कत्तोसंवडइमहं पिअसहिविअसगमोणिसीहेवि।
जा जअइ गहिअकरणिअरकंखिरि चंदचंडालो॥

सएवासमासो यथा—

किं द्वारि देवहतके सहकारकेण संवर्धितेन विषपादप एष पापः।
अस्मिन्मनागपि विकासविकारभाजि भीमा भवन्ति मदनज्वरसन्निपाताः॥

यत्र विशेषणविशेष्ययोः प्रथममेवैकममुख्यं भवति असावमुख्यविषयः। स विशेष्यस्यामुख्यत्वे सामानाधिकरण्येन धर्मनिमित्तो यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

हिमलवसदृशश्रमोदबिन्दूनपनयता किल तन्नवोढवध्वाः ।
कुचकलशकिशोरकौ कथं चित्तरलतया तरुणेन परपृशाते ॥

स एव क्रियानिमित्तो यथा--

मुखपङ्कजरङ्गेऽस्मिन्भ्रूलता नर्तकी तव । लीलयाङ्गनाभ्यां दृष्टौ सखि यूनां निषिञ्चति ॥

विशेषस्य मुख्यत्वे वैयधिकरण्येनाकृतिनिमित्तो यथा--

पडिपक्खमंतुपुंजे ळावण्णकुडे अणंगगअकुंभे ।
पुरिसअअहिअअधरिए कीसथणंतीथणेवहसि ॥

स एव क्रियानिमित्तो यथा—

ववसाअअरइपओसो रोसगइंददिढसिंखळापडिबंधो ।
कहकहवि दासरइणोजअकेसरिपंजरोगओघणसमओ ॥

यत्रैक एव शब्दोऽर्थे भेदप्रकल्पनया गुणनिमित्तं विशेषणविशेष्यभावमनुभवति असौ भेदविषयः । गौणमुख्ययोर्गुणनिमित्तो मुख्ययोश्च जातिनिमित्तो यथा—

तहकमलक्कमळचंदो चंदमुहि तुज्झमुहअंदो ।
कमलंउणकमळच्चिअ चंदोचंदोच्चिअवराओ ॥

मुख्ययोर्गुणनिमित्तो यथा—

तालाजाअंति गुणा जालादे सहिअएण्हिघेप्पंति ।
रइकिरणाणुग्गहिआइ होंतिकमळाइकमळाइ ॥

मुख्ययोः क्रियानिमित्तो यथा--

ग्रसमानमिवौजांसि सदसो गौरवेरितम् ।
नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ॥

स्वरूपनिमित्तो यथा—

अमृतममृतं चन्द्रश्चन्द्रस्तथाम्बुजमम्बुजं रतिरपि रतिः कामः कामो मधूनि मधून्यपि ।
इति न भजते वस्तुप्रायःपरस्परसङ्करं तदियमबला धत्ते भावान् कथं सकलात्मकान् ॥

साधर्म्यादिप्रसिद्धेर्यत्रोपमानमेवोपमेयं प्रत्याययत्यसावभेदविषयः । सोन्योऽक्तौ यथा—

पिबन्मधु यथाकामं भ्रमरः फुल्लपङ्कजे । अप्यसन्नद्धसौरभ्यं पश्य चुम्बति कुड्मलम् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

समासोक्तौ यथा—

अनुरागवती सन्ध्या दिवसस्तत्पुरस्सरः । अहो दैवगतिश्चित्रा तथापि न समागमः ॥

उभयोक्तौ यथा—

उपाध्वं तत्पान्थाः पुनरपि सरोमार्गतिलकं यदासाद्य स्वेच्छं विलसथ विलीनक्लमभराः ।
इतस्तु क्षाराब्धेर्जठरमकरक्षारपयसौ निवृत्तिःकल्याणी न पुनरवतारः कथमपि ॥

अनुभयोक्तौ यथा—

अथेदं रक्षोभिःकनकहरिणच्छद्मविधिना तथावृत्तं पापैर्व्यथयति यथाक्षालितमपि ।
जनस्थाने शून्ये विकलकरुणैरार्यचरितैरपि ग्रावा रोदित्यपि दलति वज्रस्य हृदयम् ॥

यत्र विशेषणभूतं नाम सर्वनाम वा विशिष्टगुणधर्मादिकं प्रवृत्तिनिमित्तमुपादत्ते स विशेषणविषयः । स नाम्नो विशिष्टगुणनिमित्तत्वे यथा—

भवतु रुषि कठोरा किन्तु रम्या मृगाक्षी निरुपधिमधुराणां स्वादवोऽमी विकाराः ।
श्रयति कठिनभावः शुक्तिपात्रेष्वपो याः कुलवनबहुमानास्तासु मुक्ताफलं ताः ॥

संस्कारक्रियादिजनितं संज्ञामपि नामैव । तस्य यथा—

स्निग्धश्यामलकान्तिलिप्तवियतो वेल्लद्बलाका घना
वाताः शीकरिणः पयोदसुहृदामानन्दकेकाःकलाः ।
कामं सन्तु दृढं कठोरहृदयो रामोऽस्मि सर्वंसहे
वैदेही तु कथं भविष्यति हहा हा देवि धीरा भव ॥

सर्वनाम्नो विशिष्टगुणसम्पत्तिनिमित्तत्वे यथा—

स राजा तत्सौख्यं स च परिजनस्ते च दिवसाः
स्मृतावाविर्भूतं त्वयि सुहृदि दृष्टेऽद्य सकलम् ।
विपाके घोरेस्मिन्न खलु न विमूढा तव सखी
पुरन्ध्रीणां चित्तं कुसुमसुकुमारं हि भवति ॥

मुख्यवद्गौणस्यापिविशेषणं तद्विशेषणमेव तत्र सर्वनाम्नो गुणसम्पत्तिनिमित्तत्वएव यथा—

छदा . . वळअ दीहिअहिमंघल्लिहिनि अदेह । अन्नजीदिहरलोअणहोतहोमुहअंदहोरेव ॥

विशेषणमव्यभिचरितमविशेषणं तद्धर्मादिगुणयोगेन यत्र प्रवर्तते तदसावविशेषणविपर्यासः—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

. . . ज हणौ हलामओ विकण्णस्स कोणजीवेज्ज ।
सोउण तेण वि मओ रिट्ठो सच्च पिअबइल्ळो ॥

चेतनप्रकृतेर्यथा—

सच्चं च्चिअकठमओ सुरणाहो जेणहलिअधूआए ।
हत्थेहि कमलदलकोमलेहि चित्तो न पल्लविओ ॥

अचेतनस्य यथा—

भवतु विदितमेतत्काष्ठमेवासि सत्यं किमपरमभिधारये कानने वर्धितोऽसि ।
कुवलयनयनायाः पाणिसङ्गोत्सवेऽस्मिन् मुसल किसलयं ते तत्क्षणाद्यन्न जातम् ॥

अचेतनस्यैव प्रभावतो यथा—

अन्विष्यद्भिरयं चिरात्कथमपि प्राप्येत यद्यर्थिभिः
नाथ त्वं पुनरर्थिनः प्रतिदिनं यत्नात्समन्विष्यसि ।
प्राप्तौ चिन्तितमात्रकं ददसौ चिन्तातिरिक्तप्रदं
त्वामालोक्य विदीर्यते यदि न तद्ग्रावैव चिन्तामणिः ॥

मुख्यया गौण्या वान्यविशेषणस्य सतोऽन्यत्रारोपणमुपचारः । तन्निमित्तकोपचारनिमित्ता ; सा तु गौणव्यवहितार्थत्वात् गौणी भवति, तस्या अपि धर्मगुणाकृतिक्रियास्वरूपजात्यादयः प्रवृत्तिनिमित्ततद्भेदात्। सापि षट्प्रकारा भवति, धर्मनिमित्ता, गुणनिमित्ता, आकृतिनिमित्ता, क्रियानिमित्ता, स्वरूपनिमित्ता, जातिनिमित्ता च । तासु धर्मनिमित्ता यथा—

भवतु रुषि कठोरा किन्तु रम्या मृगाक्षी । .... ॥
तालैः शिञ्जद्वलयसुभगैर्नर्तितः कान्तया मे । .... ॥

अत्र कठोरसुभगशब्दौ मूर्तिमद्द्रव्यप्राणिविशेषयोर्विशेषणत्वेन रूढौ, रोषवलयशिञ्जयोरारोप्यमाणौ, तद्योगान्नायिकाकालयोरपि विशेषणभावमनुभवतः । गुणनिमित्ता यथा—

किमिव हि मधुराणां मण्डनं नाकृतीनाम् ।
एसअवसाणविरसो ससुरेण सुओ वळअसद्दो ।

अत्र मधुरविरसशब्दौ वा स्वान्यविशेषणत्वेन रूढौ । तद्व्यवधानेन वर्णनयाऽऽकृतिवलयशब्दैरारोपितौ विशेषणभावमनुभवतः । आकृतिनिमित्ता यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अङ्कुरिते पल्लविते कोरकिते कुसुमिते च सहकारे ।
अङ्कुरितः पल्लवितः कोरकितः कुसुमितश्च हृदि मदनः ॥

यथा वा—

पल्लविअं पिवअकरपल्लवेहिं पप्पुल्लिअंव णयणेहिं ।
फलिअं विअ पीणपओहरेहि अज्जाए—लाअण्णं ॥

अत्राङ्कुरितपल्लवितादयो मूर्तिमत्सु भूरुहादिषु आकृतिविशेषतो विशेषणत्वेन रूढास्तद्व्यवधानेनामूर्तयोर्मदनलावण्ययोरारोप्यमाणा गौणं विशेषणभावमनुभवन्ति । क्रियानिमित्ता यथा—

शशिनमसूत प्राची नृत्यति मदनो हसन्ति ककुभोऽपि ।
कुमुदरजःपटवासं विकिरति गगनाङ्गणे पवनः ॥

यथा वा—

अवऊहिअपुप्पदिसैमअं जेह्लाएसे विअ पओससुहे ।
माइरझिन्तउ रअणीअपरदिसामुत्तपत्थिअम्मि मिअंके ॥

अत्र सेवोपगूढादीनामन्यक्रियाणां तद्व्यवधानेनान्यत्रारोपणाद्विशेषणभावः । कथं पुनरयं भेदो गौण्याः पृथग्भवति यत्र प्रसिद्धेरुपमानोपमेयं गम्यते तां गुणव्यवहितार्थामगौणीयामन्योक्तिं समासोक्तिं वा वर्णयन्ति । यस्यां पुनरुपमेयेन गुणसाम्यादुपमानं गम्यते तां गौणव्यवहितार्थां गौणीयां समाधिमित्याचक्षते । तदुक्तम्–उक्तस्याप्राकरणिकत्वे समासोक्तिः, प्राकरणिकत्वे समाधिरिति । स्वरूपनिमित्ता यथा—

कस्य नावनतिं कुर्याद्दैन्यमाता दरिद्रता । कं वा न मदयत्येषा श्रीरुन्मादकुटुम्बिनी ॥

यथा वा—

आभरणस्याभरणं प्रसाधनविधेः प्रसाधनविशेषः ।
उपमानस्यापि सखे प्रत्युपमानं वपुस्तस्याः ॥

अत्र दरिद्रताया दैन्यजनकत्वेन मातृस्वरूपाध्यारोपादपत्यता व्यवधानेन सम्बन्धो दरिद्रता दैन्यं जनयतीति वाक्यार्थः । तस्य च शशिनमसूत प्राचीत्यादिवदुपचारोपपत्तिः । एवमुत्तरत्रापि योज्यम् ॥ जातिनिमित्ता यथा—

धृतिःक्षमा दमःशौचं सामर्थ्यं* वागनिष्ठुरा । भूतानामनभिद्रोहस्सप्तैताः समिधःश्रियः ॥

यथा वा—

येषां प्राणिवधः क्रीडा नर्म मर्मच्छिदोगिरः । परोपतापः कर्तव्यं ते मृत्योरपि मृत्यवः ॥

---

* औचित्यं – इति मूलपाठः.

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अत्राग्निसिद्धर्मेषु मर्त्यमृत्युधर्मेषु च श्रीभृत्यादिषु मृत्युदुर्जनेषु चारोपितेषु समिन्मृत्युजात्योरेव गुणभावो न त्वग्निमर्त्ययोरिति । अमीषां साक्षादसंबन्धे दीप्तिविनाशादिधर्मद्वारक उपचारः संबन्धाय कल्पते । तेनायमर्थः सम्पद्यते । भृत्यादयः श्रियं समेधयन्ति, दुर्जना मृत्युमपि मारयन्ति । सा चेयमन्यरूढा क्रियाऽन्यत्रारोप्यत इत्युपचारवृत्तिरेव भवति । यदुक्तं—

कुमुदानि निमीलन्ति कमलान्युन्मिषन्ति च ।
इति नेत्रक्रियाध्यासाल्लब्धा तद्वाचिनी श्रुतिः ॥

एवं पसार्थे यः पीडामनुभवति .... ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥

इत्यादि च द्रष्टव्यम् । यद्येवं क्रियानिमित्तैषा कस्मान्न भवति ? क्रियाया एव द्रव्यजातिरूपेण विपरिणामात्, यथा—दैन्यमातेत्यादौ वृत्तिरूपेण । ननु च यथा गौरिव गौस्तथा समिध इव समिध इतीयमपि गौणी कस्मान्न भवति ? भवति यदि समिध इत्यनेन श्रिय इति नापेक्ष्यते श्रीवह्नेरिति वा वह्निशब्दप्रयोगो भवति । यथा—

पपसाअरूपसोघणसमओ अणंगगअकुंभेघणे ।

इति । एतेन दैन्यमाता दरिद्रता, ते मृत्योरपि मृत्यव इत्यादेरपि न गौणत्वमित्युक्तं भवति । आदिग्रहणान्नामसर्वनामादेरपि भेदाभेदाभ्यामुपचारे गौणव्यवहितार्थैव गौणी भवति । स भेदोपचारे नामाध्यारोपाद्यथा—

हे हस्त दक्षिण मृतस्य शिशोर्द्विजस्य जीवातवे विसृज शूद्रमुनौ कृपाणम् ।
रामस्य गात्रमसि निर्भरगर्भखिन्नसीताविवासनपटोः करुणा कुतस्ते ॥

यथा वा—

स्थानेऽवसीदसि रघूद्वह किं विधातस्त्वयात्त्वयेक्षितमलक्षणमङ्गकेषु ।
अद्यापि जीवसि दशानन हे हनूमन् कथं तवाभिमुखवर्तिरिपोः प्रतीक्षा ॥

अभेदोपचारेण सर्वनामाध्यारोपाद्यथा—

चन्द्रज्योत्स्नाविशदपुलिने सैकतेऽस्मिन्सरय्वा वादद्यूतं चिरतरमभूत्सिद्धयूनोः कयोश्चित् ।
एको वक्ति प्रथमनिहतं कैटभं कंसमन्यः सत्यं तत्त्वं कथय भवता को हतस्तत्र पूर्वम् ॥

यथा वा—

प्राप्तश्रीरेष कस्मात्पुनरपि मयि तन्मन्थखेदं विदध्या-
न्निद्रामप्यस्य पूर्वामनलसमनसो नैवसम्भावयामि ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सेतुं बध्नाति भूयः किमितिच * सकलद्वीपनाथानुयातः
त्वय्यायाते वितर्कानिति दधत इवाभाति कम्पः पयोधेः ॥

अत्राद्योदाहरणयो रामहनूमन्तौ नामशब्दाभ्यामतिनिष्करुणे परिभवासहिष्णौ च स्वमूर्तिभेदे संज्ञाविशेषणत्वेन रूढौ, तद्व्यवधानेन तद्विपरीतयोरुपचरितस्वमूर्तिभेदान्तरयोरारोपितावौपचारिकं विशेषणभावं भजेते इति गौणव्यवहितार्थोपचारनिमित्तोपचारनिमित्तेयं गौणी । यत्र तु न भेदोपचारस्तत्र व्यवधानाभावाद्गुणनिमित्तैव गौणी भवति, यथा— रामोऽस्मि सर्वसहे, तार्क्ष्यः सोऽपि समं निजेन विभुना जानाति मां रावणं॥ इति । कथं पुनः शब्दार्थयोरभेदेऽपि भेदव्यपदेशः । सहि राहोः शिरः गौर्गौः कामदुहेत्यादौ शब्दार्थभेद एव दृश्यते । उच्यते, अस्तितावदेतन्मुख्याभावे सति प्रयोजने निमित्ते च सत्युपचारः प्रवर्तते । स चाभिन्नानां भेदव्यपदेशहेतुः, भिन्नानां चाभेदव्यपदेशहेतुर्भवति । तत्राभिन्नानां भेदो यथा—

आत्मानमात्मना वेत्सि सृजस्यात्मानमात्मना ।
आत्मना कृतिना च त्वमात्मन्येव प्रलीयसे ॥

अत्र परमात्मव्यतिरिक्तवस्त्वन्तराभावात्कर्मादिकारकव्यतिरेकेण च ज्ञानादिक्रियानुपपत्तेरेक एव कर्तृकर्मकरणाधिकरणोपचारेण भिद्यते । सिद्धे च भेदे सादृश्यनिबन्धने मुख्यानामिवोपचरितानामप्युपमानोपमेयव्यवहारः प्रवर्तते । तद्यथा—

त्वन्मुखं त्वन्मुखमिव त्वद्दृशौ त्वद्दृशाविव । त्वन्मूर्तिरिव मूर्तिस्ते त्वमिव त्वं कृशोदरि ॥

वैसादृश्यनिबन्धनस्तु व्यतिरेको भवति । यथा—

नाम यस्याभिनन्दन्ति द्विषोऽपि स पुमान्पुमान् ।
रइकिरणाणुग्गाहिआइ होंति कमलाइ कमलाइं ।

ततश्च भिन्नार्थवत्सम्बन्धसम्बोधनविभक्त्यादेरुत्पत्तिर्यथा–रामस्य गात्रमसि, हे हनूमन्निति । एतेन मुख्यगौणयोरपि उपमारूपकादयो व्याख्याताः । यथा—

अयमालोहितच्छायो मदेन मुखचन्द्रमाः । सन्नद्धोदयरागस्य चन्द्रस्य प्रतिगर्जति ॥
चन्द्रमाः पीयते देवैर्मया त्वन्मुखचन्द्रमाः । असमग्रो ह्ययं शश्वदयमापूर्णमण्डलः ॥
अमृतात्मनि पद्मानि द्वेष्टरि स्निग्धतारके । मुखेन्दौ तव सत्यस्मिन्नितरेण किमिन्दुना ॥
न मीलयति पद्मानि न नभो व्यवगाहते । त्वन्मुखेन्दुर्ममासूनां हरणायैव यस्यति ॥

* "चाऽसौ कथमिव" इति पाठान्तरम् .

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भिन्नानामभेदोपचारो यथोत्तरोदाहरणयोः, तत्र हि प्रतीयमानाभिधीयमानतुल्यगुणोपमानविशेषणमनेकं सर्वनामोपमानव्यवधानेनोपमेये प्रयुक्तमभेदोपचारेणोत्कर्षमारोपयति । नन्वियमन्योक्तिः समासोक्तिरुभयोक्तिर्वा कस्मान्नभवति ? तथाहि ; प्रतीयमानाभिधीयमानोपमेयगुणविभूतयः सर्वनामाध्यासेऽप्यन्योक्तिसमासोक्त्युभयोक्तयो दृश्यन्ते । तत्रान्योक्तिर्यथा—

हा सौरभं क तत्ते क्कनु ते सन्तापहारि हा शैत्यम् ।
अङ्गारकारहस्ते चन्दन पतितोऽसि धिग्दैवम् ॥

समासोक्तिर्यथा—

मुग्धामजातरजसं कलिकामकाले बालां कदर्थयसि किं नवमालिकायाः ।
अन्यासु तावदुपमर्दसहासु भृङ्ग लोलं विनोदय मनः सुमनोलतासु ॥

उभयोक्तिर्यथा—

केनासीनः सुखमकरुणेनाकरादुद्धृतस्त्वं विक्रेतुं वात्वमभिलषितः केन देशान्तरेऽस्मिन् ।
यस्मिन्वित्तव्ययभरसहो ग्राहकस्तावदास्तां नास्ति भ्रातर्मरतकमणे त्वत्परीक्षाक्षमोऽपि ॥

उच्यते, यत्रोपमानमेव प्रयुक्तं प्रतीयमानाभिधीयमानगुणमुपमेयं गमयति, तत्रैवान्योक्त्यादयो भवन्ति । इहतु नोपमानं प्रयुज्यते । किं तर्हि ? तद्विशेषणं सर्वनाम, तेन प्रथमोदाहरणे नान्योक्तिर्द्वितीयोदाहरणे तु न समासोक्तिरिति । यद्येवमध्यासात्मिका तद्भावापत्तिः कस्मान्न भवति ? यथैष बालाबाहुमूले बालचन्द्रमाः, यथा वा—किमहो नृपाः सममभीभिरुपपतिसुतैर्न पञ्चभिः, वध्यमभिहथ, भुजिष्यममुं सहचानया स्थविरराजकन्ययेति । उच्यते, नात्र सर्वनाम्नामेव प्रयोगः । किं तर्हि ? विशेष्याणामपीति युज्यते तद्भावापत्तिः । चन्द्रज्योत्स्नेत्यादौ तु सर्वनामाध्यासे समाधिलक्षणयोगादुपचारगौण्यैवैषा भवति, यथा च धर्मिणोऽप्यध्यासे समाधिरुपपद्यते तथाग्रतो वक्ष्याम इति ।

लक्षणा द्विविधा—लक्षणा लक्षितलक्षणा च । तयोर्यस्यामुपात्तशब्दस्यार्थस्य क्रियासिद्धौ साधनत्वायोगात् स्वार्थोऽविनाभूतमर्थान्तरं व्यवहितमेव लक्षयति सा लक्षणा, तद्व्यतिरिक्ता तु वक्ष्यमाणानेकरूपा लक्षितलक्षणेति । तत्र लक्षणा षोढा, सामीप्यलक्षणा, साहचर्यलक्षणा, सहचरितलक्षणा, हेतुलक्षणा, तादर्थ्यलक्षणा, परिमाणलक्षणा च । तत्र गङ्गायां घोषः प्रतिवसति, मञ्चाः क्रोशन्तीत्यादिषु स्वार्थाविनाभूतसमीपार्थान्तरप्रतीतिहेतुः सामीप्यलक्षणा । यथा—

यत्तालीदलपाकपाण्डुवदनं ।
अभिनवकरिदन्तच्छेदकान्तःकपोलः । इति ॥

अत्र पाकच्छेदयोः क्रियात्वेनामूर्तत्वात्पाण्डुत्वं कान्तत्वं चासम्भवत् समीपस्थं पक्वतालीपत्रं सद्यश्छिन्नं च हस्तिदन्तं लक्षयति । छत्रिणो गच्छन्ति, कुन्तान्प्रवेशयेत्यादिषु स्वार्थाविनाभूतसाहचर्योपलब्धार्थान्तरप्रतीतिहेतुः साहचर्यलक्षणा । यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यं सर्वशैलाः परिकल्प्य वत्सं मेरौ स्थिते दोग्धरि दोहदक्षे ।
भास्वन्ति रत्नानि महौषधीश्च पृथूपदिष्टां दुदुहुर्धरित्रीम् ॥

अत्र दोग्धृसाहचर्याच्छैलेष्वपि दुदुहुरिति प्रयुज्यते । यथा वा—

पदेपदे कूबरिणः शतंशतं शतंशतं मत्तगजान्रथेरथे ।
न्यवेशयद्वाजिशतं गजेगजे हयेहये कुन्तशतं शतक्रतुः ॥

यत्रोक्तधर्मसहचरितोऽन्योऽपि धर्मो लक्ष्यते सा सहचरितलक्षणा । यथा—

मधुपृषतपिङ्गाः पयोबिन्दवः ।
कनकफलकस्फारजघना ॥ इति ।

अत्र पिङ्गत्वस्फारत्वसहकृतास्तदाश्रयाकारकान्त्यादयो लक्ष्यन्ते । अन्नं वै प्राणाः, आयुर्घृतमित्यादिषु स्वार्थाविनाभूतनिमित्तकारणार्थान्तरप्रतीतिहेतुर्हेतुलक्षणा । यथा—त्वं जीवितं त्वमसि मे हृदयं द्वितीयम्, इति । अत्र जीवितशब्देन हृदयशब्देन च जीवितचैतन्यहेतुः प्रियतमोच्यते । इन्द्रस्थूणामल्लिकाप्रदीपा इत्यादिषु तदर्थप्रतीतिहेतुस्तादर्थ्यलक्षणा । यथा—

आरूढो मलयाचलं जलनिधेः पारं परं नाटय
न्नौदण्डं नृपसिंहसिंहलपतेरुच्छेत्तुमच्छं यशः ॥ इति ।

अत्र दण्डशब्देन दण्डनाप्रहितो लोक उच्यते । प्रस्थं पलं क्रोश इत्यादौ परिमाणसाधनभूतार्थान्तरप्रतीतिहेतुः परिमाणलक्षणा । यथा—

यस्मादनर्घाणि हृतान्यनूनैः प्रस्थैर्मुहुर्भूरिभिरुच्छिखानि ।
आढ्यादिव प्राहुणिकादजस्रं जग्राह रत्नान्यमितानि लोकः ॥

अत्र प्रस्थशब्देन प्रस्थपरिमाणसाधनं मानभाण्डं काष्ठादिमयमुच्यते ।

लक्षितलक्षणापि षोढैव—रूढलक्षणा, प्रतीकलक्षणा, विवक्षितलक्षणा, विरुद्धलक्षणा, तदन्यलक्षणा, प्रकीर्णलक्षणा च । तासु यस्यां यथाकथंचिद्व्युत्पत्त्या लक्षितेनाभिधानेन रूढलक्षण एवार्थो लक्ष्यते सा रूढलक्षणा । दुरोदर श्चक्रवाको द्विरेफो भ्रमर इति । यथा—

मधु द्विरेफः कुसुमैकपात्रे पपौ प्रियां स्वामनुवर्तमानः । इति ।

अत्र दुरोदरत्वं द्विरेफत्वं च कुररेऽपि सम्भवति, नचात्र रूढा लक्षणेति । नायं लक्ष्यते । यत्र प्रतीकेनाभिधानैकदेशेन समुदायो लक्षित एव लक्ष्यते न यः कश्चित् सा प्रतीकलक्षणा । यथा—भीमो भीमपराक्रमः, सच्चा अपि होइ अइअदंसणतुरीआ । अत्र स्वेन भीमशब्दो भीमसत्यशब्दप्रतीकश्रवणात् भीमसेनः, सत्यभामेत्यभिधानयोः पूर्वलक्षितयोर्लक्षणा लक्ष्यते । न हि भवति

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

ज्येष्ठा ज्येष्ठेति, आर्द्रावार्द्रेति। यत्र यथाकथंचिच्छब्दप्रयोगे विवक्षितमेव लक्ष्यानुसारतो लक्ष्यते सा विवक्षितलक्षणा। यथा—

मनसिजजैत्ररथं विलोचनार्धं।
चकितहरिणीहारिनेत्रत्रिभागः। इति॥

अत्र नार्धशब्दस्य त्रिभागशब्दस्य अर्थः, किन्तु ताभ्यामसमग्रालोकनं लक्ष्यते। नहि भवति नेत्रचतुर्भागो नेत्रषड्भागो वेति। पदं केवलमन्यसन्निधेर्वा यत्राभिहितविरुद्धं लक्षितमेवार्थं लक्षयति सा विरुद्धलक्षणा। यथा विष्टिर्भद्रा, अङ्गारको मङ्गलः, पुण्यवत्यहं यस्यास्त्वमेवंविधः पतिरसीति। अत्र भद्रामङ्गलशब्दौ पुण्यवच्छब्दश्च अभद्रमङ्गलत्वे अपुण्यवत्त्वं च लक्षितमेव लक्षयन्ति। यथा वा— रत्नावल्यां राजा विदूषकमाह—महाब्राह्मणस्त्वमसि, कोऽन्य एवमृचामभिज्ञ इति। अत्र महाब्राह्मण इत्यनेन ऋचामभिज्ञ इत्यनेन च वृषलादप्यधमत्वं वैधेयत्वंच लक्ष्यते। यथाच मालतीमाधवे, लवङ्गिका मदयन्तिकामभिधत्ते। कहं णाम णववहूवीसंभणोपाअजाणअं लडहविअड्डमहुरभासणं अरोसणं च भादरं दे भत्तारं समासादिअ, पिअसही दुम्मणइस्सदि। अत्र नववधूविस्रम्भणोपायज्ञत्वादयस्तद्विरुद्धमर्थं लक्षयन्ति। एवमन्येऽपि यथा—

इदमम्लानमानाया लग्नं स्तनतटे तव। छाद्यतामुत्तरीयेण नवं नखपदं सखि॥

कुविआओपसण्णाओ ओरुण्णमुहिओ विहसमाणीओ।
जहगहिआ नहहिअअं हरंति उच्छण्णमहिलाओ॥
वयं तथा नाम यथात्थ किं वदाम्ययन्त्वकस्माद्विकलः कथान्तरे।
कदम्बगोलाकृतिमाश्रितः कथं विशुद्धमुग्धः कुलकन्यकाजनः॥

एतेष्वम्लानमानशब्देन मानभङ्गः, उत्सन्नशब्देनानुच्छेदाशीः, विशुद्धमुग्धशब्देनाविशुद्धिरमौग्ध्यं च लक्ष्यते। यत्राभिहितशब्दार्थतिरस्कारेणार्थान्तरं लक्ष्यते सा तदन्यलक्षणा। यथा—

सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः। शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम्॥

अत्र न सुवर्णशब्दार्थौ, नापि पुष्पशब्दार्थः। किन्तु सुवर्णशब्देन सर्वपुरुषार्थमूलं हिरण्यं, पुष्पशब्देन च प्रसवार्थो लक्ष्यते। ताभ्यां च लक्षिताभ्यां व्यवसायिनां पुरुषविशेषाणां वसुमती सर्वान्कामान् प्रसूत इति। उक्ताभ्योऽन्या प्रकीर्णलक्षणा। यथा—

दशरश्मिशतोपमद्युतिं यशसा दिक्षु दशस्वपि श्रुतम्।
दशपूर्वरथं यमाख्यया दशकण्ठारिगुरुं विदुर्बुधाः॥
हिरण्यपूर्वं कशिपुं प्रचक्षते।
तुरङ्गकान्तामुखहव्यवाहन्[illegible] जलप्रभासम्॥ इति।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अन्ये पुनर्लक्षितलक्षणामन्यथा व्याचक्षते । लक्षणयोपचरितवृत्त्या गौण्याभिहितार्थेन यत्रार्थान्तरं लक्ष्यते सा लक्षितलक्षणेति । यथा—रथावयवायुधः, पङ्क्तिरथः, रथाङ्गनामेति, अत्र रथावयव-शब्देन चक्रं लक्ष्यते । तेन तदाकृतिः तन्नामाऽऽयुधविशेषः, पङ्क्तिरित्यनेन दशाक्षरं छन्दो लक्ष्यते । तेन दशशब्दः, ताभ्यां चायुधसन्निधेश्चक्रायुधः, दशरथः, इति देवविशेषराजविशेषौ लक्ष्येते । रथाङ्गमित्यनेन रथैकदेशो लक्ष्यते; तेन चक्रशब्दः । नामेत्यनेन परिभाषणं लक्ष्यमाणार्थः, ताभ्यामन्योन्यसन्निधेश्चक्रवाक इति पक्षिविशेषो लक्ष्यत इति । अस्याश्च प्रबन्धेषु भूयसा प्रयोगः । तद्यथा—

सूईवेहेमुसलं विच्छुहमाणेन उद्धलोएण । एकग्गामेपिविओ इमेहिं अच्छिहिविअणदिट्ठो ॥

अत्र सूचीवेधे मुसलप्रवेशो न सम्भवति, जनस्तु तमपि करोतीत्यनेन मुख्यया लक्षितेन तस्या-सम्भाव्यमानार्थवादिता लक्ष्यते । यथा—

चुंबिज्जइ सअहुत्तं अपवाहिज्जइ सहस्ससअहुंत्तं ।
रमिअपुणो विरमिज्जइ पिएजणे णत्थि पुणरुत्तं ॥

अत्र पुनरुक्तशब्दोऽप्यर्थवान् पुनः प्रयोगविशेषे निरूढशक्तिः क्रिया पुनः करणसामान्यं लक्षय . . . विपक्षिचुम्बना . . . णविशेषवैयर्थ्याय लक्षयति । एवं—

दूइ तुमं विअणिउणा कक्कसमहुआइ जाणसेवोल्लुं ।
कंडुइअपंडरं जहणहोइ तहतं कुणिज्जासु ॥

अत्र कण्डूयितपाण्डरमित्यनेन पारुष्यं लक्ष्यते । तेन तु स्नेहक्षतिरिति । अपि च—

गअणं च मत्तमेहं धाराळुळिअज्जणाइ णवणाइ ।
णिरहंकारमिअंका हरंति नीलाओ विअ णिसाओ ॥

अत्र मत्तनिरहङ्कारशब्दावनिभृतत्वं च लक्षयन्तौ चेतनेषु रूढावचेतनेषु प्रयुज्यमानौ तयोरपि तथाविधार्थयोगं लक्षयतः । किञ्च—

अण्णं लडहत्तणअं अण्णच्चिअअंगवद्धणच्छाआ ।
सामासामण्णवआ पइस्सरेहच्चिहणहोइ ॥

अत्र रेखाशब्देन चित्रालेख्यं लक्ष्यते, न च विशिष्टं रूपनिर्माणमिति । अपरं,

अगणिअ नअणाआसा माळिषुळोइज्जतजंतको होसि मअणस्स ॥

अत्र मदनस्य को भवसीत्यनेन तत्सनाभित्वं लक्ष्यते । तेन च तदौपम्यमिति । तथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रतीच्छत्याशोकीं किसलयपरावृत्तिमधरः कपोलः पाण्डुत्वादवतरति तालीपरिणतिम् ।
परिम्लानप्रायामनुवदति दृष्टिः कमलिनीं नवीनस्तन्वङ्ग्या मनसिजविकारो विजयते ॥

अत्र प्रतीच्छत्यवतरत्यनुवदतीति चेतनधर्मैरचेतनप्रयुक्तैरुपलक्षितेषु धारणप्राप्त्यनु...... किसलयपरावृत्त्या श्वासधूसरत्वं लक्ष्यते । तेनापि तत्सामीप्यादशोककिसलयौपम्यमिति तालीपरिणत्या कमलिनीपरिम्लानतया च विरहकार्श्यं, तेन च स्नेहातिरेक इति । एवं—

परिम्लानं पीनस्तनजघनसङ्गादुभयतस्तनोर्मध्यस्यान्तः परिमिलनमप्राप्य हरितम् ।
इदं व्यस्तन्यासं श्लथभुजलताक्षेपवलनैः कृशाङ्ग्याः सन्तापं वदति बिसिनीपत्रशयनम् ॥

अत्र वदतीत्यनेनोपचारवृत्त्या ज्ञापयतीति, परिम्लानमित्यादिभिस्तद्धर्मैस्तस्यास्तनुसन्निवेशचारुत्वोत्कर्षो लक्ष्यते । अपि च—

निर्माल्यं नयनश्रियः कुवलयं वक्त्रस्य दासः शशी
कन्दर्पस्य धनुर्लता किमपरं द्वारि भ्रुवोर्धार्यते ॥ इति ॥

अत्र निर्माल्यदासशब्दाभ्यामुपचारवृत्त्या हीनत्वेन लक्षितेन नयनवक्त्रयोरुपमोत्कर्षो लक्ष्यते । कन्दर्पधनुर्लतायास्तु द्वारप्रवेशापाकरणोपलक्षणेन तयोरपि हीनत्वेन सुतरां ब्रूते । किञ्च—

यत्तालीदलपाकपाण्डु वदनं यद्दुर्दिनं नेत्रयोः
यच्चानर्तितकेलि पङ्कजदलं श्वासाः प्रसर्पन्ति च ॥

अत्र दुर्दिनं नेत्रयोरित्यत्र दुर्दिनशतवृष्टिमेघाहतशोभेऽह्नि रूढाभिधानशक्तिर्नेत्रयोरसम्भाव्यमानत्वेन स्वार्थाविनाभूतं पयःप्रवाहं लक्षयन्नश्रुप्रवाहं लक्षयति । अन्यच्च—

अतिक्रान्तसुखाः कालाः प्रत्युपस्थितदारुणाः ।
श्वश्वत्पापीयदिवसाः पृथ्वी* च गतयौवना ॥

अत्रातिक्रान्तसुखत्वादिति चेतनधर्मैरचेतनेषु कालादिष्वारोपितैस्तेषु तदसम्भवेन तदविनाभूतास्तद्गताः प्राण्यादयो लक्ष्यन्ते । तेनात्मनिर्वेद इति । अपरश्च—

इदमन्धंतमः कृत्स्नं जायेत भुवनत्रयम् । निश्वासान्ध इवादर्शश्चन्द्रमा न प्रकाशते ॥

अत्र यथा अन्धे रूपविशेषाभिव्यक्तिर्न सम्भाव्यते एवं तमस्यपि यत्र नीरन्ध्रे रूपविशेषाभिव्यक्तेरसम्भवस्तदन्धंतम इत्युच्यते, तथा यथान्धो रूपग्रहणासमर्थ एवमादर्शोऽपि । यो रूपग्रहणासमर्थः

---

* अत्र 'श्वश्वःपा' — 'पृथिवी' — इति पाठान्तरम् ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सोऽन्ध इत्युच्यते। तत्रोपचरितवृत्तौ योऽन्धवन्न पश्यति स एवान्ध इत्युच्यते। इह यत्र किञ्चिन्न दृश्यते तत्रापि अन्धशब्दोपलक्षितलक्षणया प्रवर्तत इति। एवमन्यदपि यथा—

स्वल्पै रसावपि न दह्यत एव काष्ठैः।

वअस्स तुमंपि थेव चंदणरसेण सामा . . . ज्जसि॥

अत्र पूर्वस्मिन्यथाश्रुतार्थो वर्णनीये सम्भवः। यथा विक्रमादित्यस्तथायमपि महापुरुषविशेष इति लक्षयति। तेन च स्वल्पैर्वचोभिरनाख्येयं माहात्म्यादिगुणगौरवमुभयोरपि लक्षयति। उत्तरत्र तु स एवार्थो लक्षणया वैपरीत्येनाख्यायत इत्येवमयमनन्तो लक्षितलक्षणव्यापारः प्रबन्धेषु लक्षणीयः। यथा—

एकाहिअद्धिहि सावणुअ नहि भद्दवओ। माहवुमहिअलपत्थ . . उत्थवेसरओ॥

अंगहिंगिहसुगच्छडितिलवणेमग्गरूमुद्दहे। मुमुहषंकअसरे आवासिओसिसिरु॥

नीहारजालमलिनः पुनरुक्तसान्द्राः कुर्वन्वधूजनविलोचनपक्ष्ममालाः॥

क्षुण्णः क्षणं यदुबलैर्दिवमातितांसुःपांसुर्दिशां मुखमतुत्थयदुत्थितोऽद्रेः॥

शब्देष्वर्थेऽभिधानदानाभिप्रायो विवक्षा। यदाह—वक्तुर्विवक्षितपूर्विका शब्दप्रवृत्तिरिति। त्रिधा हि वाङ्मयः, अपौरुषेयमार्षं पौरुषेयं च। तत्र शब्दप्रधानमपौरुषेयं मन्त्रो ब्राह्मणं च। तत्र वक्तुरभावाद्विवक्षा नोपपद्यते। अर्थप्रधानमार्षं स्मृतिरितिहासश्च। तत्र विवक्षामात्रं प्रवर्तते—

लौकिकानां हि साधूनां वागर्थमनुवर्तते। ऋषीणां पुनराद्यानां वाचमर्थोऽनुवर्तते* ॥ इति॥

प्रधानं पौरुषेयं च तदुभयमप्यभिनिविष्टबुद्धीनां विशिष्टविवक्षाभ्यो जायते। तद्यथा—विवक्षातः कारकाणि भवन्ति। अक्षान्दीव्यति अक्षैर्दीव्यति अक्षेषु दीव्यत इति। वलाहको विद्योतते, वलाहकस्य विद्योतत इति—

शक्तिमात्रा समूहस्य विश्वस्यानेकधर्मणः। सर्वदा सर्वथाभावात्कचित्किञ्चिद्विवक्ष्यते॥

कारकेष्वप्यकारकविवक्षा यथा—मातुः स्मरति, सर्पिषो जानीते, न माषाणामश्नीयात्।

नैते सुखस्य जानन्ति येन वत्स्यन्ति नन्दने॥ इति।

अत्र कर्मादिषु शेषत्वेन विवक्षितेषु सम्बन्धमात्रे षष्ठी न कर्मकरणकर्तृष्वपि कारकविभक्तिरिति। अकारकेषु कारकविवक्षा यथा—भवति पचति, भवति पश्यति, भवत्यपाक्षीत्। अस्तिगच्छामो वयमिति। तथा स्मरसि काश्मीरेषु वत्स्यामः। एहि मन्ये न यास्यसि, पश्य मृगो धावति, इह पश्यामः, कर्मणि द्विवचनबहुवचनान्युदाह्रियन्त इति। क्रियायामपि कारकविवक्षा यथा—चोरस्य रुजति, चोरस्यामयति, चोरं ज्वरयति, चोरं संतापयतीति। अत्र रुजार्थानां

* 'धावति' इति पाठान्तरम्.

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भाववचनानामज्वरिसन्ताप्योरिति भावस्यैव कर्तृत्वम् । अक्रियायां क्रियाविवक्षा यथा--नीलति वनम्, श्वेतते प्रासादः ॥

विषवृक्षोऽपि संवर्ध्य स्वयं छेत्तुमसाम्प्रतम् । इति ॥

क्रियायां क्रियान्तरविवक्षा यथा—एषितुमिच्छति, कमितुं कामयते, भवेदपि भवेत्, स्यादपि स्यादिति ।

कारकेऽपि क्रियाविवक्षा यथा—द्रष्टुं चक्षुः, योद्धुं धनुः, गन्तुमनाः गन्तुकाम इति । अत्र क्रियायां क्रियार्थायामुपपदे तुमुन् भावउक्तः। स चक्षुरादीनां क्रियाविवक्षामन्तरेण न सिध्यतीति। असम्बन्धे सम्बन्धविवक्षा यथा—

साटोपमुर्वीमनिशं नदन्तो यैः प्लावयिष्यन्ति समन्ततोऽमी ।
तान्येकदेशान्निभृतं पयोधेरम्भांसि मेघान्पिबतो ददर्श ॥

अचेतनेषु चैतन्यविवक्षा यथा—नदीकूलं पिपतिषति, अश्मा लुनोधिमिच्छति। ... विवक्षा यथा—अश्वारोहः पिपतिषति । प्रधाने गुणविवक्षा यथा—बलाकायाः शौक्ल्यम्, काकस्य कार्ष्ण्यमिति । गुणे प्रधानविवक्षा यथा—मधुरो रस आप्याययति, आम्लो दीपयतीति । अवयवे समुदायविवक्षा यथा—ग्रामो दग्धः, पटो दग्धः, अक्ष्णा काणः, पादेन खञ्ज इति । समुदाये अवयवविवक्षा यथा—दोर्दण्डचण्डिममात्रारोपणीये धनुषि सति पदातिलवे लक्ष्मणेन प्रभुरार्यः मामपि तस्यैव सुगृहीतनाम्नो देवस्य भृत्यपरमाणुं विकुक्षिनामानमवधारयतु भवतीति । अभेदे भेदविवक्षा यथा—पटुभाषी भवान् पटुरासीत् । पटुतरः एषः । अन्य एवासीत्सम्पन्नः, राहोः शिरः, शिलापुत्रकस्य शरीरमिति । भेदेऽप्यभेदविवक्षा यथा—तानेव शालीनश्नीमो ये मधुरायां, तानेव शाटकानाच्छादयामो ये पाठलिपुत्र इति । असतो विवक्षा यथा—समुद्रः कुण्डिका, विन्ध्यो वर्धितकमिति । सतोऽप्यविवक्षा यथा—अनुदरा कन्या, अलोमिका एडकेति । सदसतोर्विवक्षा यथा—तदिदमपमेघोदयं वर्षं, सोच्छ्वासं मरणमिति । सदसतोरविवक्षा यथा—शैलाधिराजतनया न ययौ न तस्थाविति । स्तुत्या निन्दाविवक्षा यथा—

गुणानामेव दौरात्म्याद्धुरि धुर्यो नियुज्यते । असञ्जातकिणस्कन्धः सुखंस्वपितिगौर्गली ॥

निन्दया स्तुतिविवक्षा यथा—

चपलो निर्दयश्चासौ जनः किं तेन मे सखि । आगःप्रमार्जनायैव चाटवो येन शिक्षिताः ॥

विधिना निषेधविवक्षा यथा—

गच्छ गच्छसि चेत्कान्त पन्थानः सन्तु ते शिवाः ।
ममापि जन्म तत्रैव भूयाद्यत्र गतो भवान् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

निषेधेन विधिविवक्षा यथा—

मागच्छ प्रमदाप्रिय प्रियशतैर्भूयस्त्वमुक्तो मया
बाला प्राङ्गणमागतेन भवता प्राप्नोत्यवस्थान्तरम् ।
किञ्चास्याः कुचभारपीडनपरैर्यत्नप्रबन्धैरपि
त्रुट्यत्कञ्चुकजालकैरनुदिनं निस्सूत्रमस्सद्गृहम् ॥

एवमियमनेकधा विवक्षा विप्रथते तदेष लौकिकवादः—

*अस्मिन्नपारे संसारे कविरेकः प्रजापतिः । यथास्मै रोचते विश्वं तथेदं परिवर्तते ॥

अपि च—

ठिअमट्ठिअंवदीसइ अ ठिअंपिजहट्ठिअंवपडिभाइ ।
जहसंट्ठिअंबवजसइ सुकईणइमाओपअईओ ॥

किञ्च—

क्वचित्स्वल्पेऽप्यर्थे प्रचुरवचनैरेव रचना क्वचिद्वस्तु स्फारं कतिपयपदैरर्पितरसम् ।
यथा वाच्यं शब्दाः क्वचिदपि तुलायामिव धृता स्त्रिभिः कल्पैरेवं कविवृषभसन्दर्भनियमः ॥

विवक्षा लोकव्यवहारे काव्यव्यवहारे च सुमतिभिरुन्नीयमाना त्रिधा विख्यायते, काक्वादिव्यङ्ग्या, प्रकरणादिव्यङ्ग्या, अभिनयादिव्यङ्ग्या च । तत्र काकुः स्वरो विच्छेद इति काक्वादयः । तेषु—

भिन्नकण्ठध्वनिर्धीरैः काकुरित्यभिधीयते ।

सा त्रिधा—नियतप्रतिबन्धा, अनियतप्रतिबन्धा, अप्रतिबन्धा च । तासु नियतप्रतिबन्धा द्विधा, साकाङ्क्षा निराकाङ्क्षा च । तयोर्वाक्यान्तरापेक्षिणी साकाङ्क्षा । सा त्रिधा—आक्षेपगर्भा, प्रश्नगर्भा, वितर्कगर्भा च । वाक्यान्तरभाविनी निराकाङ्क्षा । सापि त्रिधा, विधिरूपा उत्तररूपा निर्णयरूपा च । तदेव वाक्यं काकुविशेषेण साकाङ्क्षं, तदेव काक्वन्तरेण निराकाङ्क्षम् । तत्राक्षेपगर्भा यथा—

यदि मे वल्लभा दूती तदाहमपि वल्लभा । यदि तस्याः प्रिया वाचस्तन्ममापि प्रियप्रिया ॥

इयमेव निर्देष्टुर्विधिरूपा । प्रश्नगर्भा यथा—

गतः स कालो यत्रासीन्मुक्तानां जन्मवल्लिषु ।
वर्तन्ते साम्प्रतं तासां हेतवः शुक्तिसम्पुटाः ॥

इयमेवोपदेष्टुरुत्तररूपा । वितर्कगर्भा यथा—

---

* ' अपारे काव्यसंसारे ' इति पाठान्तरम् .

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

नवजलधरः सन्नद्धोऽयं न धृष्टनिशाचरः सुरधनुरिदं दूराकृष्टं न तस्य शरासनम् ।
अयमपि पटुर्धारासारो न बाणपरम्परा कनकनिकषस्निग्धा विद्युत्प्रिया न ममोर्वशी ॥

इयमेवोपदेष्टुर्निर्णयरूपा । एवमन्या अपि—

सर्वक्षितिभृतां नाथ दृष्टा सर्वाङ्गसुन्दरी । रामा रम्ये वनान्तेऽस्मिन्मया विरहिता त्वया ॥

इत्यादयो द्रष्टव्याः । ता इमास्तिस्रोऽपि नियतप्रतिबन्धाः । अनियतप्रतिबन्धाः पुनरनन्ताः । तास्व-भ्युपगमानुनयकाकुर्यथा—

युष्मच्छासनलङ्घनांहसि मया मग्नेन नाम स्थितं
प्राप्तानामविगर्हणां स्थितिमतां मध्येऽनुजानामपि ।
क्रोधोल्लासितशोणितारुणगदस्योच्छिन्दतः कौरवा-
नद्यैकं दिवसं ममासि न गुरुर्नाहं विधेयस्तव ॥

अभ्यनुज्ञोपहासकाकुर्यथा—

मथ्नामि कौरवशतं समरे न कोपाद्दुश्शासनस्य रुधिरं न पिबाम्युरस्तः ।
सञ्चूर्णयामि गदया न सुयोधनोरू सन्धिं करोतु भवतां नृपतिः पणेन ॥

विषान्नाद्याक्षेपकाकुर्यथा—

लाक्षागृहानलविषान्नसभाप्रवेशैः प्राणेषु वित्तनिचयेषु च नः प्रहृत्य ।
आकृष्य पाण्डववधूपरिधानकेशान् स्वस्था भवन्तु मयि जीवति धार्तराष्ट्राः ॥

एवमन्या अपि—

शल्यमपि स्फुरदन्तं सोढुं शक्येत हालहलदिग्धम् ।
धीरैर्न पुनरकारणकुपितखलालीकदुर्वचनम् ॥

इत्यादयो द्रष्टव्याः ॥ अप्रतिबन्धा तु एकगुणा द्विगुणा त्रिगुणा च । तत्रैकगुणा यथा—

भ्रुकुटिरारचिता गतमग्रतो हृतमथाननमुक्तमसाधु वा ।
इयमपि प्रभुता क्रियते बलादकुपितोपि हि यत्कुपितो जनः ॥

द्विगुणा यथा—

किं किरातेन यच्चक्रे समाकृष्य शिलीमुखान् ।
शिलीमुखान् समाकृष्य किं किरातः करोति तत् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

त्रिगुणा यथा—

सेयं पश्यति नो कुरङ्गकवधूत्रस्तेयमुद्वीक्षते
तस्याः पाणिरयं न मारुतचलः पत्राकृतिः पल्लवः ।
तारं रोदिति सैव नैष मरुता वेणुः समापूर्यते
सेयं मामभिभाषते प्रियतमा नो कोकिलः कूजति ॥

चतुर्गुणा खल्वपि यथा—

उच्यतां स वचनीयमशेषं नेश्वरे परुषता सखि साध्वी ।
आनयैनमनुनीय कथं वा विप्रियाणि जनयन्ननुनेयः ॥
किं गतेन नहि युक्तमुपैतुं कः प्रिये सुभगमानिनि मानः ।
योषितामिति कथासु समेतैः कामिभिर्बहुरसा धृतिरूहे ॥
संख्या वा नायिकाया वा सखीनायकयोरथ ।
भूयसीनां सखीनां वा वाचि काकुरिह स्थिता ॥

एवमन्या अपि कोऽहमित्यादयो द्रष्टव्याः । स्वरास्त्रिधा—प्लुतादयः, उदात्तादयः, प्रगृह्यादयश्च । तेषु प्लुतादयो यथा—

सुभ्रु त्वं कुपितेत्यपास्तमशनं त्यक्ताः कथा योषितां
दूरादेव विवर्जिताः सुरभयः स्रग्गन्धधूपादयः ।
कोपं रागिणि मुञ्च मय्यवनते दृष्टे प्रसीदाधुना
सत्यं त्वद्विरहाद्भवन्ति दयिते सर्वा ममान्धा दिशः ॥

तदेतत्प्रियतमाप्रसादनपरमपि वाक्यं दृष्टे इत्यत्र सम्बुद्धौ प्लुतस्वरकरणादुत्कुपितदृष्टिप्रसादनपरं सम्पद्यते । आदिग्रहणेन ह्रस्वदीर्घानुनासिकाः सङ्गृह्यन्ते । तत्र हि ह्रस्वस्वरकरणादर्थभेदो यथा—अश्ववदिति सम्बोधनं प्रतीयते । दीर्घकरणादर्थभेदो यथा—विश्वामित्रो विश्वानर इति ऋषिः संज्ञा च प्रतीयते । अनुनासिककरणादर्थभेदो यथा—गम्भीरआँ अपः; आङोऽनुनासिकश्छन्दसीति ईषदादिरर्थः प्रतीयते, न स्थाणुः । दिनं यथा—

आ ज्ञातं स जटायुरेष जरसा क्लिष्टो वधं वाञ्छति ।

उदात्तादयो यथा–कलो रवोऽस्येति कलरवः, एकः पुत्रोऽस्येत्येकपुत्र इति । समासे बहुव्रीहिस्वरो भवति, स च पूर्वपदस्यान्तोदात्तः । कलश्चासौ रवश्च एकश्चासौ पुत्रश्चेति समासे कर्मधारयस्वरो

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भवति। स च समासस्येति समासस्यान्तोदात्तो भवति। ताभ्यां चान्यपदार्थ उत्तरपदार्थश्च प्रतीयते। तदुक्तम्—

संशयाय दधतोः सरूपतां दूरभिन्नफलयोः क्रियां प्रति।
शब्दशासनविदः समासयोर्विग्रहं व्यवससुः स्वरेण ते॥

आदिग्रहणेनानुदात्तस्वरितैकश्रुतयः सङ्गृह्यन्ते। तत्रानुदात्तादर्थभेदो यथा—पूर्वोक्तयोरेवोदाहरणयोरन्यपदार्थः प्रतीयते, नचोत्तरपदार्थ इति। स्वरितादर्थभेदो यथा—भ्रातृव्य इति भ्रातुरपत्यं प्रतीयते, न सपत्नः। एकश्रुतेरर्थभेदो यथा—आगच्छ भो माणवकदेवदत्ता[3]। अग्निर्मूर्धा दिवः ककुत्पतिः पृथिव्या अयं, अपां रेतांसि जिन्वतो . . . पुत्रैक। आश्रुतेर्यथा— . . . दूरादाह्वानयज्ञक . . . सन्धीयते। तत्स्वरोऽपि तात्स्थ्यात् प्रगृह्य इत्युच्यते। ततोऽर्थभेदो यथा—आलीक आगच्छामि तामित इति सखीभ्यामिवागन्तव्यमित्यर्थः प्रतीयते। नागन्तूनां पङ्क्तिरस्मरादिति, आदिग्रहणेन सन्धेयसंवृता वृद्धाः सङ्गृह्यन्ते। तत्र सन्धेयादर्थभेदो यथा—आङ्गिरस इति। विच्छेदस्त्रिधा—पदविच्छेदो वाक्यविच्छेदो यतिविच्छेदश्च। तेषु पदविच्छेदश्चतुर्धा, शृङ्खलाभङ्गः, परिवर्तकः, चूर्णकमिति। तेषु शृङ्खला यथा—कान्तारतरुतलासितमृगयुवरचितान्तराहरत्यटवी, इति। अत्र यदा कान्तारः तरुतलः आन्तरा इति पदच्छेदस्तदा प्रियसम्भोगमणितहर्षितव्याधप्रधानव्याप्तामध्ये इति। सेयं शृङ्खलेवान्योन्यसङ्कलाच्छृङ्खला। भङ्गो यथा—जाय . . . . . वाक्यं निन्दार्थ क्रियते सेयं पदद्वैधीभावो भङ्गः। परिवर्तको यथा—कलिकामधुगर्हणेत्यविकृतमेव विच्छिद्यते। कुटमलमकरन्दनिष्यन्देत्यर्थप्रतीतिः। यदातु कलिकामधुक् अर्हणेति तदा पूजनैव कलिकाले कामधेनुरिति। सोऽयं गकारककारयोः परिवर्तने परिवर्तकः। चूर्णकं यथा—पश्य सलिलं पयोधेर्दूरसमुन्मुक्तशुक्तिमीनाङ्कान्तम्। मत्स्यानां वल्लभं पयोधेर्जलमवलोकयेत्यर्थः। यदा तु दूरसं उन्मुक्तशुक्तिमीनाङ्कान्तमिति, तदा दुःखेन रसनीयं उद्भ्रान्तमौक्तिकाधारं मत्स्यचिह्नितपर्यन्तं जलमवलोकयेति। अत्र शुक्तीत्यस्य संयोगाक्षरस्य दूरसमित्यत्र रेफस्य च चूर्णनिमित्तं चूर्णकं। वाक्यविच्छेदोऽपि चतुर्धा—वाक्यसम्भेदो, वाक्यान्यथात्वं, वाक्यासमाप्तिः, वाक्यानुच्चारणमिति, तेषु वाक्यसम्भेदो यथा—

दिङ्मातङ्गघटाविभक्तचतुराघाटा मही साध्यते
सिद्धा सापि वदन्त एव हि वयं रोमाञ्चिताः पश्यत।
विप्राय प्रतिपाद्यते किमपरं रामाय तस्मै नमो
यस्मादाविरभूत्कथाद्भुतमिदं यत्रैव चास्तं गतम्॥

अत्र वदन्त एव हि वयं रोमाञ्चिताः पश्यतेति वाक्यसंभेदो वक्तुर्भावकत्वेन गुणविशेषविज्ञानातिशयप्रकाशनं प्रतिपाद्यते। वाक्यान्यथात्वं यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रकृतिरेव सर्वानर्थानभिदधाना अधुना इयान् अस्यापत्यं इरिति प्रत्यय एव वा सर्वार्थाभिधायी, हैयङ्गवीनं, श्रोत्रियः, क्षेत्रियः, इत्युभयमुभयार्थाभिधायीति । अतः किं न साधीयोऽर्थवत्ता सिद्धा भवति ? यदाहि प्रकृतिरेव स्वार्थादिषु वर्तते प्रत्ययो वा तदा सुतरामर्थवत्ता सिध्यति । न ब्रूमोऽर्थवत्ता न सिध्यति । तौ त्वन्वयव्यतिरेकौ नावतिष्ठेते । ततश्च कुत एतत्स्यादयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति ? न पुनः प्रकृतेरेवोभावर्थौ प्रत्ययस्योभयस्य वेति सामान्यशब्दा एते । एवं स्युः सामान्यशब्दाश्च नान्तरेण विशेषं प्रकरणं वा विशेषेऽवतिष्ठन्ते, यतस्तु खलु नियोगतः प्रकरणादिमन्तरेणापि वृक्ष इत्युक्ते स्वभावतः कश्चिदर्थो गम्यते, अतो मन्यामहे न इमे सामान्यशब्दाः, प्रकृतिः प्रकृत्यर्थे वर्तते, प्रत्ययः प्रत्ययार्थे वर्तत इति । यदिहि सु औजस् इत्येता एव स्वार्थद्रव्यलिङ्गसङ्ख्याकर्मादिवचनाः, सहायमात्रं प्रकृतिः, स्वादिभिः सर्वेषामर्थानामुपादानात् वृक्षः वृक्षौ वृक्षा इति किमर्थं नियोगेन वृक्षार्थ एव गम्यते, न पुनस्सर्वे अर्थाः प्रतीयेरन् ? पर्यायेण वा कदाचित्कश्चिन्न यौगपद्यं न पर्यायः । तस्मादन्वयव्यातिरेकाभ्यां समुदायस्थाः शब्दाश्चापोद्धर्थव्या अर्थाश्चेति व्यवस्थिताः, अन्वयव्यतिरेकाभ्यां व्यावहारिक्यर्थवत्ता । तत्रेदमपरिहृतं प्रकृतिरेव सर्वानर्थानभिदधाना दृश्यते प्रत्ययः सर्वार्थाभिधायी उभयं वोभयार्थाभिधायीति । तत्र परिहारः दधि मधु अग्निचिदित्येवमादिषु वचनान्तराणामिकारादीनां श्रूयमाणत्वादन्येषां च सविभक्तिकानां प्रयोगदर्शनात् ॥

अधुना इयानित्येवमादिषु प्रत्ययान्तरपरायाः प्रकृतेरवस्थानात् प्रकृत्यन्तराणां वा लोपदर्शनात् इहाप्यकेवलस्यैवार्थाभिधानं प्रसक्तं लोपादिद्वारेण शास्त्रदृष्ट्या केवलस्य विज्ञायते ॥

ननु न केवला प्रकृतिः प्रयोक्तव्या, न केवलः प्रत्यय इति शास्त्रसमयः । सत्यमेतत्, किन्तु यत्र प्रकृतिनिमित्ता प्रत्ययप्रवृत्तिस्तत्र केवलापि प्रकृतिः प्रयुज्यते । यत्र वा प्रत्ययनिमित्ता प्रकृतिनिवृत्तिस्तत्र केवलोऽपि प्रत्यय इत्यभ्यनुज्ञायते । हैयङ्गवीनं, श्रोत्रियः, इत्यादिषु तु संज्ञाशब्दे ह्योगोदोहस्य विकार इति, श्रोत्रियश्छन्दोऽधीत इति, परक्षेत्रे चिकित्स्य इति, प्रकृतिप्रत्ययविभागकल्पनया व्युत्पत्तिर्यथाकथंचिद्धर्मनियमाय क्रियते । एवं यावकादिष्वपि स्वार्थिकेषु प्रत्ययार्थस्याव्यतिरेकात्प्रकृत्यन्तरयोगे प्रातिपदिकानां च यावकादीनामर्थभेदात्प्रत्ययान्तरयोगे प्रकृतेः कल्पितायामर्थवत्तायां स्वार्थिकत्वं विज्ञायते । एको द्वौ बहव इत्यत्र प्रत्येकं वचनान्तराभावात्कर्मादिविषयावन्वयव्यतिरेकावाश्रीयेते । सामान्यतो दृष्टाच्चानुमानात्प्रकृत्यन्तरवदेकादीनां प्रवृत्तौ भिन्नरूपाणि वचनान्यसङ्करेण व्यवस्थां प्रकल्पयन्तीति प्रतीयते ॥

नन्वेवं सति शब्दस्यैकार्थोपक्षयस्यार्थान्तरेण असम्बन्धादर्थस्याप्येकशब्दोपक्षयस्यान्यत्रासङ्क्रान्तेः कूपसूपयूपादिवदेवान्वयव्यतिरेकौ नावकल्पेते । न हि य एवैकत्वसंबन्धी स द्वित्वादिसंबन्धी, योवा प्रातिपदिकत्वेनार्थमात्रप्रवृत्तिः स्वशक्त्यन्तरसम्बन्धी न भवितुमर्हति । न खलु शब्दः कश्चिदुत्तरकालमर्थान्तरं परित्यजत्युपादत्ते वा । तदुक्तम्—यस्य न विभागोऽस्ति कुतोऽर्थस्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

भविष्यति ? विभागैः क्रियाभेदमविद्वान्प्रतिपद्यते। एवमेतत्। किन्तु त्रिविधः शब्दो निर्वर्त्योऽन्वाख्येयः प्रतिपादकश्च। तेष्वधर्महेतुरपभ्रंशो निर्वर्त्यः। धर्महेतुर्लोकवेदयोः प्रयोगार्होऽन्वाख्येयः। प्रकृतिप्रत्ययादिविभागकल्पनया तत्स्वरूपावबोधकृत्प्रतिपादकः। तदर्थमन्वयव्यतिरेकावविद्यमानावपि व्यवस्थार्थं कल्पितौ शास्त्रार्थव्यवहारनिबन्धनं सम्पद्यते। शास्त्रव्यवहारो ह्यर्थवत्प्रातिपदिकं क्रियावचनो धातुरित्यादिरनाश्रितयोरन्वयव्यतिरेकयोरसुकर एव। तदाह—

भागैरनर्थकैर्भिन्नाः पचतीत्येवमादयः।
अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम्॥ इति॥
अभिधा च विवक्षा च तात्पर्यं च विभागवत्।
चतस्रः केवला ह्येताश्शब्दसम्बन्धशक्तयः॥
यापेक्षा यच्च सामर्थ्यमन्वयो यश्च तैर्मिथः।
ऐकार्थ्यं यच्च तास्तस्य ससहायस्य शक्तयः॥
उक्ताश्चतस्रः प्रथमाः क्रमेण क्रमादथान्याः प्रकटीक्रियन्ते।
अखण्डवाक्यार्थविवेचकानां शब्दार्थसंवित्परिशुद्धिहेतोः॥

इति महाराजाधिराज श्रीभोजदेवविरचिते शृङ्गारप्रकाशे
केवलशब्दसम्बन्धशक्तिप्रकाशो नाम
सप्तमः प्रकाशः॥



CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

॥ श्रीः ॥

# अष्टमः सापेक्षशब्दशब्दशक्तिप्रकाशः

## ॥ व्यपेक्षा ॥

तत्रोद्भूतसम्बन्धव्यतिरेकाणां पदार्थानामितरेतरप्रत्याकाङ्क्षा व्यपेक्षा। सा च सन्निहिते योग्ये च भवति। तद्यथा—देवो वर्षतीति वर्षणक्रियाकर्तारमन्तरेणाभवन्ती सन्निहितं योग्यं च देवमपेक्षते। यत्र तु सान्निहितस्य न योग्यता तत्र व्यवहितमपि योग्यमेवापेक्ष्यते। यथा—प्रविशापिण्डीमित्यत्र न प्रवेशनक्रियासान्निहितायामप्ययोग्यायां पिण्ड्यामसम्भवन्ती व्यवहितमपि योग्यं गृहादिकमपेक्षते। पिण्डीमित्येतदपि कर्मपदं प्रविशेत्यस्मिन्नसम्भवद्योग्यमेव भक्षयेत्यादि-क्रियापदमपेक्षत इति। सेयं व्यपेक्षा संक्षेपतः पदार्थानां त्रेधा सम्भवति—आभिधानिकी, नैयायिकी। नैषेधिकी च। तत्र श्रुतिसमारोपवाक्यविकल्पसमुच्चयातिदेशादिभिरभिधीयमाना आभिधानिकी। ऊहाविपर्ययविपरिणामाध्याहारवाक्यविशेषव्यवहितकल्पनादिभिरुपकल्प्यमाना नैयायिकी। वचनासम्भवविरोधकृतार्थपरिसङ्ख्यावधारणादिभिर्निषिध्यमाना नैषेधिकी। तास्वा-भिधानिकी तावद्यत्र द्वयोः साधर्म्यार्थमावृत्त्या विभक्तिश्रुतिभेदेन च विशेषणविशेष्यनिर्देशः सा श्रुत्याभिधानिकी। यथा—

अङ्गेनाङ्गं प्रतनु तनुना गाढतप्तेन तप्तं
सास्रेणास्रद्रवमविरलोत्कण्ठमुत्कण्ठितेन।
उष्णोच्छ्वासं समधिकतरोच्छ्वासिना दूरवर्ती
सङ्कल्पैस्तैर्विशति विधिना वैरिणा रुद्धमार्गः॥

यत्रापि साधर्म्यार्थादेव द्वयोस्तन्त्रेण च विभक्त्यभेदेन च विशेषणविशेष्ययोगः, सा च श्रुत्या-भिधानिकी। यथा—

दैवादपत्रमच्छायं फलार्थिभिरसेवितम्। सानुजं शाखिनमिव दृष्ट्वा रामं रुरोद सा॥

यत्र पदेन वाक्येन वा संज्ञार्थो विधीयते सा समाख्याभिधानिकी। सा पदेन यथा—

असौ शरण्यः शरणागतानामगाधसत्त्वे मगधप्रतिष्ठः।
राजा प्रजारञ्जनलब्धवर्णः परन्तपो नाम यथार्थनामा॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वाक्येन यथा—

सच्चं धन्नाधन्ना जातइआ केसवेण गिरिधरणे ।
गुरुभारपावडेण विअ अज्जुअअच्छं चिरं दिट्ठा ॥

यत्र व्यपेक्षोत्थापकवाक्यमभिधाय तदुपपादकमभिधीयते, उपपादकं वाभिधाय व्यपेक्षोत्थापकं सा वाक्याभिधानिकी । तयोराद्या यथा—

साउप्पन्नीगोटी डइनवरिवकवि . . . . . ति ।
भड्डुपच्चल्लि इसोमरहजासुननलरशइकंठि ॥

द्वितीया यथा—

वाणिधसोडिअच्चरुणरवओ दारेएं तु न दिट्ठ । माएणजहुके मलडोल्लाहिअ इवइट्ठ ॥

वैकल्पिकाभिधानप्रभवा विकल्पाभिधानिकी यथा—

अंबुरुखोच्चिअसमुद्दुतरेसिलदुहिडोग्गरुकाणि ।
तहिमोहिपतयीओकलहिओजेवरुच्च इते वअणि ॥

समुच्चयिकाभिधानप्रभवा समुच्चयाभिधानिकी । यथा—

हिअ इखुक्कइगोडरी गअणे हुड्डुक्क इमोहु ।
वासरत्तपवास अछं हसमासं कड्डुएहु ॥

सामान्यविशेषातिदेशप्राप्तधर्माणां यत्राग्रतः पश्चाद्वाभिधानं सातिदेशाभिधानिकी । तत्र सामान्यातिदेशप्राप्तधर्माभिधानमग्रतो यथा—

हिअ इति रिच्छिवहि समुहलच्छइगहिअकडवरुच्छ ।
पहिअहएकजिशोरंडीनं चउभट्टअरच्छ ॥

एवं पश्चादपि द्रष्टव्यम् । विशेषातिदेशप्राप्तधर्माभिधानं पश्चाद्यथा—

महिलत्ताणणिव्वाहि उअएकलविज्जप्पिआइ ।
णेहक्क उविअविर हुनम्मे विदट्टणजाइ ॥

आदिग्रहणाद्यत्रैकमभिदधानः प्रसङ्गेनान्यदप्यभिधत्ते सा प्रसङ्गाभिधानिकी । सापि द्विधा—पदतो वाक्यतश्च । तयोराद्या यथा—

सावसलोणीगोरडी . . . अहोमड्डुरइ साओ ।
तिक्खअप्पपलोव्वणएविरड्डजिकडि अकसाओ ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अत्र रूपं वर्णयन्प्रसङ्गतः षड्रसानभिमतानभिमतत्वं च तेषां निर्दिशति । द्वितीया यथा—

प्रत्यग्रोन्मेषजिह्मा क्षणमनभिमुखी रत्नदीपप्रभाणा
मात्मव्यापारगुर्वी जनितजललवा जृम्भणैः साङ्गभङ्गैः ।
नागाङ्कं मोक्तुमिच्छोः शयनमुरुफणाचक्रवालोपधानं
निद्राच्छेदाभिताम्रा चिरमवतु हरेर्दृष्टिराकेकरा वः ॥

अत्र मुद्राराक्षसे चाणक्येन कौमुदीमहोत्सवे निषिद्धे राक्षसयुक्तो वैतालिकः प्रभाते मङ्गलानि पठन् शरदवतारो वर्तत इति चन्द्रगुप्तस्यागुप्तमावेदयति ।

अथ नैयायिकी । यत्र पूर्वोक्तमेव वाक्यमर्थान्तरे वक्रतरादिभिरूहयित्वा निवेश्यते तामूह-नैयायिकीमामनन्ति । तद्यथा—कालिदासः "किं कुन्तलेश्वरः करोतीति" विक्रमादित्येन पृष्ट उक्तवान् ।

असकलहसितत्वात्क्षालितानीव कान्त्या मुकुलितनयनत्वाद्व्यक्तकर्णोत्पलानि ।
पिबति मधुसुगन्धीन्याननानि प्रियाणां त्वयि विनिहितभारः कुन्तलानामधीशः ॥

इदमेवोहयित्वा विक्रमादित्यः प्रत्युवाच—

पिबतु मधुसुगन्धीन्याननानि प्रियाणां मयि विनिहितभारः कुन्तलानामधीशः ॥

यत्र पाठक्रमेण संबन्धानुपपत्तावर्थक्रमेण विपर्यस्य पदानि योज्यन्ते सा विपर्ययनैयायिकी । यथा–

स्वयंविशीर्णद्रुमपर्णवृत्तिता परा हि काष्ठा तपसस्तया पुनः ।
तदप्यवाकीर्णमतः प्रियंवदां वदन्त्यपर्णामिति तां पुराविदः ॥

अत्रातस्तां प्रियंवदामपर्णां वदन्ति पुराविद इति पर्यायेण पदानि योज्यन्ते, यत्र तुल्यार्थपद-प्रयोगे विभक्तिविपरिणामेन विशेषणविशेष्ययोर्योज्यन्ते सा विपरिणामनैयायिकी । यथा—

दन्तोज्ज्वलासु विमलोपलमेखलान्तास्सद्रत्नचित्रकटकासु बृहन्नितम्बाः ।
अस्मिन् भजन्ति घनकोमलगण्डशैला नार्योऽनुरूपमधिवासमधित्यकासु ॥

अत्र सप्तम्यन्तानि प्रथमान्तानि च विशेषणानि नारीरधित्यकाश्च विभक्तिविपरिणामतो विशेषयन्ति। एतेन वचनविभक्तिपरिणामो लिङ्गविपरिणामश्च व्याख्यातः । तयोराद्यो यथा—

हस्तस्थिताखण्डितचक्रशालिनं द्विजेन्द्रकान्तं श्रितवक्षसं श्रिया ।
सत्यानुरक्तं नरकस्य जिष्णवो गुणैर्नृपाः शार्ङ्गिणमन्वयासिषुः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्वितीयो यथा—

रोचिष्णुकाञ्चनचयांशुपिशङ्गिताशा वंशध्वजैर्जलदसंहतिमुल्लिखन्त्यः ।
भूभर्तुरायतनिरन्तरसन्निविष्टाः पादा इवाभिबभुरावलयो रथानाम् ॥

यत्राकाङ्क्षानिवृत्तयेऽर्थान्तरमध्याह्रियते, साध्याहारनैयायिकी । यथा—

न दानेन न मानेन न शाठ्येन न सेवया ।
न शस्त्रेण न शास्त्रेण सर्वथा किमपि स्त्रियः ॥

अत्र वशीभवन्तीत्यादिरध्याहारः । यत्र लिङादेरश्रुतौ विधिर्निषेधो वा सर्ववाक्यानां विधिनिषेधपरत्वे न प्रकल्प्यते सा वाक्यशेषनैयायिकी । यथा—

तदेतत्काकतालीयं तदेतद्वा घुणाक्षरम् । यदनात्मवतामायुर्यच्चानीतिमतां श्रियः ॥

तस्मादात्मवता नीतिमता भवितव्यमिति वाक्यशेषः । यत्र सन्निहितानुपपत्तौ व्यवहितमाश्रीयते सा व्यवहितविकल्पनानैयायिकी । यथा—

दिलीपानन्तरं राज्ये तं निशम्य प्रतिष्ठितम् । पूर्वं प्रधूपितो राज्ञां हृदयेऽग्निरिवोत्थितः ॥

अत्राग्नेर्निशमनाक्रियासम्भवात् पूर्वकालत्वायोगे तं निशम्यापि राज्ञां रजतामिति व्युत्पत्तिकालार्थो व्यवहितो व्यपेक्ष्यते । तेनायमर्थः सम्पद्यते । तं राज्ये प्रतिष्ठितं निशम्य राजाभिमान मुद्वहतां हृदयेऽग्निरिवोत्थित इति । एतेन गुणकल्पना नैयायिक्यपि व्याख्याता । यथा—

चंदणिहिएक्कचलणाणहभमिरमराळणि हिणुअवरवआ ।
कमळवणदिण्णहत्था अणुसिरीभुवणमोअरइ ॥

आदिग्रहणादपोद्धारवाक्यभेदादयो गृह्यन्ते । तेषु यत्र वृत्तिच्छन्नस्य सर्वनामादिभिरपोद्धृत्यानुसन्धानं क्रियते सा अपोद्धारनैयायिकी । यथा—

विपत्प्रतीकारपरेण मङ्गलं निषेव्यते भूतिसमुत्सुकेन वा ।
जगच्छरण्यस्य निराशिषः सतः किमाभिराशोपहतात्मवृत्तिभिः ॥

अत्र वृत्तिच्छन्नयोर्विपद्विभूतिपदयोराभिरिति सर्वनाम्नानुसन्धाने जगच्छरण्यस्य किं विपद्भिः, निराशिषः किं विभूतिभिरित्यर्थः सङ्गच्छते, एकवाक्यत्वेऽप्यपेक्षितानवाप्तौ यत्र वाक्यान्तरमुपकल्प्यते सा वाक्यभेदनैयायिकी । यथा—

तुहअसमं सोहग्गं अमहिलसरिसं च साहसं मज्झ ।
जाणइ गोलाऊरो तामारत्तइ त्तत्तोअ ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अत्र तवासमं सौभाग्यमस्त्रीजनोचितं च मे साहसं गोदावरीपूरो जानातीत्येतावदेकं वाक्यं नैकः साक्षी प्रमाणमित्यपेक्षायां वर्षारात्रार्धरात्रश्चेति द्वितीयम् । अन्यथा ह्येकवाक्यतायां यथासङ्ख्यमनुदेशस्समानमिति गोदावरीपूरस्त्वत्सौभाग्यं वर्षारात्रार्धरात्रस्तु मत्साहसं जानातीत्ययमर्थः सम्पद्यते । यदि चायमपि न यथासङ्ख्यस्य विषयः कोऽन्यो भविष्यति ? तत्र को दोष इति चेद्विवक्षितार्था सिद्धिः । यथासङ्ख्यपक्षे हि येषु त्वं पल्लवितलताप्रतानापवारितेषु गोदावरीतटगुहागृहेषु कामपरवशाभिर्वराङ्गनाभिरभिसार्यमाणो विहरसि पूर एव, तेषु यदि प्रवेष्टुमीष्टे याति चाहं प्रसुप्ताशेषजनपदे प्रवर्षदम्भोधरान्धकारनिस्सञ्चारे प्रावृण्णिशीथे परिभ्रमन्ती महासाहसानि वर्षारात्रार्धरात्र एव यदि द्रष्टुं शक्नोति, न पुनरन्यस्यैतत्सामर्थ्यमित्ययमर्थः सङ्गच्छते । न चायमस्या विवक्षितः अपि त्वेवं नाम त्वं सुभगो सएवं नाम चाहं साहसिनी यार्धरात्रे वर्षासुपूरपूर्णां गोदावरीमुल्लङ्घ्यागणितप्राणसंशया त्वामभिसारितवत्यस्मि, तस्मात्कृतज्ञतामनुरुध्यमानेन सौभाग्यातिशययोगाद्बहुवल्लभेनापि त्वयानुरक्तायां मय्यनुक्रोशो न मोक्तव्य इति ॥

अथ यत्र साधर्म्यादिभिरर्थान्तरेऽनुवृत्तः पदार्थधर्मो वचनेन निवर्त्यते सा वचननैषेधिकी, सा तु प्रतीयमाननिवृत्तिनिमित्ताच । तयोराद्या यथा—

मूले कण्टकसन्ततिरुपरि च विकचानि रक्तकुसुमानि ।
एतावतैव शल्मलिरनुहरति न पङ्कजवनस्य ॥

अत्र शल्मलिसादृश्यं कण्टककुसुमसाधर्म्यात्पङ्कजवनेऽनुवृत्तं प्रतीयमानसौगन्ध्यादि गुणभावसूचकेन वचनेन निवर्त्यते । द्वितीया यथा—

कार्यज्ञः प्रष्टव्यो न पुनर्मान्यो मम प्रियो वेति ।
गुरुरस्त्रासनसेव्यः प्रियानितम्बः कदा मन्त्री ॥

अत्र यो यस्य मान्यः प्रियो वा स तस्य मन्त्री सामान्येन मान्यत्वप्रियत्वाभ्यां मान्यप्रियाप्रियानुवृत्ता प्रष्टव्यता प्रियानितम्बदृष्टान्तावष्टम्भशोभिनाभिधीयमानकार्यज्ञत्वाभावसूचकेन वचनेन निवर्त्यते । यत्रासम्भवेन विधेयं निषिध्यते सा असम्भवनैषेधिकी । सा द्विधा, अप्रस्तावनिमित्ता, अनुत्पादनिमित्ता च । तयोराद्या यथा—

वेविरसिण्णकरंगुलि परिग्गहक्खलिअले हणीमग्गे ।
सोत्थिच्चि अणसमप्पइ पिअसहिलेहम्मि किंलिहिमो ॥

अत्र स्वस्तीति पदस्यासमाप्तौ सन्देशदानादेस्तदुत्तरकालभाविनोऽप्रस्ताव इति तन्निमित्तत्वेनासम्भवेन लेख्यस्य विधेयत्वं निषिध्यते । द्वितीया यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

लइवप्पडवि उदुदुत्थडाकउ अह्माणइएसि पुत्तमह ।
च्छ . . . जलदहि उजंमे विजिम आआसि ॥

अत्र बध्नोऽप्यनुत्पत्तौ तदुत्तरकालभाविनस्तक्रोत्पादस्यासम्भवेन तक्रपानस्याविधेयत्वं निषिध्यते । यत्र विरोधिना शब्देनार्थेन वा कार्यं निवार्यते सा विरोधनैषेधिकी । तयोराद्या यथा—

तेपुच्छिज्जहिपत्तडि जेतहि दिसिहि न एंति । जेहीसदिट्ठिगोरधीतेदुकरुजीअंन्ति ॥

अत्र ते वार्ता प्रष्टव्याः । ये तस्या दिशो नायान्तीति पूर्वापरविरोधिना वाक्येन केनचित्प्रथमा न प्राप्नोति यथा नीलशब्दस्तावदयं स्वार्थसामान्यवचनो व्यतिरेकात्प्रातिपदिकार्थस्य प्रथमयैव सम्बध्यते, तथैवोत्पलशब्दोऽपि । यदेव केवलमव्ययतिरेकार्थाभिधायि पदं पदान्तरसन्निधानेऽपि तत्तदेव ततो यमर्थमभिधातुं योग्यमवधृतमस्य रूपं तमेव पदान्तरसन्निधावपि प्रत्याययति । रूपभेदान्नहि रसनमसन्निधौ दर्शनस्य मधुरादिव्यञ्जकदर्शनसन्निधौ नीलादिव्यक्तिसामर्थ्यं लभते । किन्तु पदयोः परिच्छिन्नार्थः पुमांस्तयोः सन्निधौ प्रयोगसामर्थ्यादर्थयोः परस्परोपश्लेषयोग्यत्वादेकवाक्यरूपानुग्रहाच्चान्योन्यं प्रधानोपसर्जनभावेन विशेषणविशेष्य एवमपैति । तथा हि । यत्र विशेषणं विशेष्यं चैकास्मिन्नर्थे संभेदं प्रतिलभते तत्र यश्शब्दः स पूर्वोत्तरपदाधिष्ठानमेनं प्रत्याययति । उत्पलशब्दोऽभिप्रवर्तमानः सर्वोत्पलावग्रहरूपेण प्रवर्तते । तत्रैव नीलशब्दः प्रवर्तमानो विशिष्टावग्रहरूपेणावच्छिनत्ति । यदि वा नीलमित्येतत्प्रवर्तमानन्यूनाधिकभावमनपेक्षमाणमनेनैव धर्मेण सर्वयोग्यं सदुत्पलमिति शब्दान्तरेण विशिष्टायां योग्यतायां नियम्यते । अथवा यथा कृष्णः शुक्लश्चायं मृगः सारङ्गः शबल इति वा, तथा नीलोत्पल इत्युभयरूप एवार्थात्मा ह्युभयं सन्निवेश्यते । नीलं चोत्पलं चैकं नीलोत्पलमिति तौ यस्मिन्नुभयगुणमनुविभागमाप्यमानौ संमूर्च्छिताविवार्थौ भवतः तत्तयारेकेमधिकरणं । यदिवा नीलशब्दः प्रवर्तमानो नीलगुणमात्रमुपादाय प्रवर्तते नत्वनेनोत्पलादय उपात्ता अपि परित्यक्ताः । एवमुत्पलशब्दो विजातियोगमात्रमुपादाय प्रवर्तते । न नीलादींस्त्यजति । नोपादत्ते । तत्र यदैव भिन्नेऽर्थरूप इदमिति सर्वनाम्ना प्रत्यवमृश्यमाने उपश्लिष्येते नीलमुत्पलं चेदं द्रव्यमिति, तदा शब्दभेदाद्भिन्नमेव द्रव्यं विशेषणं विशेष्यमधिक . . . क्तः पदद्वयसन्निधानायत्तत्वाद्विशेषणविशेष्यभावस्य वाक्यार्थत्वं, न पदार्थता । तदिदमुक्तं— यदत्राधिकृतं वाक्यार्थः स इति . . . नीलमुत्पलमिति । विशेषणविशेष्ययोरुभयस्य च विशेष्यत्वादुपसर्जनत्वाप्रसिद्धिः यथा ह्युत्पलशब्दो नीलशब्देनाभिसम्बन्ध्यमानो विशेषवचनस्तथा नीलशब्दोऽप्युत्पलशब्देनाभिसम्बध्यमानो विशेषवचनः सम्बध्यते, नैवम् । एकस्यात्र प्राधान्यं विवक्षितं अपरस्य उत्पलस्यचात्राप्राधान्यं विवक्षितं नीलशब्दस्योपसर्जनत्वमिति । यदा तर्हि नीलस्य प्राधान्येन विवक्षा उत्पलस्य चोपसर्जनत्वेन तदा कर्तव्यं सामानाधि-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

करण्यं, न ह्यसौ द्वन्द्व उत्पलं च नीलं चेति। नापि षष्ठीसमास उत्पलस्य नीलमिति, अपि तु द्वाविमौ प्रधानशब्दावेकस्मिन्नर्थे युगपदुपरुध्येते। न च द्वयोः प्रधानयोरेकस्मिन्नर्थे युगपदुपरोधे प्रयोजनमस्तीति प्रयोगसामर्थ्याद्गम्यते। नूनमेकमिहप्रधानं तद्विशेषकं चापरम्॥

एतावांस्तु सन्देहः किं विशेष्यं? किं विशेषणमिति। तत्र द्रव्यं विशेष्यं गुणो विशेषणं द्रव्यस्यान्यानपेक्षिणः साक्षात्क्रियासूपयोगेन प्राधान्यात्॥

ननु गुणस्यापि साक्षात्क्रियासूपयोगो दृश्यते यथा 'श्वेतं छागमालभेते'ति, नैवम्। इह श्वेताभावे कृष्णमपि छागमालभते न तु श्वेतां पिष्टपिण्डीमालभ्य कृती भवति। एवमुपचारप्रवृत्तावपि पुरुषव्याघ्र इत्यादौ यद्यन्तर्भूतोपमानसम्बन्धप्रतीतभेदो व्याघ्रादिशब्दैरुपमेयः पुरुषादिरभिधीयते तदा सामानाधिकरण्योपपत्तौ उपमितं व्याघ्रादिभिः सामान्याप्रयोग इति समासो भवति। एवं प्रपचति साधु पचतीत्यादयो द्रष्टव्याः। कथं पुनः सामानाधिकरण्येन क्रियाविशेषणत्वे साध्वादयोऽसत्त्ववचना भवन्ति। उच्यते, उपसर्गाणामिव क्रियाविशेषणानामप्यसत्त्वभूतानामेव क्रियां प्रति गुणभावो भवति, यथा पच्यादिकं विशेषे स्थापयन् असत्त्वार्थः प्रशब्दो विशेषणत्वं लभते, एवं साधुशब्दोऽपि क्रियात्मकभूतं धर्ममुत्कर्षादिकं क्रियास्थमसत्त्वभूतं क्रियानुप्रविष्टमभिदधानः क्रियानुरोधादेवासत्त्वभावमापन्नः क्रियाविशेषणत्वं लभते, कथं पुनः प्रपचतीत्यादौ प्रादेरुभय विशेषणत्वे क्रियाभागेनैव सम्बन्धो भवति? सति वा कथमुभयविशेषणत्वम्॥

उच्यते। यथा मासोजातस्येति मासाख्यः क्रियाकलापः कथं प्रथमकुक्षिवियोगाख्यस्य जन्मनोऽवधिभावेन परिच्छेदको भवति जन्मप्रतिलब्धां वा सत्तां समावृत्त्या परिमिमीते, यथा च कष्टश्रित इत्यत्रोपात्तक्रियाविशेषपरिच्छिन्नः कर्ताऽभ्यन्तरीकृतसाधनसम्बन्धः क्रियायोगे श्रयतिक्रियासंबन्धात्कष्टे कर्मत्वमिति श्रयणक्रियापूर्वं कष्टेन सम्बन्धमनुभवति, यथा च वृकाद्भीत इत्युपात्तक्रियावच्छिन्नः कर्ता भयक्रियासंबन्धाद्वृकस्यापादानत्वमिति भयक्रियापूर्वकं वृकेन संबध्यते, तथेहाप्युपात्तपच्यादिक्रियाविशेषपरिच्छिन्नः कर्ताऽभ्यन्तरीकृतसाध्यसाधनसम्बन्धः क्रियायोगे प्रादीनामुपसर्गत्वमिति क्रियापूर्वकं प्रादीनां सम्बध्यत इति। सर्वेऽपि च समुदायसम्बन्धिनोऽवयवस्पर्शेनैव तद्वता समुदायेन सम्बध्यन्ते। तदुक्तम्—

समुदायेन सम्बन्धो येषां गुरुकुलादिना। संस्पृश्यावयवांस्ते तु युज्यन्तेतद्वता सह॥इति॥

व्यपेक्षादिभिरेकार्थपरतयोपात्तानां पदार्थानां मिथोऽभिग्रथनमन्वयः। स त्रिधा—शाक्तो वैभक्तः शक्तिविभक्तिमयश्च। तेषु कर्मादिशक्तिभिर्निर्वृत्तः शाक्तः, सम्बन्धादिविभक्तिभिर्वैभक्तः, उभाभ्यां पुनः शक्तिविभक्तिमयः। तत्राख्यातसुब्विभक्तिभ्यां कर्तृकर्मणोरभिधाने शाक्तो यथा—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अध्यासामासुरुत्तुङ्ग हेमपीठानि यान्यमी । तैरूहे केसरिक्रान्तत्रिकूटशिखरोपमा ॥

कृदाख्याताभ्यां भिन्नकालस्थकर्तृशक्तिद्वयाभिधाने सुब्विभक्तिभिः कर्मकरणसम्प्रदानाभिधाने च शाक्तो यथा—

अजित्वा सार्णवामुर्वीमनिष्ट्वा विविधैर्मखैः । अदत्वा चार्थमर्थिभ्यो भवेयं पार्थिवःकथम् ॥

आख्यातविभक्त्या हेतुशक्त्यभिधाने सुब्विभक्त्याच कर्मकर्त्रपादानाधिकरणशक्त्यभिधाने यथा–

स सेतुं बन्धयामास प्लवगैर्लवणाम्बुधौ । रसातलादिवोत्तीर्णं शेषं स्वप्नाय शार्ङ्गिणः ॥

स्वप्नायेति कर्तरि षष्ठी न सम्बन्धे, भावएव चतुर्थी न तादर्थ्ये । आख्यातेन कर्त्रभिधाने तद्धितेन कृते च कर्माभिधाने सुपा कथिताकथितकर्माभिधाने च शाक्तो यथा—

विपक्षमखिलीकृत्य प्रतिष्ठा खलु दुर्लभा । अनीत्वा पङ्कतां धूलिमुदकं नावतिष्ठते ॥

सम्बन्धविभक्त्या वैभक्तो यथा—

यस्यार्थास्तस्य मित्राणि यस्यार्थास्तस्य बान्धवाः ।
यस्यार्थाः स पुमान् लोके यस्यार्थाः स च पण्डितः ॥

शेषविभक्त्या वैभक्तो यथा—

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः । बुद्धिमत्सु नराःश्रेष्ठा नरेषु ब्रह्मवादिनः ॥

उपपदविभक्त्या वैभक्तो यथा—

नमस्तुङ्गशिरश्चुम्बिचन्द्रचामरचारवे । त्रैलोक्यनगरारम्भमूलस्तम्भाय शम्भवे ॥

सम्बोधनविभक्त्या च वैभक्तो यथा—

अवनिपवनवह्निव्योमतोयान्तरात्मन्नहिमकर हिमांशो विश्व विश्वैकयोने ।
हर भव शिव शर्व त्र्यम्बकेशान रुद्र त्रिनयन वृषकेतोऽनन्तमूर्ते नमस्ते ॥

कारकविभक्तिः सम्बन्धोपपदशेषसम्बोधनविभक्तिभिश्च शक्तिविभक्तिमयो यथा—

तीर्थेषु सत्सु द्विजसत्तमेभ्यः श्रियं द्विषाविष्टजनानुपात्ताम् ।
समाधिनामानमजस्रमेव कस्य प्रदातुं त्वदृतेऽस्ति शक्तिः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यत्र लुप्तास्वपि विभक्तिषु शक्तयोऽवभासन्ते विभक्तयश्च साक्षादुपलभ्यन्ते सोऽपि शक्तिविभक्तिमयः । यथा—

वित्रस्तशत्रुः स्पृहयालुलोकः प्रपन्नसामन्त उदूढसत्वः ।
प्रतिष्ठितः कार्यसमाधिसत्रे जितावनिः कोऽत्र भवानिवान्यः ॥

यत्रैकतः शक्तिरन्यतो विभक्तिस्सोऽपि शक्तिविभक्तिमयो यथा—

निरीक्ष्य संरम्भनिरस्तधैर्यं राधेयमाराधितजामदग्न्यम् ।
असंस्तुतेषु प्रसभं भयेषु जायेत मृत्योरपि पक्षपातः ॥

अत्र यदि जनिक्रियातो निरीक्षणक्रियायाः पूर्वत्वं तदा कर्तृभेदान्नास्ति क्त्वाप्रत्ययः । अभिधाव्यापारस्तु विघटते षष्ठ्यभिहितस्य कर्तुः पक्षपातक्रिययैव सम्बन्धः, न निरीक्षणक्रियया । कर्तृकर्मणोः कृतीति षष्ठ्या न लोकाव्ययनिष्ठाखलर्थतृनामिति प्रतिषेधात् । स च विभक्तिपरिणामाध्याहारविपर्ययवाक्यभेदव्यवहितकल्पनागुणकल्पनाभिरुपपद्यते । तत्र राधेयं निरीक्ष्य मृत्युरपि भयेषु पक्षपाती भवतीति विभक्तिविपरिणामः राधेयं निरीक्ष्य स्वसामर्थ्यं विमृशतो मृत्योरपि भयेषु पक्षपातो जायेतेति वाक्यभेदः । राधेयं निरीक्ष्य मारयतीति मृत्योरपि भयेषु पक्षपातो जायेतेति व्युत्पत्तिकालाश्रिताया व्यवहितायाः क्रियायाः व्यवहारकालेऽप्याश्रयणात् व्यवहितकल्पना । निरीक्ष्येव निरीक्ष्येति पक्षपातनस्याचेतनस्यापि चेतनगुणाध्यारोपेण गुणकल्पना । यदाह—मुख्याभावे सति प्रयोजने निमित्ते च सत्युपचारः प्रवर्तते, दृष्टश्चाचेतनेऽपि प्रेमादौ चेतनादिक्रियोपचारो यथा—

प्रेम पश्यति भयान्यपदेऽपि ।
अवस्था वस्तूनि प्रथयति च सङ्कोचयति च ॥

अथ किमभिहितानां पदार्थानामन्वय उतान्वितानामभिधानम् । उच्यते अस्त्यत्र मतभेदः, तत्रैके वर्णयन्ति, अन्वितानामभिधानमभिहितानां चान्वयः । केचिद्ब्रुवते, नान्वितानामभिधानं, न चाभिहितानामन्वय इति ॥

तत्राभिधानवादिन एवमाहुः । व्युत्पत्तिबलेन हि शब्दोऽर्थमवबोधयति वृद्धव्यवहारात् व्युत्पत्तिश्च वृद्धाश्च वाक्येनैव व्यवहरन्ति न पदेन, यच्चार्थप्रकरणादिगम्यपदार्थान्तरसहकृतं पदं प्रयुञ्जते तदपि वाक्यमेव—

यदप्येकं पदं दृष्टं चरितार्थक्रियं क्वचित् । वाक्यं तदपि मन्यन्ते सम्बोधनपदादिवत् ॥
यच्च कोऽयमिति प्रश्ने गौरश्व इति वोच्यते । तत्र लभ्यत इत्यादिः प्रश्नोक्त्यैव क्रियेष्यते ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वाक्यं चैकार्थपरं पदसमूहसंहत्यार्थमभिदधाति स तानि पदान्युच्यन्ते समूहश्चैवमेकार्थः स्यात्, एवं च संहत्यार्थमभिदध्युः पदानि। यद्येकैकं पदमभिन्न एवार्थे व्याप्रियते तत्र यथा त्रयोऽपि ग्रावाण उखां धारयन्ति, चत्वारोऽप्युद्यन्तारः शिबिकामुद्यच्छन्ति, सर्वाण्यपि कारकाणि पाकं साधयन्ति, तथा पदान्यपि सर्वाणि वाक्यार्थमन्ववगमयन्ति, वाक्यार्थश्च क्रियाकारकसंसर्गरूपः। तत्र कारकाणां क्रियासम्बन्धोन्मुखतया क्रियाणां च कारकविरहासहिष्णुत्वेनान्वितानामेव स्वशब्दैरभिधानं भवति। एवं च सति वाक्यार्थस्य साक्षादेव शाब्दत्वमुपपद्यते नत्वभिहितान्वयपक्षवत्पारम्पर्येणेति। तदभिहितान्वयवादिनो न मृष्यन्ते, तेह्येवमाहुः, अनवगतपदार्थकस्य वाक्यार्थसम्प्रत्ययादर्शनात्पदार्थप्रतिपत्तिपूर्विकैव वाक्यार्थप्रतिपत्तिः, तां प्रतिपत्तिं पदार्थप्रतिपत्तिश्चैवमवकल्पते। यदि तावानेव सोऽर्थः पदेनाभिधीयते पदार्थान्तरान्विते तु तस्मिन्नभिधीयमाने कदम्बकरूपार्थप्रतिपत्तेः पदार्थप्रविभागो न प्रकल्पेत। अस्य पदस्य जातिरर्थोऽस्य द्रव्यमस्य गुणोऽस्य क्रियेति आवापोद्वापाभ्यां तदवधारणमिति चेत् नैवम्, तत्रापि कदम्बकरूपार्थप्रतीतेरनपायात्॥

किञ्च प्रतियोगिनामनन्ततयान्वयस्यानन्त्यात्तदन्वयानन्त्येनान्विताभिधायिन्याः सम्बन्धग्रहणमशक्यमिति दुरवगमः पदार्थयोः सम्बन्धग्रहः, तदनपेक्षत्वे प्रथमश्रुतादपि तदर्थप्रतिपत्तिः प्राप्नोति। गामानयेति वाक्यादश्वबन्धननियोगः प्रतीयेत, वृद्धव्यवहारेषु च वाक्यादपि भवन्ती व्युत्पत्तिः पदपर्यन्तैव भवति। इतरथाहि प्रतिवाक्यं व्युत्पत्तिरपेक्ष्येत सा चानन्त्याद्दुरुपपादेति शाब्दव्यवहारोच्छेदः स्यात्। दृश्यते चाभिनवकविश्लोकात् वाक्यार्थप्रतीतिः; सा च पदपदार्थयोरेव व्युत्पत्तावुपपद्यते, न वाक्यार्थयोरिति नास्त्यन्विताभिधानम्॥

अपिचान्वयस्यान्वितविशेषणत्वात्तदभिधानमन्तरेणान्वितोऽभिधातुं न शक्यत इत्यन्वयाभिधानमङ्गीकरणीयम्। न च तदेकया शक्त्या शक्यतेऽभिधातुमिति शक्त्यन्तरकल्पनाप्रसङ्गः॥

अपिच गामानयेत्यत्र यदा गोशब्देनानयत्यर्थविशिष्टः स्वार्थोऽभिधीयते तदा गवार्थस्याप्राधान्यम्, यदा च आनयतिना गवार्थविशिष्टः स्वार्थः तदा तदर्थस्येत्येतस्मिन्वाक्ये प्रधानद्वयोपनिपाताद्वाक्यभेदापत्तिः॥

अपिच प्रकृतिप्रत्ययोरन्योन्यान्वितस्वार्थाभिधानलब्धपदभावयोः पदार्थान्तरान्वितार्थवाचकत्वमिति द्विरभिधानं स्यात्॥

किञ्च पदेनान्वितः स्वार्थोऽभिधीयमानः किमभिहितेन पदार्थान्तरेणान्वितोऽभिधीयते उतानभिहितेन। अभिहितेन चेदेकस्मादेव पदात्तदर्थोपरञ्जकद्वितीयपदार्थावगतेः पदान्तरोच्चारणवैयर्थ्यम्। एवंचैकमेव पदमखिलपदाभिधेयार्थवादि सम्पन्नमिति तेनैव व्यवहारः स्यात्। न चासौ सम्पद्यते। गौरिति ह्युक्ते सर्वगुणक्रियावगमान्नज्ञायते किमुपादीयतामिति, नियतगुणाक्रियानुरक्तस्वार्थप्रतिपादने हेतुरस्ति। पदान्तरसन्निधानं नियमहेतुरिति चेत् तदपि जपमन्त्रा-

CC-0 ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

दिपदवत्स्वरूपमात्रेण सन्निधानान्न विशिष्यते । अथाभिहितेन तदपि तर्हि पदमन्विताभिधायितया पदान्तरोत्थमर्थाभिधानमपेक्षते ततश्चेतरेतराश्रयमनवस्थाचक्रकं वा प्राप्नोति ॥

अथ द्वितीयमनन्वितमेव स्वार्थमभिधत्ते प्रथमेन किमपराद्धम् । एवं च सर्वपदे स्वार्थमात्राभिधानादभिहितान्वय एव भवति ॥

किञ्चाङ्गुल्यग्रे हस्तियूथशतमिति नास्त्यन्वयो योग्यत्वाभावात्, अन्विताभिधानवादिनां त्वन्वितस्याभिधानात्तत्राप्यन्वयः प्राप्नोति ॥

अपि चान्विताभिधानवादिनां पुरुषवाक्यादेवमयं पुरुषो वेदेति भवति प्रत्ययो नैवमर्थं प्रति सिद्धान्तः । तेह्येवमाहुः । वाक्यात्कार्यभूतात्प्रत्ययितस्य वक्तुस्तदर्थविषयं पूर्वविज्ञानं कारणभूतमनुमीयते तस्य च ज्ञानस्य ज्ञेयाव्यभिचारित्वात् ज्ञेयभूतार्थनिश्चय इति न वाचकशक्त्यार्थावगमः । एवं च वाचकशक्तिरेव नावधार्यते कुतोऽन्विताभिधानमिति तस्मादभिहितानां पदार्थानामन्वय इति युक्तम् । पदानि हि स्वमर्थमभिधाय निवृत्तव्यापाराणि ॥

अथेदानीं पदार्था अवगता वाक्यार्थं गमयन्तीति । अत्रान्विताभिधानपक्षे कदम्बकरूपार्थप्रतिपत्तेः प्रतियोगिनां चानन्ततया सम्बन्धग्रहणस्याशक्त्या दुरवगमः पदार्थप्रतिभाग इति, तदिदं व्युत्पत्त्यनभिज्ञस्य चोद्यम् । नह्येवं व्युत्पत्तिः । गोशब्दस्य शुक्लान्वितोऽर्थ इति, स हि व्यभिचरति कृष्णान्वितस्यापि तदर्थस्योपलम्भात्, नापि सर्वान्वितः, आनन्त्येन दुरवगमत्वात्, किन्त्वाकांक्षितसन्निहितयोगार्थान्तरानुरक्तोऽस्यार्थ इति, एतां च व्युत्पत्तिं वाक्यान्येव पदावापोद्वापविरचनावैचित्र्यभाञ्जि सञ्जनयन्ति । यतः—

ओप्यन्ते चोद्ध्रियन्ते च स्वार्थाः स्वान्वयशालिनः ।
अन्विते स्वे च सामर्थ्यं पदानां तेन गम्यते ॥

तत्र च—

यद्यदाकांक्षितं योग्यं सन्निधानं प्रपद्यते । तदन्वितः पदेनार्थः स्वकीयः प्रतिपाद्यते ॥

पदार्थपर्यन्तापि च भवन्ती व्युत्पत्तिरीदृशी दृश्यते न शुद्धपदार्थविषया । तथाहि—

नियतं साधनं साध्ये क्रियानियतसाधना । ससन्निधानमात्रेण नियमः सम्प्रकाशते ॥
गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्तते । साध्यत्वेन निमित्तानि क्रियापदमपेक्षते ॥

एवं च सन्निहितयोग्याकांक्षितोपरक्ते स्वार्थे क्वचिद्गृहीतसम्बन्धः सर्वत्र गृहीतो भवतीति नानन्त्यव्यभिचाराभ्यां सम्बन्धाग्रहणम् । न च कदम्बकार्थप्रतीतेः पदार्थात्प्रविभागः । तदुक्तम्—

आकाङ्क्षासन्निधिप्राप्तयोग्यार्थान्तरसङ्गतान्। स्वार्थानाहुः पदानीति व्युत्पत्तिः संश्रिता यदा॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

आनन्त्यव्यभिचाराभ्यां तदा दोषो न कश्चन। कदम्बकार्थरूपायाः प्रतीतेश्च न सम्भवः॥

इति। ततश्च पदपदार्थयोस्सम्बन्धग्रहणोपपत्तौ न प्रथमश्रुतापि पदार्थप्रतीतिर्न गामानयेति वाक्यादेश्च बन्धननियोगः, न प्रतिवाक्यं व्युत्पत्त्यपेक्षा, न चाभिनवकविश्लोकवाक्यार्थप्रतीतिर्भवतीति। यदपि चान्विताभिधाने शक्तिद्वयकल्पनागौरवमाशङ्कितं तदपि नास्ति। अन्वयवत्ता ह्यन्वितता। तदभिधानेनान्वितोऽभिहितः स्यात्। न हि दण्डीत्यत्र दण्डो नाभिधीयत इति सम्भवति परं विशेषः तत्र प्रकृत्या विशेषणाभिधानं इह तेनैवान्यतस्तदलाभात्। अतोऽन्विताभिधानशक्त्यैवान्वयोऽप्यभिधीयत इति नास्ति शक्तिद्वयकल्पनागौरवम्। तदुक्तम्—

व्यतिषक्तार्थबुद्ध्या हि व्यतिषङ्गे [ङ्गो] निशम्यते। अपरं तु न संसर्गप्रतीतेरस्ति कारणम्॥

प्रतिपत्त्याऽन्वयं यस्मात्प्रतीयादन्वितः पुमान्। व्यक्तिं जातिमिवार्थोऽसावित्ति संपरिकीर्त्यते॥

योऽपि प्रधानद्वयशङ्कया वाक्यभेदलक्षणो दोषः सोऽपि नोपपद्यते। यतोऽन्वितः सम्बन्ध उच्यते तत्र कश्चित्प्रधानतया सम्बन्धः कश्चिद्गुणतया, यश्च यथा सम्बन्धः स तथैवोच्यत इति नैकस्मिन्वाक्ये प्रधानद्वयप्रसङ्गाद्वाक्यभेदलक्षणदूषणोत्पत्तिः। तदुक्तम्—

प्रधानगुणभावेन लब्धान्योन्यसमन्वयात्। पदार्थावेव वाक्यार्थं सङ्गिरन्ते विपश्चितः॥

प्रतिपत्तिर्गुणानां तु प्रधानैकप्रयोजना। तत्प्रतीत्येककार्यत्वाद्वाक्य . . . कर्ममुच्यते॥

यच्च प्रकृतिप्रत्यययोः पदस्य चाभिधाने द्विरभिधानमुक्तं तदपि न सम्यक् प्रकृत्यान्वितस्यार्थो विधीयते, प्रत्ययश्च प्रकृत्यर्थान्वितं पदार्थान्वितं च स्वार्थं ब्रवीति, प्रत्ययार्थस्य प्रकृत्यर्थान्वितस्य पदापेक्षित्वादिति कुतो द्विरभिधानम्। नन्वेवं पदस्यान्विताभिधायित्वं न स्यात्, प्रत्ययस्यैव प्रकृतिसहितस्य पदत्वात्॥

किञ्चायमभिहितान्वयवादिनोऽपि तुल्यो दोषः। ततश्च—

यश्चोभयोः समो दोषः परिहारोऽपि वा समः। नैकः पर्यनुयोक्तव्यस्तादृश्यर्थविचारणे॥

प्रकृतिप्रत्ययौ ब्रूतः प्रत्ययार्थं सहेति च। यदाहुः सूरयस्तेन प्रत्ययं [तदन्तं] पदमिष्यते॥

यच्चानभिहितपदार्थान्तरान्वितस्वार्थाभिधानपक्षे पदान्तरोच्चारणवैयर्थ्यमित्यादि, अभिधानपक्षे पुनरितरेतराश्रयादिदूषणमुक्तं तदुभयपक्षानभ्युपगमेनैव निरस्तम्। यतो नास्माकमयं पक्षः, प्रथमश्रुतान्येव पदानि स्वार्थानन्योन्यमन्वितानभिदधति। अपि तु यस्य यावन्तोऽर्थाः सम्भवन्ति तच्छ्रवणे तावन्तः स्मृतावुपस्थाप्यन्ते, ततश्चाकाङ्क्षासन्निधियोग्यतादिसम्पादितनियतमिथस्समन्वयाः पदैरेव स्मृत्युपारूढैरभिधीयन्ते। तथाहि—यस्तावद्गृहीतसम्बन्धो यस्य च सम्बन्धग्रहणसंस्कारो नोत्पन्नः प्रध्वस्तो वा स वाक्यार्थप्रतिपत्तौ नाधिक्रियते, यस्त्वनवभ्रष्टसम्बन्ध

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

ग्रहणसंस्कारः सपदं पदं श्रुत्वा नूनं तावदिदं स्मरति इदमिदमस्यार्थस्याकाङ्क्षितसन्निहितपरिजनविधित्सितः प्रियाप्रवृत्तिप्रश्नो निषिध्यते । द्वितीया यथा–

पिअसंगम किं वहि द्दडिपि अहोपरोक्खहोक्केत्र । मइवेल्लिविल्लासि आणिद्दणएव न तेव ॥

अत्र समस्तप्राणद्वन्द्वेदसाधारण्येन प्रवृत्तो निद्रार्थस्तद्विरोधिभ्यां प्रियसङ्गमवियोगाभ्यां निषिध्यते, यत्रार्थित्वाप्रवृत्तमन्येनैव तत्कार्यसिद्धौ निषिध्यते साकृतार्थत्वनैषेधिकी । यथा–

किं तस्स पारएणं किंमग्गिणा किं वगब्भप्परएण ।

जस्सउरम्मि णिसम्मइ उह्माअं तत्थणी जाआ ॥

अत्र प्रावारविलासाग्निगर्भगृहकाणि हैमनशीतार्तिनिवृत्तये प्रवृत्तानि तदर्थकारिणोपारूढयौवनोपगूढप्रियाकुचोष्मणा निवर्त्यन्ते । यत्र परिसङ्ख्यातेनार्थेन शेषं निषिध्यते सा परिसङ्ख्यानैषेधिकी । यथा—

वेवावल्लचि उदेव्हमुहे सज्जिअतिलइतकंड । कअकण्णाप्पलिंपचसरतहकामहो कोअंड ॥

अत्र जगज्जिगीषया चक्रीकृतकामकोदण्डानुकारिणि मुखे विबुद्धेऽपि लोचनोत्पलद्वयस्यैव प्रकाशमानत्वात्कुसुमसायकस्य द्वावेव बाणौ न त्रयो न पञ्चेति सज्जिततिलके त्रय एव न द्वौ न पञ्चेति कृतकर्णोत्पले पञ्चैव न द्वौ न त्रय इति परिसङ्ख्यातेनार्थेन शेषं निषिध्यते । यत्रैकावधारणेनान्यत्पराक्रियते सा नियमनैषेधिकी । यथा—

तेच्चिअजीआतेच्चे अमग्गणासा अजस्सधनुइट्ठी ।

दिट्ठिअकुवलअविलोअणा णसो जअइ कंदप्पो ॥

अत्र ज्यामार्गणधनुर्यष्टीनामन्यत्र भेदेनोपलम्भात्कन्दर्पविषयेपि तद्भेदोऽनुवृत्तः कुवलयविलोचनादृष्टेस्तेनतेन संस्थानेन तत्तत्कार्यकरणात्सैव सर्वात्मिकेत्यवधारणं निवर्त्यते, एतेन नियमसदृशफलो विनिग्रहोऽपि व्याख्यातः । यथा—

भवतु समदना रतये तिलकवती चारुचम्पक च्छाया ।

घनचन्दनधवलकुचा कान्ता तव विद्विषा मटवी ॥

आदिग्रहणादसम्भवनियमो विशेषे प्रत्यक्षश्रुतिरित्यादयो गृह्यन्ते, तयोरसम्भवनियमो यथा—

हारो थणाणसवणा ण कुण्डलामेहला णिअंबस्स ।

अच्छोणउणो विभवे विमण्डणं कज्जलसलाआ ॥

विशेषप्रत्यक्षश्रुतिर्यथा—

इयं गेहे लक्ष्मीरिय ममृतवर्तिर्नयनयो रसावस्याः स्पर्शो वपुषि बहुलश्चन्दनरसः ।

अयं बाहुः कण्ठे शिशिरमसृणो मौक्तिकरसः किमस्या न प्रेयो यदि परमसह्यस्तु विरहः ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

येयमुद्भूतसम्बन्धव्यतिरेकेण पदपदार्थानामितरेतरं प्रत्याकांक्षासन्निधियोग्यतापेक्षिणी व्यपेक्षेत्युच्यते। का पुनरियमाकांक्षा नाम? प्रतिपत्तुर्जिज्ञासा। सा कथं पदार्थानामुपपद्यते? कारणे कार्योपचारात्। तथाहि—अभिधानपर्यवसानमभिधेयपर्यवसानं च जिज्ञासोत्पत्तिकारणं, तच्चोपचारेणाकाङ्क्षेति व्यपदिशन्ति। तत्राभिधानपक्षे द्वारमित्येकपदप्रयोगेऽभिधानमेव न पर्यवस्यति। नह्यनुच्चरिते योग्यप्रतियोगिनि सन्निधायिनि पदे संव्रियतामपाव्रियतामित्यादावन्विताभिधानं भवति। वृद्धव्यवहारे चान्वितार्थान्येव पदानि प्रतीयन्ते, बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धस्य शब्दश्रवणसमनन्तरभाविनीं विशिष्टचेष्टानुमितां शब्दकारणिकां प्रतीतिमन्वितार्थविषयामवगच्छन्नन्वित एवार्थे पदानामभिधानसामर्थ्यमवधारयति। विश्वजिता यजेतेत्यादौ पुनरेकपदप्रयोगालब्धेऽन्विताभिधानेऽभिधेयमेव न पर्यवस्यति अत्रानुष्ठेयतयावगतस्य वाक्याभिधेयस्यार्थस्यानुष्ठातारमन्तरेणानुपपत्तेस्तदुपपत्तये युक्तैवानुष्ठातृजिज्ञासा तस्यां च सत्यामपरिपूर्णत्वावगमाल्लोकवदध्याहारे कर्तव्ये योग्यत्वात्स्वर्गकाम एवानुष्ठाताध्याह्रियते। अभिहितान्वयवादिपक्षेऽपि पदार्थान्तरमन्तरेणान्वयासामर्थ्यात्तदुपपत्तये युक्तैव प्रतियोगिजिज्ञासा, तस्यां च सत्यामपरिपूर्णवाक्यपरिपूरकतयान्विताभिधानवदेव प्रकरणादिवशेन योग्याध्याहारः क्रियते॥

नन्वेवं सति यत्र पदत्रयं प्रयुज्यते गामानय शुक्लामिति लोके तत्राभिधानाभिधेयापर्यवसानयोरसम्भवान्नाकाङ्क्षास्तीति कथमन्विताभिधानम्? वाक्यस्य गामानयेत्यैतावतैव परिपूर्णत्वात्। सत्यम्, पदानुच्चारणमेवमेतत्। उच्चरिते सत्येतस्मिन्नस्याप्यानयतिसन्निधानात्तदेकवाक्यत्वावगमादानयत्यन्वितस्यार्थाभिधायित्वावधारणादाकाङ्क्षां च विना तदसम्भवादानयतेराकाङ्क्षा परिकल्प्यते। उक्तं च भाष्यकृता—भवति च सा एकं प्रत्याकाङ्क्षेति। तेन तत्रान्विताभिधानसिद्ध्यर्थमेवाकाङ्क्षा, यदि परमयं विशेषः, द्वारमित्यादौ तस्यैव पदस्यान्विताभिधानाकाङ्क्षा, गामानय शुक्लामिति तु पदान्तरस्येति। उक्तं च (श्लो) 'अन्वितस्याभिधानार्थमुक्तार्थघटनाय वा। प्रतियोगिषु जिज्ञासा या साऽऽकाङ्क्षेति गीयते।' इति। सा चेयमाकाङ्क्षा विभागे सति भवन्ती व्युत्पत्तावुपलक्षणमाश्रीयते। किमिति पुनः सन्निधियोग्यतैव नाश्रीयते? निराकाङ्क्षेणान्विताभिधानादर्शनात् अयमेति पुत्रोराज्ञः पुरुषोऽयमपसार्यतामिति पुत्रसम्बन्धनिराकाङ्क्षो राजा न पुरुषेणान्वीयते। कस्मात्पुनरुभयोः पुत्रपुरुषयोः सन्निधियोग्यत्वाविशेषेऽपि पुत्रेणैव राज्ञः सम्बन्धो न पुरुषेण? उच्यते, न्यायसापेक्षत्वाद्वाक्यार्थप्रतिपत्तेः नित्यसापेक्षेणैव राजा संबध्यते तेन सम्बन्धनिराकाङ्क्षा न पुरुषेण सम्बन्धमनुभवतीति आकाङ्क्षाऽपि व्युत्पत्तावुपलक्षण माश्रीयते। परिपूर्णेन योग्यस्य समीपस्याप्यनन्वयः व्युत्पत्तौ तेन शब्दानामाकाङ्क्षाऽप्युपलक्षणं, सा चेयमाकाङ्क्षा प्रतियोगिषु न सर्वेषु सहसैव युगपदुपजायते, अपि तु कारणोपनिपातात्क्रमेण। तथाहि – क्रियया कर्तारमन्तरेणा सम्भवात्तदवगतौ कर्ता प्रथममपेक्ष्यते, स च निष्फले व्यापारे न प्रवर्तत इति कर्मापेक्षते। व्यापारश्च करणमन्तरेणाशक्यः साधयितुमिति करणापेक्षा। एवमधिकरणादयः क्रियाकारकविशेषणादय

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

श्चापेक्षणीया इति कारणोपनिपातः स्यात् । क्रियादिषु यथा—

जिज्ञासा जायते बोद्धुः सम्बन्धिषु तथा तथा ।
यद्यदाकाङ्क्षितं योग्यं सन्निधिं प्रतिपद्यते । तदन्वितः पदेनार्थः स्वकीयः प्रतिपाद्यते ॥

## ॥ अथ सन्निधिः ॥

योग्यस्याकाङ्क्षितस्य यदानन्तर्यं, स सन्निधिः । स द्विधा—अभिधानविषयः अभिधेयविषयश्च । तत्रोच्चारणनिमित्तोऽभिधानविषयः, अविनाभावनिमित्तोऽभिधेयविषयः । तयोराद्यो यथा—

लीलास्मितेन शुचिना मृदुनोदितेन व्यालोकितेन लघुना गुरुणा गतेन ।
व्याजृम्भितेन जघनेन च दर्शितेन सा हन्ति तेन गलितं मम जीवितेन ॥

अत्र लीलास्मितादिभिः शुच्यादीनि विशेषणानि यथासान्निध्यमपि सम्बध्यते । द्वितीयो यथा—

मा भवन्तमनलः पवनो वा वारणो मदकलः परशुर्वा ।
वाहिनीजलभरः कुलिशं वा स्वस्ति तेऽस्तु लतया सह वृक्ष ॥

अत्र दहत्वित्यादिका क्रिया तदविनाभावनिमित्तकात्सान्निध्यादध्याहृतानलादिभिः सम्बध्यते ॥

ननु च सन्निधिवदाकाङ्क्षाप्यविनाभावनिमित्ता किमिति नेष्यते, यद्धि येन विना न भवति नियोगतस्तेन तदाकाङ्क्ष्यते । क्रिया हि कारकाविनाभाविनी तं प्रतीत्य कारकं जिज्ञासते । एवं कारकमपि बुध्वा क्रियामिति, तदयुक्तम् । जिज्ञासाविरामानुपपत्तेः यथा ह्यविनाभावेन कारकजिज्ञासाप्युपपद्यते अतः प्रयोजनाभावात् कारकातिरिक्तमन्यन्न जिज्ञास्यते, तर्हि क्रियामात्रावगमेऽपि यत्र कारकज्ञानेन प्रयोजनं नास्ति तत्र जिज्ञासा न स्यात् । अनुष्ठेयतया हि क्रियायामवगतायां कारकोपादानमन्तरेण तदनुष्ठानानुपपत्तेः । कारकज्ञानात् प्रयोजनवद्वर्तमानापदेशादौ त्वननुष्ठेयतया नास्ति कारकज्ञानेन प्रयोजनम् ॥

अथ च तत्रापि वाक्यमपरिपूर्णं मन्यन्ते साकाङ्क्षार्थाभिधायितया चापरिपूर्णता । अत एव च तत्राध्याहारमपि कुर्वन्ति, तत्रापि चानुष्ठेयावगतिस्तत्रापि निश्शेषकारकाजिज्ञासा स्यात् । तथा च देवदत्त गामानयेति करणानुपादानादपरिपूर्णता स्यात् ॥

अथैककारकज्ञानेनापि तावदनुष्ठानोपपत्तेर्न कारकान्तरजिज्ञासा देवदत्त गामभ्याज दण्डेनेति प्रयुक्तेऽपि दण्डशब्दे तदाकाङ्क्षा न स्यात् । ततश्चानाकाङ्क्षितत्वात्तस्य तदन्वयो वाक्यार्थे न स्यात् ॥

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अथ दण्डपदोच्चारणात्तत्राकाङ्क्षा परिकल्प्यते ; अन्यथा दण्डपदस्यानन्वये तत्पदोच्चारणमनर्थकं स्यादिति । एवमरुणयैकहायन्या पिङ्गाक्ष्या सोमं क्रीणातीत्यन्वयप्रसङ्गः । न हि वेदपदोच्चारणेनानर्थकेन भवितव्यमिति किञ्चन प्रमाणमस्ति । न च तत्राकाङ्क्षोदये किञ्चित्कारणान्तरमस्तीति सोमं क्रीणातीत्यतोऽधिकस्यानन्वयिता स्यात् । अतो नाकाङ्क्षायामविनाभावो निमित्तत्वेनाश्रीयत इति । आकाङ्क्षावच्च सन्निधावपि सन्निधापकक्रमेणैव क्रमो वेदितव्यः । तदनुसारेण चान्विताभिधानमपि तथैवेति ॥

सन्निधिश्शब्दजन्मैव व्युत्पत्तौ नोपलक्षणम् । अध्याहृतेनाप्यर्थेन लोके सम्बन्धदर्शनात् ॥
सहसैव न सर्वेषां सन्निधिः प्रतियोगिनाम् । सन्निधापकसामग्रीक्रमेण क्रमवानसौ ॥
यथायथा सन्निधानं जायते प्रतियोगिनाम् । तथातथा क्रमेणैव शब्दैरन्वितबोधनम् ॥

## ॥ योग्यता ॥

अथ का योग्यता ? यदेतत्सम्बन्धार्हत्वं नाम । तद्द्विधा—मुख्यार्थद्वारकं जघन्यार्थद्वारकं च । कः पुनर्मुख्यार्थः जघन्यार्थ इति ? श्रवणसमनन्तरं साक्षादेव शब्दाद्यत्रार्थः प्रतीयते स मुखमिव प्रथमं भवतीति मुख्यः । यस्तु गुणसम्बन्धादिव्यवधानेन शब्दादवगम्यते स जघनमिव पश्चाज्जायत इति जघन्यः । तयोर्मुख्यस्त्रिधा—जात्यादिमुख्यः, आकृत्यादिमुख्यः, भ्रान्त्यादिमुख्यश्च । तेषु जातिगुणक्रियाभिधायिभिः शब्दैर्योऽभिधीयते स जात्यादिमुख्यः । गौः पदा न स्प्रष्टव्या, शुक्लां गामभ्याज, पाचकमानय यज्ञदत्तं भोजयेति । सएवाऽऽलेख्यप्रतिकृतिप्रतिमाप्रतिबिम्बादिविषयः आकृत्यादिमुख्यः । यथा—भवनभित्तौ कामं चित्रिताः गावः क्रियन्तां, विष्णुं पञ्चामृतेन स्नपय, अप्सु चन्द्रमसं पश्येति । विपर्ययाध्यासविवर्तविपरिणामादिविषयो भ्रान्त्यादिमुख्यः । कोयंकोयमनाकाशे शशी, स एष बालाबाहुमूले बालचन्द्रमाः, तदेतदलातचक्रं विस्फुरति, तदिदमिन्द्रायुधं विलोक्यत इति । जघन्योऽपि त्रिधा—गौण उपचरितो लाक्षणिकश्च । ययोर्द्रव्यवाचिभिस्सामानाधिकरण्यप्रयोगे विशेषणविशेष्यभावः प्रतीयते स गौणः । यथा—गौर्बाहीकः, सिंहो माणवकः, तृणं लक्ष्मीः, गोष्पदं समुद्र इति । समानाधिकरणशब्दप्रयोगे योऽन्यविशेषणत्वेन प्रसिद्धः कुतश्चिन्निमित्तादन्यविशेषणत्वं लभते स उपचरितः । यथा—शुक्लं यशः, मधुरं वाक्यम्, सुरभि शीलं सुभगः स्वभाव इति । यस्तु शब्दोपात्तेनार्थेन क्रिया . . . . समर्थनाविनाभावात् सहचरणादि . . . . लाक्षणिको यथा यष्टीः प्रवेशय, छत्रिणो गच्छन्ति, मञ्चाः क्रोशन्ति, गङ्गायां घोषः प्रतिवसतीति ॥

नन्वेवं सति जात्यादिशब्दार्थाः सर्वे लाक्षणिका भवेयुः, तेऽपि हि स्वरूपेण क्रियां साधयितुमपर्याप्तैर्जात्यादिभिरविनाभूतव्यक्तिरूपतयोपलक्ष्यन्ते । नैवम्, जात्यादिप्रवृत्तिनिमित्तानां

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियासिद्धिषु गङ्गातीराद्यर्थानामपि समन्वयो दृश्यते । नैवम्; गौरालभ्यतां प्रोक्ष्यतां विशस्यतामित्यादौ अनपेक्षितव्यक्तीनां गोत्वादिजातीनामपि । एतेनारुणया क्रीणाति, अभिक्रामं जुहोतीत्यादौ गुणक्रिययोर्द्रव्यव्यवधानेनापि क्रियासमन्वये द्रव्याणामलाक्षणिकत्वमेवेत्यभिहितं भवति ॥

ननु च जातिगुणक्रियापाकेन जीवतीति नैवम् । अत्र जात्यादीनां विशेष्यते न द्रव्यरूपत्वात् । तदुक्तम्—

वस्तूपलक्षणं यत्र सर्वनाम प्रयुज्यते । द्रव्यमित्युच्यते सोऽर्थो भेद्यत्वेन विवक्षितः ॥

कृदभिहितश्च भावो द्रव्यवत्प्रकाशत इति । एवं च मुख्यवृत्तीनां जघन्यवृत्तीनां च शब्दानां प्रयोगे योऽर्थो यत्र सम्बन्धित्वेन उपलम्भात् । यद्येवं यजेत स्वर्गकाम इत्यादौ स्वर्गयागयोः सम्बन्धित्वेनानुपलम्भात्कथं योग्यत्वेनावधारणम्, अनवधारितयोग्यतयोश्च कथमन्विताभिधानम्? उच्यते—

सामान्येनैव योग्यत्वं लोके यदवधारितम् । यदन्विताभिधानस्य व्युत्पत्तावुपलक्षणम् ॥
साध्यसाधनयोर्लो . . . . . . . . . . . . ॥

सामान्यात्मकसामर्थ्याख्यसम्बन्धो मुख्यता व्यपेक्षेत्युच्यते । व्यपेक्षावतां पदार्थानां मिथः सम्बन्धिरूपता सामर्थ्यम् । तत्त्रिधा—भेदः, संसर्गः, उभयं च । तत्र राज्ञो भृत्य इत्यादौ यदा तावदेतदवधृतं परायत्तार्थवृत्तिरयं भृत्यशब्दो न स्वतन्त्रार्थवृत्तिरिति, तदा सामान्येन स्वामिसंसर्गस्यावधृतत्वात् स्वामि . . . . यति स्वयं स्वाम्यन्तरव्यवच्छेदो भेद इत्युच्यते । यदा तु राजपुरुष इत्यादावनवगतपरायत्तभावस्य पुरुषस्य स्वामिसम्बन्धद्योतनाय राजशब्दः प्रयुज्यते तदा विशेषसंसर्गस्य शब्दोपादानत्वादनवकाशो विशेषान्तरसम्पातः तदा ह्यशब्दा स्वाम्यन्तरानिवृत्तिरर्थादवसीयते । यदात्वर्थावगतसामर्थ्ययोः प्रतिपत्तिनिबन्धनयोरभेदापेक्षायां समासावेव भेदसंसर्गेण सामर्थ्यं भवति । यदा नीलं च तदुत्पलं च नीलोत्पलमिति । यत्र तु न सम्बन्धयोग्यता न तत्र सामर्थ्यं यथा—क्लिद्यते वस्त्रं नीलमुत्पलमालिकर्णे, नेह कश्चित्पुरुषः, व्याघ्रः सरति, पल्लीं पश्य, सखे कष्टं दूरं गच्छ त्वं, यूपाय दारु शोभनं, शैलान्निवर्तस्व, व्याघ्राद्भयं देवदत्तस्य, यज्ञदत्तस्य भार्या, राज्ञः पुरुषः, ब्राह्मणस्य सक्तत्वं, अक्षेषु शौण्डः, पिबति पानागारे, अयं दण्डः हराऽनेन फलानि, अन्तरा त्वां च मां च कमण्डलुः, अन्तरेण तक्षशिलां पाटलिपुत्रं च स्रुघ्नस्य प्राकार, ओदनं पच तव भविष्यतीति । अत्र प्रथमेष्वञभिन्नवाक्यत्वात् तिङ्ङतिङ इति निघातो न भवति । कः पुनरयं सम्बन्धो नाम? अहानिर्व्यपेक्षा व्यतिषङ्ग इति । तथा हि—सम्पूर्वो बध्नातिरह . . . गर्गैः सम्बन्धोऽस्ति नोवत्सैः सम्बन्ध इति । तथा व्यतिषङ्गे वर्तते, योऽयसा रज्ज्वा वा कीलादौ व्यतिशतौ

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

व्यतिषक्तो भवति स सम्बन्ध इत्युच्यते, तत्र यदा सम्बन्धस्याहानिरर्थः तदा ऊरीकरोति कारि-
काकरोति शुक्लीकरोति पटपटाकरोति चकासाञ्चकार, विदाङ्कुर्वन्तु लुनीहिलुनीहीत्येवायं लुनाति
भ्राष्ट्रमट मठमट खमादयः प्रयोगा भवन्ति। न ह्येते कदाचिदप्यन्योन्यं जहतीति। यदा सम्बन्धश-
ब्दस्य व्यपेक्षा अर्थः तदा गुरुकुलं देवदत्तस्य, सूर्यमपि न पश्यन्ति असूर्यम्पश्या राजदाराः, किञ्चि-
दपि न कुर्वाणः अकिञ्चित्कुर्वाणः, शङ्कुलया कृतः खण्डः शङ्कुलाखण्डः, दध्नोपसिक्तओदनो
दध्नोदनः, अश्रेणयः श्रेणयः कृताः श्रेणीकृताः, कण्ठे कालोऽस्य कण्ठेकालः, केशेषु च गृहीत्वा प्रवृत्तं
युद्धं केशाकेशीत्यादयः प्रयोगा भवन्ति। एतैः समासावस्थायामपि देवदत्तादीनपेक्षन्ते। यदा तु
सम्बन्धशब्दस्य व्यतिषङ्गोऽर्थस्तदोपकुम्भं, नीलोत्पलं, गौगर्भिणी, पूर्वकायः, सप्तर्षयः, प्लक्षन्यग्रोधौ,
कष्टश्रितः, काकः कृष्ण, इति च मिथो विशेषणविशेष्यभावेन व्यतिषज्यन्ते। यत्र हि पूर्वोत्तरपदयोः
सङ्गतार्थता तत्सामर्थ्यं सम्बन्धः। स विशेषणविशेष्यभाव इत्याख्यायते, तत्र चैकस्य प्राधान्यमन्यस्यो-
पसर्जनत्वं। न हि प्रधानयोरुपसर्जनयोरेव वा सम्बन्धः कल्पते प्रधानस्यापरार्थत्वादुपसर्जनस्य
परार्थत्वात् सम्बन्धोपलक्षितपदद्वयं परस्परं प्रधानोपसर्जनभावेन विशेषणविशेष्यभावमासादयति।
स च प्रधानोपसर्जनभावः कदाचिच्छब्दनिबन्धनः कदाचिदशब्दोपादानः सामर्थ्येनावसीयते। शब्द-
निबन्धनो यदा वैयधिकरण्यं उपसर्जनशब्दा हि प्रधानोपकाराय परिणतं स्वार्थमाचक्षाणाः सम्बन्धि-
नमभिदधानाः प्रथमयैव संस्क्रियन्ते अशब्दोपादानो यदा सामानाधिकरण्यं अपरार्थतया हि प्राति-
पदिकस्याव्यतिरेके वृथाविर्भवति शब्दैस्तदुभयोर्द्रव्यशब्दतायामुपपद्यते, सा च गुणादीनां मतु-
ब्लोपादिना भवति। सोऽयं विभक्तिभेदतः सामर्थ्यतश्च प्रधानोपसर्जनभावो द्विप्रकारः कल्प्यमानो
मुख्यवृत्त्या उपचारवृत्त्या च। सम्बन्धविभक्त्या यथा—राज्ञः पुरुषः यूपाय दारु, कारकविभक्त्या तु
श्रूयमाणक्रियोऽश्रूयमाणक्रियश्च। श्रूयमाणक्रियो यथा—कष्टश्रितः, व्याघ्राद्भयम्। अश्रूयमाण-
क्रियो यथा—शङ्कुलयाखण्डः, अक्षेषुशौण्डः। मुख्यवृत्त्या यथा—नीलमुत्पलं, वीरपुरुषः। उपचा-
रवृत्त्या यथा—पुरुषो व्याघ्रः, सिंहो माणवकः। विशेषणविशेष्ययोरुपसर्जनप्रधानभावः सामानाधि-
करण्ये विभक्त्यभेदादशक्यः शब्दतोऽवधारयितुं, सम्बन्धसामर्थ्यात्तु प्रतीयते। न हि सम्बन्धः
प्रधानयोरेव वा सम्भवति॥

ननु च नीलमुत्पलमित्यैकैकपदप्रयोगादनवच्छिन्नानुपहिताश्रयमाधाराधेयसामान्यं पदद्वयात्तु
परस्परोपहितव्यवच्छेदं प्रतीयते, तत एव योग्यतादि सम्प्रति योग्यान्वितस्य वाचकमिति।
एवं च सरता स्मृतमेव अनन्वितमपि स्वरूपमन्वयवादिनोऽपि नायं नियमः श्रूयमाण एव
पूर्ववर्णजनितसंस्कारसहितोऽन्त्यो वर्णः प्रत्यायक इति। बालिशाधीतात् प्रागनवधृतार्था-
दपरिज्ञाने संस्कृतस्य पश्चात्स्मृतादपि भेदार्थावगमदर्शनात्, तेन स्मृत्यारूढस्यागमकत्वमदोषः,
श्रूयमाणेन हि पदेन प्रतियोगिसापेक्षत्वादन्विताभिधानस्य प्राक्सहकारि विरहादर्थोऽभिहितः
पश्चादभिधीयत इति किमनुपपन्नम्। तथा चाह—

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

पदजातं श्रुतं सर्वं स्मारितानन्वितार्थकम् । न्यायसम्पादितव्यक्ति पश्चादन्वितबोधकम् ॥
स्मृतिसन्निहितैरेवमर्थैरन्वितमात्मनः । अर्थमाह पदं सर्वमिति नान्योन्यसंश्रयम् ॥

कथं पुनरन्विताभिधायिना पदेन स्वरूपमात्रं स्मारयितुं शक्यते ? उच्यते—अन्वितस्याप्यभिधानस्वरूपमात्रस्य विद्यमानत्वान्नायं नियमः, यावद्गृहीतं तावत्स्वकर्तव्यं, अपित्वगृहीतं तु न स्मर्यत इति ॥

ननु च शब्दस्य स्वरूपाभिधानशक्त्यभावादप्रामाण्ये कथं शब्दश्रवणात्स्वरूपस्मरणं भवति ? उच्यते, न हि यत्प्रमाणं तत्स्मृतिकरणं, किन्तु प्रमाणमेव तत् । यस्य तु येन सह काचित्प्रत्यासत्तिः प्रतीतपूर्वा स तत्र संस्कारोद्बोधद्वारेण शक्नोत्येव स्मृतिमाधातुम् । अस्ति च स्वरूपस्यापि तदभिधेयान्तर्गत्या शब्देन सह प्रत्यासत्तिरिति शक्नोति तत्रापि स्वरूपप्रतीतिं जनयितुं । यथा निर्विकल्पकदशाप्रतीतमर्थस्वरूपमात्रमभिधेयमपि शब्दं स्मारयति तथा शब्दोऽप्यर्थमिति न किञ्चिदनुपपन्नम् । तथा चाहु;—

अन्वितस्याभिधानेऽपि स्वरूपं विद्यते सदा । तेन स्वरूपमात्रेऽपि शब्दो जनयति स्मृतिम् ॥
यथार्थेन प्रमाणेन स्वपदं स्मार्यते क्वचित् । पदेनाप्यप्रमाणेन तथार्थः स्मारयिष्यते ॥

नन्वेवं यथा स्मृतिसान्निहितत्वमाश्रित्यान्विताभिधानं पदैः क्रियते तथा स्मरणस्य प्रत्यासत्तिनिबन्धनत्वादनेकेषां च स्मरणीनां प्रत्यासत्तिसम्भवात्तेषु स्मृतिसन्निहितेष्वगृह्यमाणविशेषत्वादुखायां पचतीति नोखापचत्यर्थान्वितैव केवलाभिधीयेत, सा हि कलायनिर्वापादन्वितापि प्रतिपन्नेति स्मरणात्तदन्विताप्युखाभिधीयेत । तथा पचत्यर्थोऽपीष्टकादिकर्मकोऽवगत इति तत्स्मरणान्नोदनान्वितोऽभिधीयेतेति । तन्न शब्दैः स्मारितानामन्वयबोधकत्वाद्वृद्धव्यवहारेऽपि तथा दर्शनाद्य एव हि शब्देन स्मारितोऽर्थस्तेनैवान्विताभिधानमिति कलायनिर्वापाद्यन्विताप्यभिधीयत इति ॥

किञ्चान्वितार्थाभिधान एवेदं प्रतिनियतार्थान्वयित्वमुपपद्यते । यत्पदान्तराभिधेयतया स्मार्यते तदन्वितस्यैव वृद्धव्यवहारे वाच्यत्वदर्शनात्, यत्रापि चाध्याहारस्तत्रापि सन्निधापितांशेन विशेषान्विताभिधानलाभ इति लोक एव ज्ञानमिति न कश्चिद्दोषः । अपि च ज्ञानं तावदनेनायमर्थोऽन्वितो वाच्य इति तत्र यद्यनेनाप्यन्विताभिधानं स्यात् वाक्यभेदो भवेत्, न चासावेकवाक्यत्वसम्भवे न्याय्यः । तदुक्तम्—

सम्भवत्येकवाक्यत्वे वाक्यभेदश्च नेष्यते ॥ इति ।

यच्चोक्तमन्विताभिधानपक्षेऽन्वितस्यैव पदार्थस्याभिधानादङ्गुल्यग्रादिवाक्येष्वप्यन्वयः प्राप्नोति । तत्र स्मृतानामप्यर्थानामयोग्यत्वेनान्वयाभावादनभिधानमेव, पदार्थप्रतिपत्तिस्तु स्मृत्यैवोपपद्यत इति । यत्पुनः पुंवचसामर्थ्ये प्रामाण्याभ्युपगमात्पदानां वाचकत्वशक्तिरेव नावधार्यते । कुतोऽन्विताभिधान-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मित्येतदेव तावद्वक्तव्यं ; न वयं पुरुषवाक्यानामर्थे प्रामाण्यमभ्युपगच्छामः । येषामपि चाभ्युपगमस्तेषामपि न दोषः, यतः पदमन्विताभिधायकत्वेन व्युत्पन्नं व्यभिचाराशङ्कया लोके न तन्निश्चायकं पश्चादाप्तत्वालोचनयानुमितेऽर्थेऽनुवादकं तदिति प्रामाण्यमेव नासादयति ॥

ननु च वाचकत्वमपि जहाति ; पश्य बालो हि व्युत्पद्यमानः प्रयोज्यवृद्धव्यवहारस्य शब्दश्रवणानन्तरभाविनीं विशिष्टचेष्टानुमितां क्रियामान्वितशब्दकरणिकां तावदवगच्छति स तथाव्युत्पन्नः कदाचिदनन्वितार्थपदरचनामुपलभते। तत्रोपलभमानस्य तस्यैष विमर्शो जायते, सम्भाव्यमानानन्वितार्थपदवचनमिदं वाक्यं कथं वृद्धस्यार्थनिश्चयः प्राकृतवद्वृद्धस्यापि हि पुरुषायत्तवाक्येनान्वितार्थपदरचनाशङ्कायामयमेव समभवन्निति तस्यैवं विचिकित्सायां पुनरेष निश्चयो जायते। कृतमनेनायं वक्ता इत्थमवधारितोऽन्वितार्थान्येव पदानि प्रयुङ्क्ते। तथाविधपदप्रयोगश्च नास्यानुपलब्धेऽन्वय उपपद्यत इत्येवमन्वयोपलम्भमनुमायानेनान्वयो निश्चितः, निश्चितेवान्वये वाक्यमेतदनुवादभूतमध्येति। एवंचेदनुवादकतया तस्यार्थस्य तद्वाक्यं वाचकमेवेति वाचकशक्तिज्ञानपूर्वकं नानर्थमिति मन्यते। यदि परं मया प्रागनुमापुरस्सरोऽर्थनिश्चयोऽस्येति नावगतं, यापि चेयमस्यानिश्चितेऽन्वये विशिष्टवक्तुर्ज्ञानानुमा, साऽपि पदानां स्वरसतः सामान्यावगमादेव नोपपद्यते, किन्तु विशेषावगमात्। न च शक्तेरन्यः पदानां विशेषोऽवकल्पते। अतो मयेवानेनाप्यमीषां पदानां वाचकशक्तिरवधारिता। तेन विशिष्टान्वयवाचकपदप्रयोगात्तद्विषयं वक्तुः पूर्वं विज्ञानमनुमितवानिति ॥

नन्वनन्तप्रतियोग्यन्वितस्वार्थबोधनविषया अनन्ता एव शब्दस्य शक्तयः परिकल्पयितव्याः स्युः। अभिहितान्वयवादेत्वेकास्मिन्नर्थे शब्दस्यैकैकैव शक्तिरिति तन्न। एकयैवाकाङ्क्षितसन्निहिततत्तत्पदगतस्वार्थाभिधानशक्त्या प्रतियोगिभेदेन चक्षुरादीनामिव कार्यभेदोपपत्तेः। यथैकयैव दर्शनशक्त्या चक्षुः घटादिप्रतियोगिसहायभेदान्नानाज्ञानानि जनयति, तथा शब्दोऽपि प्रतियोगिभेदादिति मन्तव्यम्।

पदै रेवान्वितस्वार्थमात्रोपक्षीणशक्तिभिः। पदार्था बोधिता बुद्धौ वाक्यार्थेऽपि तथासति ॥

इति। एवं चैतदप्युपपद्यते संहत्यार्थेऽर्थमभिदधति पदानि एकार्थपरः पदसमूहो वाक्यमिति सङ्घातार्थपारतन्त्र्यात्पदानां स्वार्थाभिधानं न सम्भवति। न च सङ्घातकार्यमकुर्वन्ति क्वचिदपि पदानि दृश्यन्ते, न ह्येषां सङ्घातकार्ये स्वकार्ये च पृथक्प्रयोगो विद्यते, सर्वथा सङ्घातकार्य एव प्रयोगान्नैवं संहतानां सङ्घातकार्यवत्स्वकार्यस्याप्युपलम्भात्, यथा शकटाङ्गानामयमंशोऽनेन कुतोऽयमनेनेति। न च शकटाङ्गान्यपि पृथक्प्रयुज्यमानानि स्वकार्यं कुर्वन्ति दृश्यन्ते। किं पुनः पदानां स्वकार्यं स्वार्थप्रतिपत्तिः? किं वा सङ्घातकार्यं यासौ वाक्यार्थप्रतिपत्तिः? तच्च पदानामेकैकस्य कृत्स्नफलपर्यन्तव्यापारकारित्वात्। तथा ह्येकैकस्मिन् सति कृत्स्नफलपर्यन्तो व्यापारो निवर्तते एकैकेन विना निवर्तत इति एवं कृत्स्नकारिभवति किमत्र पदान्तरेण

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियत इति चेत् सर्वकारकेष्वपि तुल्योऽयमनुयोगः। तत्र यथा संहत्य कुर्वन्ति कारणादीनि कार्याण्युच्यन्ते तथा संहत्याप्यभिदधति पदान्यभिधायकान्युच्यन्ते ॥

नन्वाकाङ्क्षासन्निधियोग्यताभिश्चेदन्वयोपपत्तिरभिहितान्वय एवास्तु किमन्विताभिधानेन ? पदेषु ह्यनन्वितमपि स्वमर्थमभिधायोपरतव्यापारेष्वाकाङ्क्षादिभिः पदार्थानामन्वयप्रतीतिर्भविष्यतीति । उच्यते, कस्येयमाकाङ्क्षा शब्दस्यार्थप्रमातुर्वा ? शब्दार्थयोस्तावदचेतनत्वान्नाकांक्षा, प्रमातुस्त्वयं तत्र वाचो युक्तिः, शब्दः शब्दान्तरमाकाङ्क्षत्यर्थोऽर्थान्तरं स्वतन्त्रस्याऽऽकांक्षा न प्रमाणं, पुरुषेच्छाया वस्तुस्थितेरयुज्यमानत्वाच्छब्दप्रमाणपृष्ठभावित्वं, नत्वर्थेषु पुरुषस्याकाङ्क्षा भवन्ती भवत्यर्थानां संसर्गहेतुरित्येवं शब्दस्यैवायमिषोरिव दीर्घदीर्घो व्यापारः उपरतव्यापारे तु शब्दे पुरुषस्याकाङ्क्षामात्रं न सम्बन्धकारणं अशाब्दत्वप्रसङ्गात्साक्षाच्च शाब्दत्वसम्भवे व्यवधानाश्रयणस्यायुक्तत्वात्, अतो नान्यदन्विताभिधानात् संसर्गप्रतीतेस्साधनमस्ति। न खल्वानयगांशुक्लामित्यादि वाक्येषु संसर्गपदं प्रयुज्यते यतः संसर्गप्रत्ययः स्यात् । प्रयुज्यमानमपि दशदाडिमादिवाक्यवदनन्वितार्थमेव स्यात् । तस्मात्पदानामन्विताभिधानमेव न्याय्यमिति ॥

अभिहितान्वयवादिनः पुनरित्थमाचक्षते। स्वंस्वमर्थमभिधाय निवृत्तव्यापाराणि पदानि भवन्ति। अथेदानीं पदार्था अवगताः आकाङ्क्षासन्निधियोग्यताभिरन्वयमुपयन्तो वाक्यार्थमवगमयन्ति ॥

नन्वेवमशाब्दः स्यात्, पारम्पर्येणापि प्रतिपादयतां पदानां वाक्यार्थे सामर्थ्यस्याविघातात् । तदुद्देशेन प्रयुक्तानां पदार्थप्रतिपादनमवान्तरव्यापारो भविष्यति । न चावान्तरव्यापारस्य कारकान्तरेष्वपि व्यवधायकत्वमिष्यते । तदाह ॥

न विमुञ्चन्ति सामर्थ्यं वाक्यार्थेऽपि पदानि नः। तन्मात्रावसितेष्वेषु पदार्थेभ्यः स गम्यते ॥

वाक्यार्थमात्र एतेषां प्रयुक्ते नान्तरीयकम्। पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥

इति ॥ तत्र च क्रियापदानि क्रियामात्रमभिदधति, कारकपदानि तु कारकमात्रम्, न वा मिथस्संसर्ग न ह्येकपदो च्चारणकाले पदान्तरार्थप्रतीतिरस्ति। नचाप्रतीयमानेनापि संसर्गप्रतीतिरस्ति। ननु च वृद्धव्यवहारात्पदानां अर्थावधारणम् । वृद्धाश्च वाक्येनैव व्यवहारन्ति । न पदेन, वाक्येवान्वितानामेव पदार्थानामुपलम्भात्, कथमुच्यते क्रियामात्रं पदेभ्योऽवगम्यत इति ? उच्यते, सत्यं वाक्येभ्य एव पदानां व्युत्पत्तिः, सा तु किमेकघटनाकारकसंहतवाक्यार्थनिष्ठा, किं वा पदार्थपर्यन्तेति चिन्तनीयम् ? पूर्वस्मिन् पक्षे प्रतिवाक्यं व्युत्पत्तिरपेक्षणीया । सा चानन्त्यव्यभिचारादिभिर्बहुप्रमादा । पदार्थपर्यन्तायां च व्युत्पत्तौ नूनं निर्धारणीयमियानस्य पदस्यार्थ इति । अन्वितार्थाभिधानवादिनोऽपि नियतः . . . विकरणीयः पदार्थनियमानपेक्षणे हि गामानयेति विवक्षुरश्वपदमपि निमित्ततयोपाददीत । न हि तस्यानपेक्षितपदपदार्थप्रविभागो

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वैयाकरणवद्वाक्यार्थप्रत्यय उदेति । तस्माद्यावानावापोद्वापपर्यालोचनया पदस्यार्थो निर्धार्यते तावानेव तस्यार्थ इति ।

नन्वाकाङ्क्षितयोग्यसन्निहितार्थोपरक्तस्तस्यार्थो भवतु सर्वदा संहत्य व्याप्रियमाणत्वात् । नैवम् ; सर्वदा संहत्य व्याप्रियमाणस्यास्तु तावान्, यावत्यभिधात्री तस्य शक्तिः । कीयती च तस्याभिधात्री शक्तिः यावन्तमर्थमाकाङ्क्षितैर्योग्यैः सन्निहितैश्च संयुज्यमानं वियुज्यमानं च न मुञ्चति क्रियामात्रं कारकमात्रं च । अतस्तावत्येवाभिधात्री शक्तिरन्वयव्यतिरेकाभ्यां तस्य निर्धार्यते । तदुक्तं, 'अव्यभिचाराद्धि तन्मात्रमेव तदर्थो नाधिकं व्यभिचारात्' इति । नन्वत्र शक्तित्रयकल्पनागौरवलक्षणो दोषः प्राप्नोति । पदार्थानां हि शब्दान्यता प्रमाणदृष्टेति शब्दाभिधेयानां तेषां तदवबोधकत्वशक्तिः कल्पनीया । तस्याश्चोत्पत्तौ शब्दसंस्पर्श एव हेतुरित्याश्रयणीयम् । शब्दो हि विशिष्टार्थप्रतिपत्तिपरतया लोके प्रयुज्यमानो दृष्टः, न चासौ साक्षाद्वाक्यार्थप्रतिपादने समर्थ इति पदार्थानवान्तरव्यापारीकरोति । ते च यद्यन्यान्वय-बोधनसमर्थास्तदा तेषामवान्तरव्यापारता स्यान्नान्यथा । पदार्थानामपि विशिष्टार्थावबोधपर-शब्दसंस्पर्शादेषा शक्तिराविर्भवतीति शब्दस्यापि पदार्थगतशक्त्याधानशक्तिरनुमन्तव्येति । स्यादेतदेवं, यदि मानान्तरावसेयानां पदार्थानामन्योन्यान्वयावगमसामर्थ्यं नावधार्यते । अवधार्यते च श्वैत्यस्यानवधारिताश्रयविशेषस्याप्रत्यक्षोपलब्धस्याश्वस्य चाप्रतिपन्नगुणविशेषस्य हेषाशब्दानुमितस्य श्वेतोऽश्वो धावतीत्यन्वयः । तदाह—

पश्यतः श्वैतिमं रूपं हेषाशब्दं च शृण्वतः । पदनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥

दृष्टावाक्यविनिर्मुक्तेति । अरूपमित्यव्यक्तरूपम् । तेन गुणविशेषो न प्रत्यक्षेणावसीयत इति उक्तं भवति । अत्रेदं पर्यनुयुज्यते किं येन पुरुषेण श्वैत्यसमानाश्रयौ हेषाध्वनिपदनिक्षेप-शब्दाववगतौ तदपादानध्यवसायस्तस्यापीति किमतः? यदि तावदप्रत्याकलितहेषाध्वनि-पादविहारनिर्घोषापादानस्येत्युच्यते तदा प्रतीतिविरोधः स ह्येवं प्रतिपद्यते भवितव्यमस्मिन् देशे नूनमश्वेन भाव्यं केनचिद्धावतेति ।

अथाश्वसम्बन्धिनमेव खुरपुटटङ्काररवमभ्यासपाटववशादवैति तदासावश्ववर्तिनीं वेगवतीं गतिमनुमिनोति न पुनः केवलामेवावगम्य तास्मिन् प्रतिबुध्यते, योऽप्यस्मिन् देशे नास्त्यन्योऽश्व इति निश्चित्य पारिशेष्यादपादानानध्यवसायेऽपि हेषाध्वनेः श्वैत्यसमानाधिकरणमश्वत्वं अन्तर्गृह-दर्शनमिव बहिर्भावावगतावर्थापत्तिः । योऽश्वेतः स एवाश्व इति प्रमाणम् । यस्तु श्वेतत्वसमाना-धिकरणहेषाध्वनिखुरपुटटङ्काररवावध्यस्यति तस्याश्वत्वे वेगवति च गमने श्वेतद्रव्यवर्तिन्येकानु-मानं तत्सम्बन्धावगतार्थानां न कच्चिदनुमानार्थापत्तिव्यतिरेकेणान्वयबोधकत्वं प्रतीतम् ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अपि च यदि पदार्थावगतिमात्रादेवान्वयावगमस्तदा कस्मिन् प्रमाणेऽस्यान्तर्भाव इति वाच्यम् ? न तावच्छब्दे शब्दाभावात् पदार्थाभिधानावान्तरव्यापारेण हि यच्छब्दादन्वयज्ञानं न तच्छाब्दमित्यभिहितान्वयवादिनां सिद्धान्त इति कथं शब्दे अन्तर्भावः ? प्रमाणान्तराभ्युपगमे तु शब्दस्योच्छेदः शाब्दस्य पदार्थविषयतया प्रमापितस्यैव प्रामाण्यप्रसङ्गात् । तस्माच्छब्दानभिहितानां पदार्थानामन्यत्रादृष्टं वाक्यार्थावबोधनसामर्थ्यमपि परिकल्पयितव्यम् । तदाधानशक्तिश्च शब्दानामपीति कल्पनालाघवाच्छब्दानामेवान्वितस्वार्थबोधनशक्तिमात्रं कल्पयितुं न्याय्यम् ।

अथोच्यते, आकाङ्क्षासन्निधियोग्यतावन्तः पदार्था एव वाक्यार्थीभवन्ति, न पुनर्वाक्यार्थमवबोधयन्तीति । तदतिमन्दम् ; वाक्यार्थावगतेः कारणाभावप्रसङ्गात् । अनपायत्वे हि पदानामन्वयप्रतीतौ पदार्था अपि चेन्न कारणं अकारणीवान्वयप्रतीतिरापद्येत ।

स्यान्मतं ; क्रियापदेन कारकपदेन वा साकाङ्क्षेऽर्थे पूर्वाभिहिते यदेव पदान्तरेण योग्यं प्रतियोगिपदार्थान्तरं सन्निधाप्यते, तदेव तत्र सम्बन्धित्वेनावतिष्ठत इति । सत्यमेवम् ; अवगतिस्तु तत्सम्बन्धस्य किं निबन्धनेति वाच्यम् । अथ पूर्वपदार्थे साकाङ्क्षे यत्पदार्थान्तरमुच्चरति तत्सम्बन्धितयैव स्वार्थमुपनयति प्रत्याययत् । यथा प्रकृत्यर्थे पूर्वप्रतीते प्रत्यय उच्चार्यमाणः स्वार्थं तद्विशिष्टमेवाभिधत्ते तथा पदार्थान्तरमपीति । तदुक्तं– प्रकृतिप्रत्ययौ प्रत्ययार्थं सहब्रूत इति । प्रकृतिः स्वार्थं प्रत्ययार्थं विशेषणत्वेनोपनयन्ती प्रत्ययेन सह तदर्थमाहेत्यर्थः । तथाचोक्तम्—

नित्यं विशिष्ट एवार्थे प्रत्ययो यत्प्रयुज्यते। तत्पूर्वतरविज्ञातुः प्रकृत्यर्थविशेषणात् ॥ इति ।

अङ्गीकृतं तर्हि द्वितीयस्यान्विताभिधानं प्रथमस्य तथापि नास्तीति चेन्न, वाक्ये पदानां प्रयोगक्रमनियमाभावात् । यदेव कदाचित्प्रथमं तदेव कदाचिद्द्वितीयमिति सर्वपदानामन्विताभिधानमापतितम् । किञ्च प्रत्ययश्चेदन्विताभिधायी तदा तदविशेषात् पदानामन्विताभिधायिता किमिति नाभ्युपेयते, किमर्धवैशसेन ?

अत्राभिधीयते ; लाक्षणिका एव सर्वे वाक्यार्थाः, ततश्च न पदार्थानामन्वयबोधने शक्तिगौरवम् । अनन्वितावस्थो हि पदेनार्थोऽभिहितोऽन्वितावस्थां स्वसम्बन्धिनीं लक्षयति । अवस्थावस्थावतोर्हि संबन्धादवस्थावत्यवगते भवत्यवस्था बुद्धिस्था सर्वत्र संबन्धिनि दृष्टे सम्बन्ध्यन्तरे बुद्धिर्भवतीति सिद्धमेव । तेन नास्तिपदार्थानामन्वितबोधने शक्तिकल्पनेति ।

तदाह— वाक्यार्थो लक्ष्यमाणो हि सर्वत्रैवेति लक्ष्यते । इति ।

कथं पुनरियं लक्षणा ?

वाच्यस्यार्थस्य वाक्यार्थे सम्बन्धानुपपत्तितः । तत्सम्बन्धवशप्राप्तस्यान्वयो लक्षणोच्यते ॥

तद्यथा— गङ्गायां घोषः प्रतिवसतीत्यादिश्रौतस्य गङ्गार्थस्य वाक्यान्वयासम्भवात्तत्परित्यज्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तत्सम्बन्धवतः सन्निधेः कूलस्य वाक्यान्विततताध्यवसीयते । अत एव चाहुः– अनुपपत्त्या सम्बन्धेन च लक्षणा भवति । इह च गामानयेत्यादौ श्रौतस्यान्वयायोग्यत्वं, नाप्यन्वितावस्थस्यानयनसम्बन्धार्हता । अन्वितस्यान्वयान्तराभावात् ।

अपि च सर्ववाक्यार्थानां लाक्षणिकत्वे मुख्यस्यैव परित्यागापत्तिः । अथ माभूदेषा लक्षणा । किन्तु क्रियावगतकारकान्वयिनीचाऽऽत्मनो दशामवगमयत्यविनाभावित्वादित्युच्यते । शाब्दत्वं तावदित्थमपहस्तितं भवत्यनयाऽवगम्यस्य । किन्तु सामान्यतोदृष्टानुमानगोचरताऽभ्युपगता भवति । तथा च विशेषावगतिरनुपपन्नमूलाऽऽपद्येत ।

अथ विशेषान्वयं विना व्यवहारानवकल्पनादनर्थकं शब्दोच्चारणमिति तदाश्रयणम् । एवमपि प्रेक्षापूर्वकारिणां सार्थकमात्र . . . गुणां वचना . . . देत्वानर्थक्येन भवितव्यमिति प्रमाणाभावान्न शक्यते विशेषान्वयो वक्तुम् । न च लोकेप्यानर्थक्यमापद्यत इत्येतावता कारणेनोपायान्विनापि विशेषाध्यवसानं युक्तम् । न हि दग्धुकामस्यौदनोपादानमनर्थकमिति जलस्य दाहकशक्तिराविर्भवतीति काममानर्थक्यम् । न पुनः सामान्यतो दृष्टस्य विशेषान्वयिता ।

अथाकाङ्क्षितसन्निहितयोग्यान्वयपरता वृद्धव्यवहारेण पदानामवगतेति तदन्वयावगमः । तन्न, वृद्धव्यवहार एव कथं तत्परता पदानामुपायाभावे निर्वहत्विति चिन्ता ; सा हि पदानां पदार्थानां वा शक्तिकल्पनां विनानुपपन्नेति मन्यामहे । सा च पदानामेवोचिता । यदाह—

प्राथम्यादभिधातृत्वात्तात्पर्यावगमादपि । पदानामेव सा शक्तिः परमित्यवगम्यताम् ॥

प्रथमभावीनि हि पदान्यतिलङ्घिषु पदार्थेषु वाक्यार्थावबोधनशक्तिरहितानि, तेन तेषामभिधानशक्तिस्संप्रतिपन्नैवेति तस्या एवान्वयपर्यन्तता कल्पयितुं सुकरा । पदार्थानां तु बोधनशक्तिरेव, तेन धर्मिकल्पनातो धर्मकल्पना लघीयसीति अन्विताभिधानशक्तिःपदानामेव कल्पयितुमुचिता ।

किञ्च पदान्यभिधायकानीष्यन्ते । तत्र यदि स्वरूपमात्रविषयामेव बुद्धिमादध्युरभिधायकता हीयेत, तस्या बुद्धेः सम्बन्धग्रहणसमुपजातसंस्कारोऽवश्यं हि सम्बन्धस्मरणसिद्ध्यर्थं सम्बन्धिभूतार्थसाधारणसंस्कारोऽङ्गीकरणीयः । तस्मात्सम्बन्धग्रहणसमयानधिगतानन्वितार्थप्रतिपादनाभ्युपगम एव शब्दानामभिधायकतेति तामङ्गीकुर्वता पदानामन्विताभिधायिताऽऽश्रयणीया । यस्तु,

पदमभ्यधिकाभावात्स्मारकान्न विशिष्यते । भावनावचनस्तावत्तां स्मारयति लोकवत् ॥

इत्यार्यवचने दर्शनात् । अभिधानशक्तिवत्स्मारकतामेव पदानामभिधायकतां मन्यते । नापि तावत्पदानां वाक्यार्थपरताभ्युपगन्तव्या, अन्यथा वाक्यार्थस्याशाब्दत्वप्रसङ्गात् । एवं चेत्पदानामेव साक्षाद्वाक्यार्थबोधने शक्तिरस्तु । किं परम्पराश्रयणेन ? एवं च पदपदार्थेषु पदानां स्मारकत्वा-

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

तिरिक्तं येऽभिधायकत्वमाहुस्तेषां शक्तित्रयकल्पना । एका तावत्पदानामभिधानशक्तिः बोधशक्त्याधानशक्तिः पदार्थानामन्वयज्ञापनशक्तिरिति स्मारकत्ववादिनां त्वभिधानशक्तिं हित्वा शक्तिद्वयकल्पना । अन्विताभिधाने पुनरेकैव शक्तिरिति शक्तिकल्पनालाघवादन्विताभिधायीन्येव पदानीति न्याय्यं, न पुनरभिहितानामन्वय इति ।

अत्रोच्यते ; यत्तावत्पदार्थानामन्वयबोधकत्वे शक्तित्रयकल्पनागौरवमित्युक्तं तत् न सम्यक् प्रमाणान्तरावगतानां पदार्थानामन्वयावबोधकत्वदर्शनात् दृश्यते ।

पश्यतः श्वैतिमं रूपं हेषाशब्दं च शृण्वतः । खुरनिक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ॥

न चैतद्वाच्यं ; अर्थापत्त्यनुमानयोरयं व्यापारः, तद्विषयायाः प्रतीतेरिह विवक्षितत्वात् । यत्र ह्याकाङ्क्षादित्रयोपेताः पदार्था एवान्योन्यमन्वयं गमयन्ति, न तत्रार्थापत्त्याद्यनुमानयोर्व्यापारः । यथा— सुरभि चन्दनं, स्वादु सहकारमिति । न चात्र विशिष्टप्रतिपत्तौ प्रत्यक्षमेव व्याप्रियते ; चक्षुरादीनां रूपादिनैयत्येन परस्परविषयेणाज्ञातत्वात् । तथा हि— न गन्धाद्युपलब्धौ चक्षुः व्याप्रियते । नापि रूपाद्युपलब्धौ घ्राणमिति । अस्ति च सुरभिचन्दनमित्यादौ विशिष्टार्थप्रतिपत्तिः । एवं श्वेतोऽश्वो धावतीत्यत्रापि द्रष्टव्यम् ।

यच्चात्रोक्तं— कस्मिन् प्रमाणेऽस्यान्तर्भाव इति तेन न कस्मिंश्चित्प्रमाणेऽन्तर्भावः । किन्तु प्रमाणफलमेतत् । यदि वा पदार्थ एवात्र प्रमाणम् , तेषां च शब्द एवान्तर्भावान्न सप्तमप्रमाणापत्तिः । पदार्था हि शब्दात्प्रमाणान्तरतो वा प्रतिपन्ना आकाङ्क्षासन्निधियोग्यताभिः क्रियाकारकादिरूपेण चेत्प्रतीयमानाः संसर्गबुद्धिं जनयन्ति । शाब्दमेवैतद्भवति ।

यत्पुनराकाङ्क्षासन्निधियोग्यतावन्तः पदार्था एव वाक्यार्थीभवन्तीत्युपन्यस्य दूषितं, तत्र न वयमेवं ब्रूमः पदार्था एव वाक्यार्थीभवन्तीति । किन्तर्हि गमयन्ति । यच्च प्रत्ययदृष्टान्तेन द्वितीयपदस्यान्विताभिधायित्वेऽर्धवैशसमुक्तं तदपि नास्ति प्रकृतिप्रत्यययोरपि पदवदेवान्वयव्यतिरेकावधारितव्यतिरिक्तशक्तिकयोरभिहितान्वयस्यैवोपपत्तेः ।

पाकं हि पचिरेवाह कर्तारं प्रत्ययोऽप्यकः । पाकयुक्तः पुनःकर्ता वाच्यो नैकस्य कस्यचित् ॥
प्रकृतिप्रत्ययौ बूतः प्रत्ययार्थं सहेति च । भेदेनैवाभिधानेऽपि प्राधान्यादेवमुच्यते ॥

लाक्षणिकवाक्यार्थविषये तु मृषैवोपलब्धाः स्मः । नहि गामानयेत्यादौ लक्षणास्माभिरिष्यते । गङ्गायां घोष इत्यादौ न चैषा प्रतिषिध्यते, तेन न मुख्यलाक्षणिकवाक्यार्थप्रविभागानुपपत्तिः ।

यदपि क्रियाऽवगता कारकान्वयिनीमात्मनो दशामवगमयत्यविनाभावित्वादित्यस्मिन् पक्षे विशेषानवधारणमशाब्दत्वं च दोष इत्युक्तं तदप्ययुक्तमेव । न ह्यविनाभावतो विशिष्टा

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

वाक्यार्थप्रतीतिरिति मन्यामहे, अपित्वाकाङ्क्षासन्निधियोग्यताबलेन। आकाङ्क्षादिसद्भावे च शाब्दत्वं भवत्येवेत्यभिहितं पुरस्तात्।

यच्च प्राथम्यादिभिः पदानामेवान्वयबोधनशक्तिरस्त्विति वादितत्राभिधानशक्तिः पदानामिष्यत एव। अन्वयपर्यन्तता तु तस्या नेष्यते, वाक्यार्थप्रतीतेरन्यथाप्युपपद्यमानत्वात्। वाक्यार्थे हि तात्पर्यशक्तिः पदानां व्याप्रियते, नाभिधात्री। तच्च प्रथमदशां विविञ्चता भवतान्विताभिधानमभ्युपगतम्। तच्च न युक्तम्। सर्वत्राभिधात्र्याः शक्तेरविशेषेण प्रवृत्तौ पदार्थनैयत्यानवधारणे पदान्तरोच्चारणवैयर्थ्यादिदोषप्रसङ्गात्। पदान्तरानुच्चारणे त्वयेणान्वितमर्थमभिदधाति गोशब्दः। स नाभिधीयते तत्संसर्गश्चाभिधीयत इति प्रतिषिद्धम्। तदभिधाने तु तद्गतसंबन्धाभिधानमित्येकमेव गोपदं सर्वार्थं स्यात्। तस्मान्न सर्वत्राभिधात्री शक्तिः शब्दस्योपपद्यत इति नान्विताभिधानम्।

एतेन यदुक्तं पदार्थानां बोधनशक्तिरेव कल्प्या, पदानां तु कल्प्तानामेवान्वयपर्यन्ततेति धर्मिकल्पनातो धर्मकल्पना लघीयसीति अन्विताभिधानमेव युक्तमिति, तदपि निरस्तं भवति। यच्चोक्तं सम्बन्धस्मरणावगतसम्बन्धिप्रतिपत्तिसिद्धान्वितार्थगोचरैवाभिधानशक्तिरस्त्विति; तदप्यनुपपन्नम्। सम्बन्धस्मरणसव्यपेक्षस्य पदस्याभिधायकत्वात्। न चान्विते सम्बन्धस्मरणं भवति। प्रतियोगिनामानन्त्येन सम्बन्धस्य ग्रहीतुमशक्यत्वात्। तस्मान्निष्कृष्टपदार्थमात्रविषयत्वमेवाभ्युपगमनीयम्।

यत्त्वधिगतविषयत्वं दूषणमुक्तं तदिष्यत एव। अत एव न पदं पदार्थे प्रमाणं; अधिगतविषयत्वात्। अनधिगतार्थगन्तृ हि प्रमाणं भवति। न च पदस्य स्वार्थे स्मारकत्वमेव। यदाह—

पदमभ्यधिकाभावात्स्मारकं न विशिष्यते।

नतु स्मारकमेव भवति। तस्मात्पदानामभिहितान्वय एव न्याय्य इति।

उभयवादिनस्त्वेवमामनन्ति, सामान्यतोऽन्विताभिधानं विशेषतोऽभिहितान्वय इति। गोशब्दो हि स्वार्थमनवगतविशेषगुणक्रियासामान्यान्वितमभिधत्ते। तदेतत्सामान्येनान्विताभिधानम्। शुक्लादिगुणविशेषस्तु पदान्तरादवगम्यते। सोऽयं विशेषेणाभिहितान्वय इति।

अपि च क्रियाकारकसंसर्गरूपो वाक्यार्थः क्रियासम्बन्धमन्तरेण कारकत्वानुपपत्तेः। विशेषेषु चानन्त्यव्यभिचारादिदोषात्क्रियासामान्यान्वित एव। कारके कारकपदानां सम्बन्धग्रहणं, संबन्धानुसारेण चाभिधानात्। सामान्येऽन्विताभिधानमेव घटते। व्यवहारकाले च क्रियाविशेषान्वितानामेव कारकाणामुपलम्भात्। क्रियाणामपि च कारकविशेषान्वितानां प्रतीतेः शब्दव्यापारस्य सामान्यान्वयाभिधानेनैव परिसमाप्तेर्विशेषेष्वभिहितान्वय एव युज्यते। एवं च पदान्तरोच्चारणमपि न व्यर्थं भवति, अपेक्षितक्रियाकारकविशेषसमर्पकत्वेनार्थवत्त्वात्।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यद्यपि चात्र क्रियाकारकमात्रान्वयाभिधाने क्रियाकारकमात्रसम्बन्धित्वं क्रियाकारक-सामान्याभिप्रायम् । तथाहि ; स्वार्थमात्रोपादायिनः सर्वभेदान्प्रति योग्यता ; तदेवानुगुण्यमात्रं सामान्यं, न हि तथान्यथा सर्वथा वेति सामान्यमवस्थितरूपं किञ्चिदस्ति, सर्व एव ते विशेषा एव । तस्यास्तु सामान्यावस्थायां भेदस्य कस्यचिदनिरूपणादत्यागाच्च या सर्वभेदोपग्रह-योग्यतया परिप्लवमानार्थकल्पना तां सम्बन्धो विषयान्तरादवच्छिद्य विशिष्टे विषये नियमयति । तदुक्तम्—

सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः । तदर्थान्तरसंसर्गाद्भजते भेदरूपताम् ॥

भेदानाकाङ्क्षतस्तस्य सा पारिप्लवमानता । अवच्छिनत्ति सम्बन्धं तां विशेषे निवेशयन् ॥

अत एव च नानेकवाक्यार्थप्रतीतिः । सर्वेषां कारकाणां कर्मादिभावेन व्यवस्थितानामेव क्रिया-सम्बन्धात् । न च प्रथमश्रुतादप्यर्थप्रतीतिः, विद्यमानस्याप्यन्वयस्य सम्बन्धग्रहणमन्तरेणानुपलब्धेः । न चैकपदोच्चारणकाले सकलवाक्यार्थप्रतीतिः, तदानीं विशेषसमर्पकपदप्रयोगायोगात् ।

यद्येवं सामान्येनान्विताभिधानमेवास्तु, किं विशेषेणाभिहितान्वयेन । वृद्धव्यवहारप्रसिद्ध-सम्बन्धो हि शब्दोऽर्थस्य वाचकः । अन्वयव्यतिरेकाभ्यां च सम्बन्धावधारणम् । न च विशेषान्वयविषयौ तौ सम्भवतः । क्रियापदं हि कारकतासामान्यव्यभिचारिण्या क्रियया सहान्वयव्यतिरेकौ भजते, विशेषान्वये विशेषान्तरव्यभिचारात् । एवं कारकपदमपि । तन्न ; विशेषान्वयेऽपि आकाङ्क्षासन्निधियोग्यत्वोपाधिवशेन सम्बन्धग्रहणं सुकरमिति तदभिधायितैव युक्ता पदानाम् । यदि चासौ नेष्यते तदा वाक्यार्थप्रतीतिरेव नोपपद्यते, वाक्यार्थस्य विशेषान्वयरूपत्वात् ।

ननु च सामान्यान्वयोऽभिहितो विशेषस्य सामान्यस्यैव प्रत्येतुमशक्यत्वात् । मैवम् । यथा जातिर्व्यक्तिमाक्षिपन्त्यपि न प्रतिनियतं विशेषमाक्षिपति, तथात्रापि नियतविशेषाभावा-न्नियतविशेषात्मकवाक्यार्थप्रतीतिरुपपन्ना ।

ननु विशेषणमात्राक्षेपेऽपि य आकाङ्क्षितः सन्निहितो योग्यश्च विशेषः पदान्तरेण समर्प्यते स एव गृह्यत इति । तदतिक्रमे प्रमाणाभावात् । एतदपि न सम्यक् । सामान्यान्विता-भिधानवादिनो हि मते पदानि तावत्तन्मात्रपर्यवसितशक्तीनि ; पदार्थानामपिचान्वयबोधन-शक्तिर्नाङ्गीक्रियते । न च सामान्याक्षेपोऽपि नियतविशेषमास्कन्दति । तेनाकाङ्क्षिते योग्ये च विशेषपदान्तरेण सन्निधापिते तदन्वयबोधकप्रमाणाभावादन्वयो न प्रतीयते । अत आकाङ्क्षा-सन्निधियोग्यत्वान्यनुपयोगीन्येव ।

विशेषान्विताभिधानवादिनस्तु मते सम्बन्धग्रहणं प्रत्युपाधित्वेनानुप्रविष्टानि वाक्यार्थ-प्रतिपत्तावुपयुज्यन्ते । पदात्पदार्थः पदार्थान्तरसम्बन्धो बोद्धव्य इत्यस्यां व्युत्पत्तावुपाधित्वेन

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

योग्यत्वादिकर्मानुप्रविशद्विशेषान्विताभिधानवादिनः पक्षमपाकरोति, न सामान्याभिधानवादिन इति। किञ्च क्रियाकारकस्वभावालोचनयापि कारकमात्रेणान्वयसिद्धेर्वृथा सामान्यमात्रान्वयाभिधायकता शब्दस्याङ्गीक्रियते। तस्मात्तदुक्त एव न्यायः श्रेयान्, सामान्येनान्विताभिधानं, विशेषेणाभिहितान्वय इति। युक्तं चैतत्पदस्य प्रकृतिप्रत्ययात्मकत्वात्। पदे हि पचतीत्यादौ प्रकृत्यर्थः प्रत्ययार्थश्च सामान्यविशेषावगमरूपमन्योन्यान्वितं प्रतीयते। तत्र पचीत्येषा प्रकृतिः सिद्धसाध्यत्वादिधर्मविनिर्मुक्तं प्रत्ययार्थमात्रान्वययोग्यं पाकसामान्यमात्रमभिदधाति। अतिप्रत्ययस्तु पौर्वापर्यनियमात्र प्रकृतिवत्स्वतन्त्रः सामान्यमात्रे धियमादधाति। अपि तु प्रकृतार्थापेक्षयाचक्षाणः स्वार्थं विशेषमेव समर्पयतीति। अनुभववादिनः पुनरित्थं समर्थयन्ते नान्विताभिधानं किन्तर्हि समुदितैः पदैरेको वाक्यार्थः प्रत्याय्यते। स च गुणभूतेतरपदार्थसंसृष्टः कश्चित्पदार्थ एवेति।

ननु किमयमन्विताभिधानपक्षः पुनरुत्थापयितुमिष्टः। मैवम्; नेदमन्विताभिधानम्। किं तर्हि संहत्यकारिता पदानाम्? उच्यते, संहत्यकारिताप्यस्ति। न चान्विताभिधानम्। अन्वितमर्थं पदानि संहत्य संपादयन्ति। न त्वन्वितमभिदधति। किमिदानीं कुर्वन्ति वाक्यार्थं पदानि, घटमिव मृदादीनि? एतदपि नास्ति, ज्ञापकत्वात्तेषाम्। का तर्हीयं वाचो युक्तिः? संहत्यकारीणि पदानि, न चान्वितमभिदधतीति इमानि पदान्यन्वितं प्रत्याययन्ति, नाभिदधतीति नाभिधात्री शक्तिरन्वितविषया, किन्त्वन्वयव्यतिरेकावगतनिष्कृष्टस्वार्थविषयैव। तात्पर्यशक्तिस्तु तेषामन्वितावगमपर्यन्ता सह व्यापारात् व्यापारस्य तदीयनिराकांक्षप्रत्ययोत्पादनपर्यन्तत्वात्। तथाहि—

अन्यथैव प्रवर्तन्ते प्रत्यक्षान्युद्भवाद्धियः। अर्थं पूर्वमपूर्वं वा दर्शयन्त्यः पुरः स्थितम्॥
अन्यथैव मतिश्शाब्दी विषयेषु विजृम्भते। प्रतिपत्तुरनाकाङ्क्षप्रत्ययोत्पादनावधिः॥
अत एव पदं लोके केवलं न प्रयुज्यते। नहि तेन निराकाङ्क्षा श्रोतुराधीयते मतिः॥

नन्वभिधानव्यतिरिक्तः कोऽन्यः शब्दस्य कृत्स्नफलपर्यन्तप्रत्यायनात्मा व्यापारः। अस्ति कश्चिद्यः सर्वैरेव संसर्गवादिभिरप्रत्याख्येयः। नहि संसर्गोऽभिधीयते। प्रतीयते च वाक्यात्। ननु संसृष्टाभिधाने सति संसर्गः प्रतीयते, नान्यथा। नैतदेवम्, संहत्यकारित्वादेव संसर्गावगमसिद्धेः। न हि संसर्गकारणं न संसृष्टं च कार्यं क्वचिद्दृश्यते।

अपि च प्रकृतिप्रत्ययौ हि परस्परसापेक्षमर्थाभिधायिनौ। न च प्रकृत्या प्रत्ययार्थोऽभिधीयते, नियोगस्य धातुवाच्यत्वात्। न च प्रत्ययेन प्रकृत्यर्थोऽभिधीयते, यज्यादेर्लिङाद्यर्थानुपपत्तेः। न च तौ पृथक्स्वकार्यं कुरुतः। एवं पदान्यपि परस्परापेक्षीणि संहत्य कार्यं

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

करिष्यन्ति । न च परस्परस्यार्थमभिधास्यन्ति वाक्यान्यपि प्रकरणपतितान्येवमेव । तदुक्तम्—

प्रकृतिप्रत्ययौ यद्वदपेक्षेते परस्परम् । पदं पदान्तरं तद्वद्वाक्यं वाक्यान्तरं तथा ॥

इति । अयमेव च पक्षः श्रेयान् । संहत्यकारित्वं पदार्थानां सङ्कीर्णानाञ्च ।

निरपेक्षप्रयोगे या सकला कल्पना भवेत् । तदन्विताभिधाने तु पदान्तरमनर्थकम् ॥
संहत्यकारिपक्षे तु दोषो नैकोपि युज्यते । तेनायमुपगन्तव्यो मार्गो विगतकण्टकः ॥
अभिधात्री मता शक्तिः पदानां स्वार्थनिष्ठिता । तेषां तात्पर्यशक्तिस्तु संसर्गावगमावधिः ॥
तेनान्विताभिधानं हि नास्माभिरिह मृष्यते । अन्वितप्रतिपत्तिस्तु बाढमभ्युपगम्यते ॥

संहत्यकारित्वाच्च पदानां न स्वार्थ एव तात्पर्यार्थमुच्चारणं, अपितु प्रधानकार्यमेव कर्तुम् । तदुक्तम्—

वाक्यार्थमितये तेषां प्रवृत्तौ नान्तरीयकम् । पाके ज्वालेव काष्ठानां पदार्थप्रतिपादनम् ॥

तस्मान्नान्विताभिधानं नाप्यभिहितानामन्वयः । किन्तु यथोपन्यस्तपक्ष एव श्रेयानिति ।

तदेवमाकाङ्क्षासन्निधियोग्यतावन्तः पदार्थाश्चतुष्प्रकारमन्वयमनुभवन्तो वाक्यार्थीभवन्ति । ननु चायोग्यतायामप्यन्वयो दृश्यते, भवति पश्य मृगो धावतीति । नहि साध्यैकस्वभावायाः साध्यत्वं साधनत्वं च युज्यत इति । नैवम्; साध्यत्वेनैव साधनत्वात् । क्रियाभ्युपपत्तिरूपेण भवनस्वभावा साध्यस्वभावेनैव कर्मरूपा । यदेव चास्या अनिदन्तानिर्देश्यमपरिनिष्ठितं भवनं साध्यैकरूपं तेनैवैषात्र साध्यभावं साधनभावं च प्रतिपद्यत इति सिद्धतावभासः कुत इति चेत्? कर्तर्युत्पन्नो लकारस्तां सिद्धत्वेनावभासयति । यथा चोरस्य रुजतीति । धात्वर्थ एव रोगलक्षणः, कर्त्रन्तराश्रवणात् साध्यरूपेणैव कर्तृभावमनुभवत्सिद्धतयावभासते ।

यदि वा पदस्य न पदरूपमेवाधिकार्थता किन्तर्हि वाक्यरूपात्? तद्यथा— पुरुष इति पदकाले पुरुषो व्यतिरिक्त उच्यते । यदा तु राज्ञः पुरुष इति विशेषणसन्निधियोग्यस्तदाऽस्य व्यतिरेको भवति, पुरुषविशेषोऽयं राजपुरुष इति । एवं पचतीति नैतस्मात्पदरूपादेवाधिकार्थत्वम् । यदा तु भवतीति पदान्तरसन्निधिः तदा वाक्यकाले पुरुषस्येव व्यतिरेक उपजायत इति । यदि वा न कदाचिदपरा तदतिरेकिणी भवनक्रिया, कश्चिदपरो वा कर्ता विरोधहेतुरस्ति । अपितु सैव व्यपदेशिवद्भावन्यायेन क्रियारूपतां भवितृत्वं च दर्शयन्ती चकास्ति ।

अपि चैकस्याप्यर्थस्य विषयभेदेन द्विधर्मत्वं दृश्यते, यथा— राज्ञः पुरुषस्य पुत्र इति पुरुषः, शेषी च भवति शेषश्चेति राजानं प्रतिशेषी । अविचलितस्वार्थपुत्रार्थान्तरे विचलितस्वार्थः शेषत्वमापद्यते । एवं भवति पचतीत्यत्र भवतेः कर्तृत्वं च भविष्यति । पश्य

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मृगो धावतीत्यत्र च मृगे कर्तरि साध्यभावं प्राधान्यं चाजहत्सरणं दृशावङ्गत्वं साधनत्वं च गमिष्यतीति ।

अथवायमर्थः साधनमयं साध्यमिति रूपसिद्धिमात्रमेतत् । यथा पदे अयं प्रकृत्यर्थोऽयं प्रत्ययार्थ इति एक एवासावर्थो विशिष्टो वा खण्ड एव प्रतीयते । यथा मुण्डयति चर्चयतीति । अत्र मुण्डयति माणवकमिति मुण्डिः केशच्छेदनवचनः । अस्य तु व्युत्पत्तिः मुण्डं करोतीति करोतिं सामान्यप्रवृत्तं विशेषे मुण्डशब्दोऽवस्थापयति । करोतिविशेषोऽयं यस्मिण्णिजुत्पद्यते न करोतिमात्रम् । एवं चर्चां करोति चर्चयतीति । अतः केचिन्मुण्डिचर्चादींश्चुरादिषु पठन्ति मुण्डकेशखण्डनेषु मुण्डयति चर्चयतीति । एवं पश्य मृगो धावतीति । इदमत्र साधनपदमिदं साध्यमित्युत्प्रेक्षैषा । इदं त्वर्थसतत्त्वम् । नात्र सरणं, न दर्शनं, न मृगः । किन्तर्हि मृगकर्तृको दृशिकर्मा सरणविशेषोऽयं खण्डो वाक्यार्थ इति ।

एतेन पुत्रमिच्छति पुत्रीयतीत्यादयोऽपि व्याख्याताः । व्यपेक्षावतां समर्थानामन्वितार्थानां च पदार्थानां तिलतण्डुलवत् क्षीरनीरवत् पांसूदकवच्च यदविभागरूपेण भवनं स एकार्थीभावः । लक्षणं चैतत्समस्तं व्यस्तं च । तेन सापेक्षासमर्थसमासादीनामुपसङ्ग्रहः । कः पुनरस्य व्यपेक्षातो भेदः ? उच्यते, व्यपेक्षायां सङ्ख्याविशेषे व्यक्ताभिधानमुपसर्जनविशेषणं च योगः क्रमानियमो व्यवधानं यथेष्टमन्यतरेणासम्बन्धः शब्दान्तरप्रयोगश्च भवति । एकार्थीभावेत्वैकपद्यमैकशब्द्यमैकस्वर्यमेकविभक्तित्वमेकवद्भाव एकशेषः । अनेकविधानामैक्यमेकविधानं चानैक्यमिति । तद्यथा व्यपेक्षायां सङ्ख्याविशेषः राज्ञः पुरुषः, राज्ञोः पुरुषः, राज्ञां वा पुरुषः । एकार्थीभावे तु तदभावो राजपुरुषः । व्यपेक्षायां व्यक्ताभिधानं राज्ञः पुरुषः ; एकार्थीभावे तु राजपुरुष इत्यत्र लोणमध्यमपुरुषैकवचनं विभक्तिलोपो वेति नाभिधानव्यक्तिः व्यपेक्षायामुपसर्जनस्य विशेषणं, ऋद्धस्य राज्ञः पुरुषः । एकार्थीभावे तदभावः, राजपुरुषः । व्यपेक्षायां च योगः, राज्ञः पुरुषो ब्राह्मणस्य च । एकार्थीभावे तु राजपुरुषः, व्यपेक्षायां क्रमानियमो राज्ञः पुरुषः पुरुषो राज्ञः । एकार्थीभावे तु राजपुरुषोयमित्येव । व्यपेक्षायां यथेष्टमन्यतरेणाभिसम्बन्धः, राज्ञः पुरुषो भार्या वेति । एकार्थीभावे तु नियमतः पुरुषेणैव सम्बन्धो न भार्यया । व्यपेक्षायां शब्दान्तरप्रयोगो दध्नोपसिक्तं परिग्लानोऽध्ययनाय । एकार्थीभावे तु नैवम् , दध्योदनं पर्यध्ययन इति । एकार्थीभावे ऐकपद्यं यथा— आत्मना तृतीयः कण्ठे काल इति । ऐकशब्द्यं यथा— पितरौ भ्रातराविति । ऐकस्वर्यं यथा— चित्रगुः, ब्राह्मणकम्बल इति । एकविभक्तित्वं यथा— नीलोत्पलं, राजपुरुष इति । एकवद्भावो यथा— गवाश्वं, प्लक्षन्यग्रोध इति । एकशेषो यथा— अक्षा वृक्षा इति । अनेकविधानामैक्यं यथा— पुत्रमिच्छत्यात्मनः पुत्रीयति, मुण्डं करोति मुण्डयतीति । एकविधानामनैक्यं यथा— कंसवधमाचष्टे कंसं घातयति, पुष्यचन्द्रयोगं जानाति पुष्येण चन्द्रं योजयतीति । व्यपेक्षायां तु नैवमिति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

सोऽयमेकार्थीभावो व्यपेक्षावैलक्षण्येन विप्रथमानस्समानस्समासतद्धिताख्यादिषु त्रिषु त्रिधा विख्यायते, वाक्यतुल्यार्थः वाक्याधिकार्थः वाक्यान्यार्थ इति । वाक्यतुल्यार्थो यथा— वीरः पुरुषो वीरपुरुषः, कष्टं श्रितः कष्टश्रित इति । वाक्याधिकार्थो यथा— गुडेन मिश्रा धानाः गुडधानाः, शङ्कुलया कृतः खण्डः शङ्कुलाखण्ड इति । वाक्यान्यार्थो यथा— कुशं लातीति कुशलः, प्रकृष्टो वीणायां प्रवीणः ।

अथायं त्रिप्रकारोऽप्यनेकधा भिद्यते । तद्यथा— नित्यसमासः, नित्यासमासः, असमर्थसमासः, अलुक्समासः, सापेक्षसमासः, निरपेक्षसमासः, पूर्वपदप्रधानः, उत्तरपदप्रधानः, उभयपदप्रधानः, अन्यपदप्रधानः, अन्यथाप्रधानः, अन्यथोपसर्जनः, तिङ्समासः, प्रातिपदिकसमासः, उपपदसमासः, प्रादिसमासः, नञ्समासः, एकदेशिसमासः, सामान्यसमासः, विशेषसमासः, समानाधिकरणः, भिन्नाधिकरणः, उपमानसमासः, उपमेयसमास इति । तेषु

नित्यसमासो यथा— लोहितशालिः, गौरखरः, उद्दालपुष्पभञ्जिका, दन्तलेखक इति ।

नित्यासमासो यथा— अकिञ्चित्कुर्वाणः, अमाषं हरमाणः, अगाधमुत्सृताः, छात्राणां पञ्चम इति ।

असमर्थसमासो यथा— असूर्यंपश्या राजदाराः, अपुनर्गेयाः श्लोकाः, अश्राद्धभोजी ब्राह्मणः, अलवणभोजी भिक्षुरिति ।

अलुक्समासो यथा— स्तोकान्मुक्तः, आत्मना तृतीयः, पश्यतो हरः, कण्ठे काल इति ।

सापेक्षसमासो यथा— यज्ञदत्तस्य भ्रातृभार्या, विष्णुमित्रस्य गुरुकुलम्, चूतस्य फलरसः, प्रियायाः स्तनस्पर्श इति ।

निरपेक्षसमासो यथा— वर्षशतमायुरस्य शतायुः, शाकप्रधानः पार्थिवः शाकपार्थिवः, अश्वयुक्तो रथोऽश्वरथः, अश्रेणयः श्रेणयः कृताः श्रेणीकृता इति ।

पूर्वपदप्रधानो यथा— उपकुम्भम्, निर्मक्षिकम्, बहिर्ग्रामम्, पारेगङ्गमिति ।

उत्तरपदप्रधानो यथा— आरूढवानरो वृक्षः, ऊढरथोऽनड्वान्, चित्रगुर्देवदत्तः, मत्तमातङ्गं वनमिति ।

अन्यथाप्रधानो यथा— उन्मत्तगङ्गं, पञ्चकपालः, द्वित्राः, कृष्णशार इति ।

अन्यथोपसर्जनो यथा— शाकप्रति, प्राप्तजीविकः, गोगर्भिणी, अग्निस्तोक इति ।

तिङ्समासो यथा— अस्तिक्षीरा, एहिवाणिजा, अश्नीतपिबता, स्वादतमोदतेति ।

प्रातिपदिकसमासो यथा— दधिसेक्, चर्मक्रीती ।

उपपदसमासो यथा— कुम्भकारः, पङ्कजम्, उष्ट्रक्रोशी, सहयुद्धेति ।

प्रादिसमासो यथा— निष्कौशाम्बिः, उत्पश्यः, दुरासदः, सुप्रबोध इति ।

नञ्समासो यथा— अब्राह्मणः, अनेकः, अभार्यः, अपलाशीति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

एकदेशिसमासो यथा— चन्द्र इव मुखमस्याश्चन्द्रमुखी, मृगीव चपला मृगचपला, शस्त्रीव श्यामा शस्त्रश्यामा, अनन्येन सदृशी अनन्यसदृशी ।

उपमेयसमासो यथा— व्याघ्र इव पुरुषः पुरुषव्याघ्रः, करीव कलभः करिकलभः, शार्दूल इव राजा राजशार्दूलः, चन्द्र इव मुखं मुखचन्द्र इति ।

किं पुनरुपमानं किंवोपमेयं किं यदेवोपमानं तदेवोपमेयं, आहोस्विदन्यदुपमानमन्यदुपमेयम् ? किञ्चातः यदि यदेवोपमानं, तदेवोपमेयम्, उपमार्थो न घटते । न हि भवति गौरिव गौः, अन्यदुपमानमन्यदुपमेयं तथाप्युपमार्थो न घटते । नहि भवति गौरिवाश्व इति, एवं तर्हि यत्र किञ्चित्सामान्यं कश्चिच्च विशेषः तत्रोपमानोपमेये भवतः । किं वक्तव्यमेतत् । नहि कथमप्यनुक्तं गम्यते ? मानं हि नामानिर्ज्ञातज्ञानार्थमुपादीयते । यथा प्रस्थादिमानमनिर्ज्ञातस्य धान्यादेर्मेयस्यात्यन्तावच्छेदायोपादीयते तत्समीपेऽयं नात्यन्ताय मिमीते तदुपमानं ; यथा गौरिव गवयः । गौरस्य निर्ज्ञातः तर्हि यस्य गवयो निर्ज्ञातः स्यात् गौरनिर्ज्ञातः कर्तव्यः, तेन गवय इव गौरिति । बाढं कर्तव्यं, यथा भेदसादृश्याध्यासितमूर्तयः पदार्थाः परस्परमनियमेनोपमानोपमेयभावमधिगच्छन्ति । यथा चन्द्र इव मुखं कामिन्यां, मुखमिव चन्द्रो यामिन्यां, यत्र पुनर्भेदसादृश्याध्यासितमूर्तित्वं न, तत्रोपमानोपमेयभावोऽपि न । यथा गौरिव गौः, गौरिवाश्व इति ।

ननु य एते भेदसादृश्याध्यासिताः पदार्थास्ते नान्तरेण देशकालक्रियादिसम्पादितं विरोधं भवितुमर्हन्तीति सामानाधिकरण्यानुपपत्तिः । नैवम् ; यद्यप्युपमानमुपमेयं च परमार्थतो भिन्नं तथाप्युपमानशब्दा गौणीं वृत्तिमाश्रित्योपमेये वर्तमानास्तयोर्भेदं तिरोदधति ।

तथा हि ; यदा व्याघ्रादयः शौर्याद्यतिशयनिबन्धनमुपमानोपमेयसम्बन्धमनुभूय ततः
उपमानोपमेयसम्बन्धाद्यारोपिता भेदा उपमेये वर्तन्ते व्याघ्रसदृशोऽयं व्याघ्र इति, तदा पुरुषादि-
श्रुतिभिरभिन्नाधिकरणाः समस्यन्त इति किं पुनरुपमानोपमेयप्रतिपत्तिनिबन्धनेभ्य एव शब्देभ्यः
सादृश्यप्रतिपत्तिः ? उत तेभ्यश्चान्येभ्यश्चेति ।
किञ्चातो यदि तेभ्य एव पुरुषं व्याघ्रं च वीक्षस्वेत्यत्रापि स्यात् । इव प्रयोगवैयर्थ्यं च ।
अथ द्वितीयः पक्षः पुरुषो व्याघ्र इवेत्येव स्यात्, न पुरुषव्याघ्र इति । यथेच्छसि तथास्तु ।
अस्तु तावत्प्रथमः पक्षः । ननु चोक्तं पुरुषं व्याघ्रं च वीक्षस्वेत्यत्रापि सादृश्यप्रतिपत्तिः
स्यात् । इह हि पुरुषव्याघ्रयोर्वीक्षणक्रियासमावेशमात्रं विवक्षितम् । न सादृश्यम् । ननु
विवक्षातोऽपि सादृश्यप्रतिपत्ताविवादिशब्दोपादानमनर्थकम् । यत्र मुख्यवृत्तिव्यतिक्रमेण गौणीं
वृत्तिमाश्रित्योपमानशब्दा उपमेयविशेषेषु प्रयुज्यन्ते तत्रैव इवादिशब्दविकलाः सादृश्यं गमयन्ति ।
यथा कश्चिदव्याघ्रं पुरुषं व्याघ्र इत्याह, तेन मन्यामहे व्याघ्रसदृशोऽयं पुरुष इति । ततश्च व्याघ्र-
धर्माणां शौर्यबलवत्त्वादीनां व्याघ्रशब्दात्पुरुषे प्रतिपत्तिर्भविष्यति । यदा पुनरुपमानोपमेयशब्दा

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

मुख्यार्थप्रतिपत्तये विवक्षितोपमानोपमेयभावेषु वाक्येषु स्वरूपाभेदाद्धशङ्काः सादृश्यमवगमयितुं, तदाऽपेक्षन्ते द्वितीयमिवादिशब्दप्रयोगमिति किं पुनरिहोदाहरणं शस्त्रीव श्यामा शस्त्रीश्यामेति ।

ननु चात्र श्यामाशब्दोपात्तस्य धर्मस्योपमानोपमेयोस्तुल्यताद्योतनायेवशब्दः प्रयुज्यते । व्याघ्र इव पुरुष इत्यत्र तु सामान्यप्रयोगाभावात् कस्य पुरुषव्याघ्रयोस्साधारण्यमिवशब्देनाव-द्योत्यत इति ? उच्यते, शब्दः क्वचिदभिधावृत्त्या अर्थं बोधयति । यथा गुडशब्दो गुडद्रव्यं, क्वचिद्गमकवृत्त्या, यथा गुडद्रव्याविनाभाविमाधुर्यं । एवमिह व्याघ्रशब्देन व्याघ्राविनाभावि-शौर्यादिकं गमितं तस्य व्याघ्रपुरुषयोस्सादृश्यसिद्ध्यर्थमुभयाधिकरणताद्योतनमिवेन क्रियत इति । एतेन शस्त्रीश्यामेत्यापि व्याख्यातम् । अत्राप्यनुपात्तमपि देवदत्तेति गम्यते । क्व पुनरयं श्यामाशब्दो वर्तते शस्त्र्यामित्याह । केन तर्हीदानीं देवदत्तो गम्यते ? समासेन । यदाह— उपमानानि सामान्यवचनैः समस्यन्ते समानत्वं च साधारण्ये सति स्यात् । तत्तु देवदत्तमन्तरेण नोपपद्यत इति । यद्येवं शस्त्रीश्यामो देवदत्त इति न सिद्ध्यति । उपसर्जनस्येति ह्रस्वत्वं भविष्यति यदि तर्हि उपसर्जनान्येवंजातीयकान्यपि भवन्ति । तित्तिरिकल्माषीकुम्भकपाल-लोहिनीत्यनुपसर्जनलक्षणईकारो न प्राप्नोति । एवं तर्हि शस्त्र्यामेव शस्त्रीशब्दो वर्तते । श्यामाशब्दस्तु देवदत्तायाम् । एवमपि गुणो निर्दिष्टो भवति । बहवश्च शस्त्र्यां गुणाः सूक्ष्मा श्लक्ष्णा तीक्ष्णा पृथुः श्यामेति । अनिर्दिश्यमानस्यापि गुणस्य भवति लोके सम्प्रत्ययः । तद्यथा— चन्द्रमुखी देवदत्तेति । बहवश्चन्द्रे गुणाः, या चासौ प्रियदर्शनता सा गम्यते । यथा च व्याघ्रोऽयं पुरुष इति बहुष्वपि व्याघ्रगुणेषु शौर्यं बलवत्ता वा प्रतीयत इति । एवमपि समानाधिकरणेनेति वर्तते । व्यधिकरणत्वात्समासो न प्राप्नोति । किं हि वचनान्न भवति । यद्यपि तावद्वचनात्समासः स्यात् । मृगीव चपला मृगचपलेति समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति । एवं तर्हि तस्यामेवोभयं वर्तते । एतच्चात्र युक्तं यत्तस्यामेवोभयं वर्तते, इतरथा हि बह्वपेक्ष्यं स्यात् । यदा तावदेवं विग्रहः क्रियते तदा शस्त्रीश्यामा, एवं देवदत्तेति तदा श्यामेति देवदत्तायामपेक्ष्यं स्यात् । यदाप्येवं विग्रहः क्रियते शस्त्रीश्यामा देवदत्तेति तदापि श्यामेति शस्त्र्यापेक्ष्यं स्यात् । यदा शस्त्रीश्यामा चासौ श्यामा च शस्त्रीश्यामेति तदा न किञ्चिदपेक्ष्यते, सामानाधिकरण्यं च भवति ।

नन्वेवं सति शस्त्रीशब्दस्य देवदत्तायां प्रवृत्तिनिमित्तमनिर्दिष्टं भवति प्रतीयमानं भविष्यतीति चेत् किं तदिति पृच्छामि । यदि श्यामत्वमेव ? श्यामेति शब्दस्योक्तार्थत्वादप्रयोगः प्राप्नोति । नहि गुणवृत्त्या प्रतिपादितेषु गुणेषु तदभिधानाय गुणवचनः प्रयुज्यते, न हि भवति पुरुषोऽयं व्याघ्रशूर इति ।

अथानभिहितं तैक्ष्ण्यादिकमुपादाय शस्त्रीशब्दो देवदत्तायां वर्तते तर्हि तीक्ष्णश्यामगुण-वचनयोः खञ्जकुणवत्समासे उपमानानि सामान्यवचनैरिति विरुध्यते, श्यामशस्त्रीति प्रयोगः प्राप्नोति ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

ननु पक्षत्रयेऽपि दोषदर्शनात् पक्षान्तराभावाच्च किन्तु भवितव्यमेवोपमानसमासेन भवितव्यम् । किन्तु पूर्वोत्तरपक्षौ व्युदस्य मध्यमे पक्षे शस्त्रीव श्यामा देवदत्तेत्यवैयधिकरण्येऽपि वचनसामर्थ्यात् ।

ननूक्तं तत्र मृगचपलेति समानाधिकरणलक्षणः पुंवद्भावो न प्राप्नोति । नैवम् । नेह पूर्वपदं शस्त्रीत्वेन विवक्षितमपि तु मृगत्वजातिमात्रेण यथा मृगक्षीरं कुक्कुटाण्डमिति । उपमानसमासे गुणवचनस्य विशेषभावत्वात् सामान्यवचनत्वाप्रसिद्धिः । यतः श्यामाशब्दोऽयं सादृश्यसिद्धये शस्त्रीशब्देनाभिसम्बध्यमानो विशेषवचनः सम्बध्यते । तेनैवं श्यामत्वस्य उभयत्र भावात्तद्वाचकत्वाच्च शब्दसामान्यवचनत्वप्रसिद्धेः । न चावश्यं स एव सामान्यवचनः । यो बहूनां सामान्यमाह, द्वयोरपि यः सामान्यमाह, सोऽपि सामान्यवचनः ।

अथवा सामान्यवचनैरित्येतेन सर्वश्च शब्दोऽन्येनाभिसम्बध्यमानो विशेषवचनः सम्पद्यते । तत एवं विज्ञास्यामः प्रागभिसम्बन्धाद्यः सामान्यवचन इति ।

नन्वेवं सत्युपमितं व्याघ्रादिभिरित्यत्र सामान्याप्रयोगग्रहणमतिरिच्यते । व्याघ्रादयोऽपि भेदोपनिबन्धनस्येवादेः प्रयोगे यदोपमान एव वर्तन्ते तदा सामान्यप्रयोगमपेक्षन्ते पुरुषोऽयं व्याघ्र इव शूरः सिंह इव बलवानिति । अभेदोपक्रमे चाभिधाने सम्बन्धनिमित्तस्योपमानशब्दैरेव अन्तर्भावितत्वादप्रयोगः सामान्यशब्दस्येति । अप्रयोगेऽपि च सामान्यधर्मावसायश्चन्द्रमुखवद्भवि-ष्यति । तदुक्तं, सिंहो व्याघ्र इति पूजायां, श्वा काक इति कुत्सायामिति ; नैवम्, यद्यन्त-र्भूतोपमानकुत्सार्थं सम्बन्धप्रतिपदो व्याघ्रादिशब्दैरुपमेयं पुरुषादिपूजार्थं वाभिधीयते । तथापि तन्निमित्तस्यानेकत्वान्नियमाय निमित्ततृतीयान्तशौर्यादिपदप्रयोगो न विरुध्यते । पुरुषोऽयं व्याघ्रः शौर्येणेति भिन्ने हि वस्तुन्यभेदोपचारः सारूप्यमात्रं गमयेन्न तस्यात्मातिशयं ; यथा हि सुमनायते दुर्मनायते अभिमनायत इति सुदुरभीनां भवत्यर्थविशेषणपक्षे प्रत्ययेनोपात्तार्थानामपि प्रत्ययस्य रूपाभेदादनवसीयमानविभागमुपसर्गार्थमवच्छेत्तुं प्रयोगः । कथं पुरुषव्याघ्रादौ तस्याः पूजाया निमित्तभेदसम्भवे नियमाय सदृशभागोपनिपाती शब्दः प्रयुज्यत इति । एवमयमेकार्थी-भावस्तद्धिताख्यातयोरपि अनन्तप्रकार एव द्रष्टव्यः । तत्र तद्धिते सामान्येन त्रिधा, सम्बन्ध-विषयः, कारकविषयः, स्वार्थविषयश्च । तेषु सम्बन्धो द्विधा, प्रधानमप्रधानं च । प्रधानं यथा– वसिष्ठस्यापत्यं वासिष्ठः, चाषाणां समूहश्चाषमिति । कारकं द्विधा, प्रधानमप्रधानंच । प्रधानं यथा— विषेण वध्यो विष्यः शत्रुः, पदमस्मिन् दृश्यं पद्यः कर्दम इति । अप्रधानं यथा— व्याकरणं वेत्ति अधीते वा वैयाकरणः, अक्षैर्दीव्यत्याक्षिक इति । स्वार्थो द्विधा– मुख्य उपचरितश्च । मुख्यो यथा— यव एव यावकः, मणिरेव माणिक इति । उपचरितो यथा— कुशाग्रीया बुद्धिः, काकतालीयमिव काकतालीयो न्याय इति । आख्यातेऽपि त्रिधा, कारकेण, सम्बन्धिना,

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रादिभिश्च । कारकेण यथा– अभृशो भृशो भवति भृशायते, शब्दं करोति शब्दायते, हस्तिना अतिक्रामति अतिहस्तयति, कष्टाय कर्मणे क्रामति कष्टायते, पाशान्विमोचयति विपाशयति, प्रासाद इवाचरति प्रासादीयतीति । सम्बन्धिना यथा— व्याकरणस्य सूत्रं करोति व्याकरणं सूत्रयति, कंसस्य वधमाचष्टे कंसं घातयति, आरात्रेर्विवासमास्ते रात्रिं विवासयति, पुष्येण चन्द्रस्य योगं जानाति पुष्येण चन्द्रं योजयति, माहिष्मत्यां सूर्योद्गमं प्राप्नोति माहिष्मत्यां सूर्यमुद्गमयति, कालस्य गमनमुपविष्टः प्रतिपालयति कालं गमयतीति ।

प्रादयः पुनः षोढा– वाचकाः, द्योतकाः, सहाभिधायकाः, विशेषकाः, निरर्थकाश्चेति । ते च क्रिययैव सम्बध्यमानाः क्रियाप्रधानत्वादाख्यातस्य तद्व्यपदेशभाजो भवन्ति । तत्रोपसर्गाणां वाचकत्वं यथा– प्रादयो गताद्यर्थे प्रथमया, प्राचार्यः, प्रान्तेवासीति । अत्यादयः क्रान्ताद्यर्थे द्वितीयया, अतिखट्वः, अतिमाल इति । अवादयः क्रुष्टाद्यर्थे तृतीयया, अवकोकिलम्, अवमयूरामिति । पर्यादयो ग्लानाद्यर्थे चतुर्थ्या, पर्यध्ययनः, परिप्रवचन इति । निरादयः क्रान्ताद्यर्थे पञ्चम्या, निर्वाराणसी, निष्कौशाम्बिरिति । एवं प्रपतितः पर्णः प्रपर्णः, प्राचीन-पलाशः, सङ्गता आपोऽस्मिन्निति समापम्, सङ्गतमक्षेण समक्षमिति ।

धातुलीनस्यैवार्थविशेषस्य प्रकाशकत्वं द्योतकत्वम् । द्योत्यश्च तदन्यः । तत्सदृशस्तद्विरुद्ध-स्तदभावस्तदुत्कर्षस्तदपकर्ष इति षडर्था भवन्तीति । तेषु तदन्यो यथा– प्रतीक्षते, उपक्रमत इति । तत्सदृशो यथा— संवदति, अनुकरोतीति । तद्विरुद्धो यथा— प्रतिष्ठते, उन्मज्जतीति । तदभावो यथा— वियुज्यन्ते, प्रसरतीति । तदुत्कर्षो यथा– प्रगल्भते, अतिक्रामतीति । तदपकर्षो यथा— विहसति, प्राश्नातीति । अत्र च योऽसौ क्रियात्मभूतो धर्मः कालहरणादि-स्तद्धात्वभिहितमेवासत्त्वभूतमनभिदधत् प्रादिरवद्योतयति । यथाऽक्षिनिकोचादयोऽनभिदधत एवार्थान् प्रदर्शयन्ति, एवं क्रियास्थान् प्रारम्भादीनब्रुवन्त एव प्रादयोऽवद्योतयन्ति । धातोरेकाकिनः क्रियाविशेषाभिधानासामर्थ्ये सहकारिभावः सहाभिधायकत्वं तत्रान्तरङ्गो बाह्यः अव्यभिचारी व्यभिचारी व्यवहितः सविशेषश्च सहाभिधायको भवति । तेष्वन्तरङ्गो यथा— सङ्ग्रामयते, असङ्ग्रामयत । बाह्यो यथा— अनुरुध्यते, अन्वरुध्यत । अव्यभिचारी यथा— अधीते, अध्येति । व्यभिचारी यथा– आचामति, संधुक्षयति । व्यवहितो यथा — पुच्छमुद-स्यत्युत्पुच्छयते । सविशेषो यथा— सेनया अभियाति अभिषेणयति, वीणयोपगायति उपवीणयति । सहार्थाभिधाने तूपसर्गयोर्भेदप्रतिपत्तिः कथम् ? यद्यपि धातुरुपसर्गं न व्यभिचरति व्यभिचरत्येवोपसर्गो धातुम् । अतः शक्यतेऽन्वयव्यतिरेकाभ्यां भेदः कल्पयितुम् । यावानयं समादिरुपसर्गोऽन्यत्र दृष्टः इहापि तावानेव भवितुर्भवतीति । सजातीयेभ्यश्चावच्छेदको विशेषकः । स षोढा, प्रकृतिविशेषकः, प्रकृत्यर्थविशेषकः, प्रत्ययविशेषकः, प्रत्ययार्थविशेषकः, उभयविशेषकः, उभयार्थविशेषकश्च । तेषु प्रकृतिविशेषको यथा विजयते, पराजयते ।

CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

प्रकृत्यर्थविशेषको यथा— सङ्क्रीडाति, सङ्क्रीडते। प्रत्ययविशेषको यथा— विशालं विशङ्कटम्। प्रत्ययार्थविशेषको यथा— अभिमनायते, दुर्मनायते। उभयविशेषको यथा— उपतिष्ठति, उपतिष्ठते। अत्र च प्रादिः प्रकर्षादिकमर्थं ब्रुवाणः क्रियां सामान्येनोपगृह्णाति। न क्रियासामान्यविशेषयोरात्मानं नियमयति। धातुरपि क्रियां ब्रुवन् प्रकर्षादिकमर्थं सामान्येनोपगृह्णाति। न तु सामान्यविशेषयोरात्मानं नियमयति। परस्परोपश्लेषे तु तयोर्विशेषणविशेष्यभावो नीलोत्पलादिवद्भवति। कार्यार्थत्वं यथा— प्रयुङ्क्ते, पराकरोति, अभिषुणोति, प्रणमति, वित्तं, समीपमिति। आत्मनेपदं, परस्मैपदं, षत्वं, णत्वं, तत्वं, ईत्वं च कार्याण्युपसर्गे भवन्ति। निरर्थकत्वं यथा— निह्नुते, निरवञ्जन्ति, प्रलम्बते, संश्रयतीति। अत्र पदोपचयमात्रे प्रादिः प्रयुक्त इति निरर्थकत्वम्। आहुश्च—

स वाचको विशेषाणां स भवेद्द्योतकोऽपि वा।
शक्त्याधानाय धातोर्वा सहकारी प्रयुज्यते॥

क्रियाविशेषको वा स्यात्काव्यार्थं वोपदिश्यते। पदोपचयमात्रेवाऽनर्थकः प्रादिरिष्यते॥

इति। एवमयमनेकरूपः पदैकार्थीभावः। एवं वाक्यार्थीभावोऽपि। तत्राख्यातं साव्ययकारकविशेषणं वाक्यं एकातिङ्वाक्यमित्यादयो विकल्पाः। तत्र चैकवाक्यस्थात् पदादुत्तरयोस्तिङामन्त्रितपदयोर्निघातः। युष्मदस्मदोर्वान्नावादय आदेशाः। वाक्यस्य टेः प्लुत उदात्त इति तु वाक्याचामन्त्यस्य प्लुत इत्यादीनि प्रयोजनान्यभिधीयन्ते। क्रियाकारकाव्ययविशेषणपदार्थानां च परस्परमुपकार्योपकारकभावेनावस्थितानां भावना विधिः प्रतिभा वेति वाक्यार्थः प्रथते। एवं वाक्यानामपि परस्परमुपमानोपमेयभावादिभिरिवादिशब्दप्रयोगे मुक्तकादिष्वेकार्थीभावो भवति। एतेनैकक्रियाकारकाभिनिवेशिनोर्युगलकसन्दानितककलापककुलकादयो वाक्यविशेषा व्याख्याताः। तत्र द्वाभ्यां चतुष्पदीभ्यां युगलकम्, तिसृभिः सन्दानितकम्, चतुर्भिः कीलापकं, पञ्चादिभिः कुलकमिति संज्ञा विधीयते।

एतेनैकप्रघट्टकोपनिबन्धानां सुभाषितानां समूहः सङ्घातः। अनेकप्रघट्टकोपनिबद्धानां तु कोश इत्यपि व्याख्यातम्। नगरर्तूद्यानचन्द्रार्कोदयार्णववर्णनादयस्तु सङ्घातरूपा एव प्रबन्धान्तःपातिनो वाक्यसमूहाः प्रकरणव्यपदेशभाजोऽवान्तरवाक्यतां लभन्ते। तदर्थाश्चैकार्थीभावमनुभवन्ति।

यस्तु तैरुपक्रियमाणो महावाक्यार्थः सर्गबन्धादावाख्यायिकादौ मुखप्रतिमुखगर्भविमर्शनिर्वहणाख्यैः पञ्चसन्धिभिरुपक्षेपपरिकरादिभिश्चतुष्षष्टिसन्ध्यङ्गैरङ्गषोडशकरूपभारत्यादिरूपवृत्तिचतुष्टयेन च यथायोगमुपकृतः कृतान्योन्यविशेषणविशेष्यभावः सुभद्राहरणं जानकीहरणमित्यादिना महावाक्यार्थरूपेण प्रथते स प्रबन्धैकार्थीभावोऽपर इत्याख्यायते।

CC-0 ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

यस्तु तद्रूपरामायणादिप्रबन्धार्थानामवधारणेनोपहितसंस्कारस्य रामवद्वर्तितव्यं न रावणादिवदित्यादिविधिनिषेधप्रतिभाविशेष उपजायते, स समस्तविश्वव्यापी चतुर्वर्गैकहेतुः परो महावाक्यैकार्थोऽर्थमूर्त्या विपरिणतमनादिनिधनमखण्डं शब्दब्रह्मेत्युच्यते ।

अखण्डः सैष वाक्यार्थः शब्दब्रह्मेति गीयते ।
शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छति ॥

इदमाद्यं पदस्थानं सिद्धिसोपानपर्वणाम् ।
इयं सा मोक्ष्यमाणानामजिह्मा राजपद्धतिः ॥

उक्ताश्चतस्रोऽथ पुनश्चतस्रः
शब्दार्थसम्बन्धभिदाः क्रमेण ।
चतस्र एवाथ वचोविशेषे
निषेदुषीस्ताः परिकीर्तयामः ॥

इति महाराजाधिराज श्री भोजदेवविरचिते शृङ्गारप्रकाशे
सापेक्षशब्दशब्दशक्तिप्रकाशो नाम अष्टमप्रकाशः
समाप्तः ॥




CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

श्रीशृङ्गारप्रकाशग्रन्थस्थानां प्रथमाद्यष्टमप्रकाशान्तभागसंग्रथितानां पद्यानां

## वर्णानुक्रमसूची ·




| पद्यानामादिभागः. | पत्रसंख्या. |
|---|---|
| **अ** | |
| अइदिअर किंणपेच्छसि. | २२४ |
| अकर्मकत्वे सत्येवं | ५१ |
| अकुञ्चितप्रेमनिरूपितक्रमं | ८७ |
| अखण्डः सैष वाक्यार्थः | ३०४ |
| अगणिअणयणायासा | २३६ |
| अग्रशालमधिरुह्य | १८३ |
| अङ्कुरिते पल्लविते | २३० |
| अङ्गहिंगिहसुगच्छाडि | २३८ |
| अङ्गेनाङ्गं प्रतनु तनुना | २६८ |
| अच्छिन्नमेखलमलब्ध | १ |
| अजन्मा पुरुषस्तावत् | ८४ |
| अजित्वा सार्णवामुर्वीं | २७५ |
| अडादीनां व्यवस्थार्थं | ६१ |
| अण्णत्तवच्च बालिअ | २४९ |
| अण्णं लडहत्तणअं | २३६ |
| अत एवहि वाक्यार्थ | २१७ |
| अत एव पदं लोके | २९५ |
| अतहट्टिएवि तहतह | २१९ |
| अन्तर्भूतणिजर्थानां | १४६, १५० |
| अन्तस्थत्वं बहिष्ठत्वं | १३६ |
| अत्ता एत्थ णिमज्जइ | २४७ |
| अत्रार्धकुङ्कुमेत्युक्ते | २१९ |
| अत्रापि पक्षे पूर्वस्मिन् | १३५ |
| अतिथिं नाम काकुत्स्थात् | ९५ |
| अतिक्रान्तसुखाः कालाः | २३७ |
| अतोऽत्र किञ्चिद्भवतीं | १८१ |
| अथ वासवस्य वचनेन | १२१ |
| अत्थविसेसा णहि तह | २ |
| अथाजिनाषाढधरः | ११७ |
| अथाह वर्णी विदितः | १५८ |
| अथानुवृत्ति व्यावृत्ति | १८९ |
| अथाभिव्यक्तिसामर्थ्य | १८८ |
| अथेदं रक्षोभिः कनक | २२८ |
| अर्थेषु च प्रयोगेषु | २१० |
| अथो विभक्त्यर्थविधः | १९० |
| अथोपरिष्टाद्भ्रमरैः | ११८ |
| अदूरविप्रकर्षात्तु | २२१, २५२ |
| अदृष्टत्वात्प्रतिनिधेः | १४५ |
| अध्यासामासुरुत्तुङ्ग | २७५ |
| अध्रुवेन निमित्तेन | २०७ |
| अनन्तरोक्तस्सम्बन्धः | ५५ |
| अन्यथैवाग्निसंयोगात् | २१० |
| अन्यथैव प्रवर्तन्ते | २९५ |
| अन्यथैव मतिश्शाब्दी | २९५ |
| अन्यत्प्रवृत्तौ शब्दस्य | २११ |
| अन्ये पूर्वापरीभूत | २११ |
| अनाश्रिते तु व्यापारे | १०१ |
| अनिराकृततापसम्पदं | २२५ |
| अन्विष्यद्भिरयं चिरात् | २२९ |
| अन्वितस्याभिधानेऽपि | २८६ |
| अनुस्कुनुहि मा मन्तून् | ३ |
| अनुवृत्तिर्हि येष्वस्य | १८९ |
| अनुरागवती सन्ध्या | २२८ |
| अनुस्यूतेव भेदाभ्यां | ६६ |
| अनेन यूना सह पार्थिवेन | १७९ |
| अनेन सार्धं विहराम्बु | १७९ |
| अपकर्ताऽहमसीति | १६६ |
| अप्यवस्तुनि कथाप्रवृत्तये | २४५ |
| अपाये यदुदासीनं | १५२ |
| अप्रातिकूलिकतया | २ |
| अप्राप्यपर्वतमिमानि | १७४ |
| अपि प्रसन्नेन महर्षिणा | १६९ |
| अपूर्वं कालशक्तिं वा | ५७, १४० |
| अपेक्ष्य मध्यमः पूर्वं | २६० |
| अभिधा भावनामात्रः | २१२ |
| अभिधा च विवक्षा च | २६७ |
| अभिधात्री मता शक्तिः | २९६ |
| अभिधेयाविनाभूत | २२३ |
| अभिनवकरिदन्तच्छेद | २३३ |
| अभिमुखे मयि संहृतं | १७० |
| अभ्युद्गता पुरस्तात् | २२४ |
| अभूदभूमिः प्रतिपक्ष | ११७ |
| अमंक्ष्यद्गसुधातोये | १६५ |


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

अम्बुरुखोच्चिअ २६९
अमृतममृतं चन्द्रः २२७
अमृतात्मनि पद्मानि २३२
अयमान्दोळितप्रौढ ९२
अयमालोहितच्छायो २३२
अयं निजः परो वेति २५७
अलंकृताप्यन्वय १७९
अलभ्यशोकाभिभवा १८०
अव अक्खो ऋी समु १०३
अवऊहिअ पुप्पादि २३०
अवचनं वचनं प्रिय १६९
अवधेरपि वाच्यत्वं ४५
अवनिपवनवह्निव्योम २७५
अवस्था वस्तूनि प्रथयति २७६
अवस्तुनिर्बन्धपरे १७५
अव्ययानि निपाताश्च ३७
अविभागोऽपि बुद्ध्यात्मा २२०
अविग्रहागतादिस्था ५१
अश्वधीश्शाबलेयादौ १८८
अशोकनिर्भर्त्सित १७६
अष्टमीचन्द्रके कुन्द १४५
असकलहसितत्वात् २६९
असंभृतं मण्डनं ११७
असौ शरणयश्शरणा २६८
अस्तीत्यालोचनाज्ञानं २१८
अस्मिन्नपारे संसारे २४०
अस्मिन्नीषद्वलितविषम २२५
अस्त्युत्तरस्यां दिशि ११९
अस्तु वापि तरप्तस्मात् २६०
अस्यौपम्यद्वयस्यापि ४७
अस्वच्छे सलिलात्मनि ११६
अहपे . . तिववगा १२०
अहं वा कुम्भकर्णो वा १५८
अर्हतो या क्रियाकर्तुः ४७
अक्षत्रारिकृताभिमन्यु २४४


आ


आकृतिग्रहणा जातिः २०८
आकारैश्च व्यवच्छेदात् २०७
आकांक्षासन्निधिप्राप्त २७८
आख्यातानां तु वाच्यो २११
आंखीजणुकणांस १०३
आज्ञापय ज्ञातिविशेष १७५
आज्ञातं स जटायुरेषः २४२
आत्मस्थितं गुणविशेष १
आत्मनेपदरूपेण ९०
आत्मानमात्मना वेत्सि २३२
आद्यमेव हि विज्ञानं १८८
आद्यूनस्सन् गृहिण्येव १७३
आर्द्रकेसरसुगन्धि १७५
आधारत्वमिव प्राप्ताः १४८
आनन्त्यव्यभिचाराभ्यां २७९
आप्याययति मित्रोऽयं १८३
आभरणस्याभरणं २३०
आभावनोदयमनन्य २
आभासोऽवगमो व्यक्तिः १४७
आयतीगवमागच्छति ७६
आयामियामिनीभोग १४१
आयान्त्यपि न तत्पिण्डं १८८
आरूढो मलयाचलं २३४
आलोचनान्ताच्छ्रवणे १८२
आशुशिशशानो वृषभो १२०
आश्लेषे प्रथमं क्रमात् २४६
आस्कन्दनदलत्कुन्द १४१
आसाइअंअणाए २४७
आस्तां विधिपदं तावत् २१४


इ


इङ्गुदीपादपः सोयं २२४
इतस्स दैत्यः प्राप्तश्रीः २४५
इति प्रविश्याभिहिताः १७६
इति प्रायोभावाः १७५
इतो गमिष्याम्यथ ११७, १७८
इत्यौषधिप्रस्थविलासि ११९
इत्थं विधिज्ञेन पुरो ९४
इत्थं तयोरध्वनि ११८
इदमप्यपरं हस्त १९०
इदमन्धं तमःकृत्स्नं २२०, २३७
इदमम्लानमानायाः २३५
इदमाद्यं पदस्थानं ३०४
इन्द्रियैरन्यथाप्राप्तौ १३८
इयं च दुर्वारमहा ११८
इयं गेहे लक्ष्मीरियं २८०
इवशब्दप्रयोगे तु ५३
इहाधीती पूर्वं ९६
इहाप्यानीयमानायां १९०


उ


उक्तः क्रमात् द्वादशभेद १२५
उक्ता षोढैवमेषापि ६
उक्ताश्चतस्रः प्रथमाः २६७
उक्ताश्चतस्रोऽथ पुनः ३०४
उच्यतां स वचनी २४२, २४४
उच्छिणसुपडिअ कुसुमं २४८


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

उत्तारणाय जगतः ५०
उत्तालालकमञ्जनानि १४१
उत्फुल्लस्थलनलिनी २२५
उदारकीर्तेरुदयं ९२
उद्वेजयत्यङ्गुलि १८१
उन्नमय्य सकचग्रहं १८३
उन्मीलितं तूलिकयेव ११७
उपमानोपमेयत्वं ४७
उपाधिरेवं त्रिविधः १९०
उपायमात्रान्ननात्वं २०३
उपाध्वं तत्पान्थाः २२८

ऊ

ऊरुमूलचपलेक्षणं १३१

ए

एक इह जीवलोके ५९
एकदू असलोणीअ १०२
एक एव हि कालोऽस्याः १९०
एकातपत्रं जगतः १९२
एका हि अद्धिहि २३८
एति जीवन्तमानन्दः २३१
एते वयममी दाराः १८३
एद्दहमेत्तत्थणि आ २४५
एवमिन्द्रियसुखस्य १७४
एवं डित्थादिशब्दानां २०८
एष्टव्या बहवः पुत्राः २५०
एस अवसाणविरसो २२९

ओ

ओदने साध्यमानेऽपि २१२
ओप्यन्ते चोद्ध्रियन्ते च २७८

औ

औदासीन्यदशायां तु २१५
औषसातरभयात् ९४

क

क . . . ए धूमं धारे ९६
कण्डूयति न यो मर्म ४
कत्तोसंवडइममहं २२६
कर्तृकर्मव्यवहितां १५४
कर्त्रादिवचनास्तावत् २११
कदलीप्रकाण्डरुचिर ९५
कदा नौ सङ्गमो भावी २४५
कनकफलकस्फारजघना २३४
कन्यारत्नमयोनिजन्म १२०
कन्यान्तःपुरमेव ५४
कपोलौ लोहितायेते ४
कमलमनम्भसि कमले २२५
कामिशुध्यन्तु यज्वानः ४
करौ धुनाना नव ९५
कलकणितगर्भेण १८१
कलाभिः पृथगर्थाभिः १४२
कविः सृजति काव्यानि ३
कस्स व ण होइ रोसो २५०
कस्य नावनतिं कुर्यात् २३०
कस्य नो कुरुते मुग्धे १०२
कंबलि आल एकं ते १०३
कश्चित्सम्भाविनो भेदाः ६२
कश्चित्स्वल्पेऽप्यर्थे प्रचुर २४०
का त्वं शुभे कस्य १७५
कार्यज्ञः प्रष्टव्यः २७२
कार्यकारणभावो हि २०९

कारकत्वं च पक्षेऽस्मिन् १३४
कालः कालविदामेकः १४२
कालात्मानमनाश्रित्य १४३
कालभावाध्वगन्तव्याः १४८
कालाध्वभावदेशानां ,,
कालानुपाति यद्रूपं ३८, १३६
कालो वा विश्वरूपात्मा १४३
काषाः पुष्यन्ति मेघान्ते १५४
किं किरातेन यच्चक्रे २४१
किं गतेन नहि युक्तं २४२
किञ्चिच्छेषनिशातुषार १७३
किं कस्स वारएणं २८०
किन्तु स्वहेतोस्सा व्यक्तिः १९०
किं द्वारि दैवहतिके ५८, २२६
किमिदानीं फलस्यैव २१६
किमिव हि मधुराणां २२९
कियन्मानं जलं विप्र १०४
कुचद्वन्द्वे तन्वि द्विप १७०
कुत्साप्रशंसातिशयैः ५८
कुत्सितत्वेन कुत्स्यो वा ५९
कुतो भवानध्वनि ९५
कुमुदानि प्रयुज्यन्ते ११६
कुमुदानि निमीलन्ति २३१
कुलेन कान्त्या वयसा १९२
कुविआओ पसा २२४, २३५
कुशलं तस्या जीवति ११६
कृतोर्मिलेखं शिथिलत्वं १७४
क्रममारचय्य च १२१
क्रमात्सदसतां तेषां १३८
क्रमेण युगपत्पूर्वं १४४
क्रियमाणं तु यत्कर्म ८६


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

क्रियायाः करणं तस्य १००
क्रियाकृता विशेषाणां १४७
क्रियानिमित्त संसर्ग १३५
क्रियाभेदात्तथैकस्मिन् १४२
क्रियामन्ये तु मन्यन्ते ५७, १४०
क्रियाया द्योतको नायं १७
क्रियायाः परिनिष्पत्तिः १५०
क्रियायां कालोन्तर्भवति १६०
क्रियायाश्च पदार्थत्वात् २२२
क्रियाविशेषजन्यानां १६, १८६
क्रियाविशेषाः संघातैः ६१
क्रियाविशेष एवासौ २१५
क्रियाविशेषको वा स्यात् ३०३
क्रियाशब्दास्तु विविधाः २११
क्रियोपाधिश्च सम्भूत १६२
क्रोधं प्रभो संहर ९२, १६६
केनासीनः सुखमकरुणे २३३
केदमन्यत्र दृष्टं चेत् १८९
कौमारी सा भवेद्भार्या ५०
कंवळि आळ एकं ते १०३


ग


गअणंच मत्तमेहं २३६
गङ्गायां घोष इत्यादौ २१०
गच्छ गच्छसि चेत्कान्त २३९
गच्छेति वक्तुमिच्छामि २०
गतमस्तं यथार्केण ४०
गतया पुनः प्रतिगवाक्ष ९३
गतस्सकालो यत्रासीत् २४०
गतेऽर्धरात्रे परिमन्दमन्दं २०
गन्धर्वपुरसुरायुध २२६
गर्भेष्वम्भोरुहाणां २५१
गान्धर्वमस्त्रं तदतः ११८
गामधास्यत्कथं नागः १६५
ग्लानिच्छेदिक्षुत्प्रबोधाय १७३
गिरोभिर्ब्रह्म वामशीः ५
गुणः कृतात्मसंस्कारः १४२
गुणं शुक्लादिशब्दास्तु २११
गुणभावेन साकाङ्क्षं २७८
गुणभूतैरवयवैः १३७
गुणानामेव दौरात्म्यात् २२९
गुणानुरक्तामनुरक्त ९१
गुणानुरागमिश्रेण २१९, २२५
गुणैकनियतास्तावत् २११
ग्रसमानमिवौजांसि २२७
ग्रहीतृग्रहणग्राह्यं २२०
गेहाजिरेषु नवशालिकणा ९६
गेहाद्याता सरितं १८०
गोनासाय नियोजिता १८१
गोलाणईए तूहे २२६
गौर्गौः कामदुघा सम्यक् २४८
गौरी मा तस्य तत्यैताः १७३


च


चकितहरिणीहारिनेत्र २३५
चटच्चटितिचर्मणि २१
चञ्चद्भुजभ्रमित ३०
चञ्चग्रचुम्बितताताम्र १४१
चन्दणिहिपक्कचलणा २७१
चन्द्रज्योत्स्नाविशद २३१
चन्द्रमाः पीयते देवैः २३२
चपलो निर्दयश्चासौ २३९
चर्मणि द्वीपिनं हन्ति ३६, १५५
चयापचयसङ्घात २०६
चरन्ति चतुरम्भोधि १०३
चलन्तो देवदत्ताद्याः १३५
चारुता वपुरभूषयत् ९१
चित्तनिर्वृतिविधायि ९१
चिदण्डिमुखिमस्जीनां १५०
चिरक्षिप्रादिभेदे च १४२
चिरक्षिप्रव्यवस्थानं १४२
चुम्बनादलकचूर्ण ९३
चुम्बिज्जइसअहुत्तं २३६
च्युतामिन्बोर्लेखां २२५
चूडामणिशिरोरत्न १८३
चोद्यचुञ्चुत्वमुत्सृज्य १९०


छ


छदा . . वळअ दीहिअ २२८
छिन्नेन पतता वह्नौ २०


ज


जनाय शुद्धान्तचराय २२०
जयत्यमलकौस्तुभ १०३
जइविग्गव्डहीजइ १२१
ज्वलन्त्येधांसि न पुनः १३५
जातश्चायं मुखेन्दुस्ते १३६
जातिगुणाज्जातिगुणे ४४
जातिमेवाकृतिं प्राह २०५
जिज्ञासा जायते बोद्धुः २८२
जीविताशा बलवती २४७


ठ


ठिअमठ्ठिअं वदीसइ २४०


ण


णमह अवड्ढिअतुङ्गं १०२, २५७
णिअदइअदंसगुणकिद २४७


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

त

तटित्खचयतीवाशाः ३
ततः कुमुदनाथेन १०४
ततः किराताधिपतेः ११७
तत्तदुच्छ्वसितपीतं ९२
तत्वे वा व्यतिरेके वा १४५
तथा कर्त्रा नियुक्तेषु १४६
तथा गतायां परिहास १८१
तथाहि रौति यश्चूते २१७
तथैव जातियुक्तेति १९०
तथोपलक्षणे जातौ २०७
तदभिव्यञ्जिका यत्र १९०
तदंशग्रहणे तस्य १८८
तदागमे तत्प्रतीतेः २११
तदेवास्तु प्रमाणं वा १८८
तदेतत्काकतालीयं २७१
तपः श्रुतं च योनिश्च ८२
तत्प्रयोगावसेयत्वात् ९२
तमन्वगच्छत्प्रथमः १७९
तमस्य लोकयन्त्रस्य १४२
तमातिथेयी बहुमान ११७
तया दुहित्रा सुतरां १८१
तया विभज्यमानोऽसौ १४२
तस्मात्कारकचक्रेण १३५
तस्मात्क्रियान्तराभावात् १३५
तस्मात्पूर्वाक्षसम्पाते १८९
तस्मात्सकृदभिव्यक्ता १९०
तस्मादस्मिन्नभिव्यक्ता १९०
तस्मादगोनिवृत्तं तत् ,,
तस्मै हिमाद्रेः प्रयतां १७७
तस्मिन् क्षणे पौरविला ११९
तस्याः प्रकामं प्रिय १४०
तस्यैव वाचयताभाव २११
तत्स्वभावविशेषत्वात् ३९
तह कमलक्कमलळचन्दो २२७
तं विनिष्पिष्य काकुत्स्था ११८
त्वं जीवितं त्वमसि २०, २४४
त्वन्मुखं त्वन्मुखमिव २३२
त्वमहनीव निवर्हय १७८
त्वमेव हव्यं होता च २५७
तात्पर्यमेव वचसि १, २२१
ताम्बूलबहलरक्तः २२४
ताभ्यामुत्पादितो वत्सः १९०
तामस्मदर्थे युष्माभिः ९२
ताला जाअन्ति गुणा २२७
तालैश्शिञ्जिद्वलयसुभगैः २२९
तावदेव विनिश्चित्य १३४
तासां मुखैरासव ११९, १२१
तां पुलोमतनया ९२
तां प्रत्यभिव्यक्त १८१
त्यागरूपं प्रहातव्ये ४९, १४९
तिग्मं धाम चिरं चकास्ति ११६
त्रिधोपसर्जनं त्रेधा ८४
तीर्थेषु सत्सु द्विज २७५
तीव्रः प्रतापो मधुरं २०४
तुग्ग अढोब्भरमुहळे १२०
तुरङ्गकान्तामुख २३५
तुषारलेशाकुलितोत्पला १७०
तुहअसमं सोहग्गं २७१
तेच्चिअजीआतेच्चे २८०
तेनाद्रिबन्धो ववृधे १०४
तेनान्विताभिधानं हि २९६
ते पुच्छिज्जहि पत्तडि २७३
तेऽमी क्रिया च कालश्च १५९
तेषामुच्चावचार्थ ६२, १८४
तेषां न द्रव्यपर्यन्ता २११
ते हिमालयमामन्त्र्य ११९
तैश्शरीरं च वाक्यानां १२०
तैक्ष्ण्यगौरवकाठिन्य १४५

द

दण्डादण्डि न कुर्वन्ति ७६
दत्तमात्तमदनं दयितेन १९२
दत्तानन्दाः प्रजानां २५१
दन्तोज्वलासु विमलोपल २७०
दशरश्मिशतोपमद्युतिं २३५
दातुं वा प्रभवसि मां ९४
दातुः स्थातुर्द्विषां २२४
दानं वित्तादृतं वाचः २४६
द्विङ्मातङ्गघटाविभक्त २४३
दिणिहदिवट्ठहो इति १२१
दिनानि रात्रयः पक्ष १४३
दिलीपानन्तरं राज्ये २७१
दिवाकरकरालात १४१
दुर्वचं त्वदथ मास्म १६५
दूइ तुमं विअणिउणा २३६
दार्ढ्यं यत्र यदा त्वस्याः १९०
देआपसि अणिवत्तसु २४८
देवदत्तादिकुत्सायां ५९
देहेनैवात्मनस्तस्मात् १९०
दैत्याधिपप्राणमुषां २१९
दैवादपत्रमच्छायं २६८
द्रव्यमात्रस्य तु प्रेष १५५
द्रव्यात्मापि च यः कालः १६०
द्वन्द्वो यावद्भिरारब्धः २६
द्वयी सत्ता पदार्थानां १३६


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

द्विरदमदजलौघासार २६१
द्विष्ठोऽप्यसौ परार्थ २६

ध

धन्यास्थ याः कथयतः २५५
धातुप्रकरणाद्धातुः ४
धातोस्साधनयोगस्य ६१
धूपोष्मणा त्याजितं ९३
धृतहेतिरप्यधृत १७३
धृतिः क्षमा दमश्शौचं २३०

न

न केवलेह प्रकृतिः ३७
न च साम्प्रतिकी कुत्सा ५९
न दानेन न मानेन २४६, २७१
नन्वात्मनीयसामान्ये २०६
न नूनमस्ति नोऽश्वः १२१
न प्रसादमुचितं गमिता १७८
नमस्तुङ्गशिरश्चुम्बि २७५
न मीलयति पद्मानि २३२
न रुणत्सीन्द्रियग्रामं ३
न लङ्घयामास महा १७७
नवजलधरस्सन्नद्धोऽयं २४१
न विमुञ्चेति सामर्थ्यं २८८
नवो नवो भवति १२०
न स्रजो रुरुचिरे ९४
न सोऽस्ति प्रत्ययो २१८
न हि गामानयेत्यादौ २९२
न हि डित्थत्वसामान्यं २०८
नाम यस्याभि २३२, २६२
नामापि स्त्रीति संज्ञादि २५४
निघातादिव्यवस्थार्थं ११६
निजनयनप्रतिबिम्बैः २२४
नित्यं विशिष्ट एवार्थे २९०
निर्दिष्टविषयं किञ्चित् १५२
निर्धारणे विभक्ते यः १५४
निपीयमानस्तबका ९२
निमित्तमेकमित्यत्र १९१
निर्माल्यं नयनश्रियः २३७
नियतं साधनं साध्ये २७८
नियन्तृगातिभेदेन १४२
निरपेक्षप्रयोगे या २९६
निरीक्ष्यसंरम्भनिरस्त २७६
निवार्यतामालि किमप्य १९२
निर्वाणभूयिष्ठमथास्य ११९
निर्व्यापारस्य नन्वस्य १३४
निर्विकल्पकवेलायां १८९
निवेदितं निश्वसितेन २४६
निशामुखे प्रदोषे च १४४
निष्पन्नमात्रे कर्तृत्वं १४५
निसर्गभिन्नास्पदं ७४
नीपानान्दोळयन्नेव ३
नीहारजालमलिनः २३८
नूनमुन्नमति यज्वनां १७५
नृपसुतमभितः १८२
नैते सुखस्य जानन्ति २३८
नैसर्गिकी १८०

प

पक्वान्नमिव राजेन्द्र २४६
पडिपक्खमन्तुपुञ्जे २२७
पतयाळूनि चेष्टासु ४
पत्युश्शिरश्चन्द्रकला १९२
पदजातं श्रुतं सर्वं २८६
पदं तद्वन्तमेवार्थं २१०
पदमभ्यधिका २९१, २९३
पदमिह त्रिविधं ८४
पदादपि तदायत्त २०९
पदे पदे कूबरिणः २३४
पदैरेवान्वितस्वार्थं २८७
पपसाअरूपसोधण २३१
परस्परेण स्पृहणीय १६५
परार्थे यः पीडां २३१
परावरविभागार्थं १४२
परिम्लानं पीनस्तनजघन २३७
परिक्षते वक्षसि १७८
पल्लविअं पिवअकर २३०
पल्लवोपमितिसास्य १७०
पश्यतः श्वैतिमं २८९, २९२
पश्यत्यनुगतं रूपं १८८
पाकं हि पचिरेवाह २९२
पाता . . वासिष्विति १२१
पायाद्वो रचितक्रमः २२०
पिअसङ्गमकिंवह्नि २८०
पिण्डसर्वगतत्वे तु १८८
पिण्डेनासीदसञ्जाते ,,
पिपिप्रिय ससस्वयं २१
पिबतु मधु सुगन्धीनि २७०
पिबन्मधु यथकामं २२७
पुत्रस्य जन्मनि यथा १४५
पुनर्ग्रहीतुं नियमः १७९
पुनरपि सुलभं तपः २५५
पुराणं मानवो धर्मः २४४
पुरीमवस्कन्द लुनीहि १७७
पुष्पं प्रवाळोपहितं १८०


CC-0. ASI Srinagar Circle, Jammu Collection. An eGangotri Initiative

